Amarasimha.

# AMARAKOŚA,

WITH

## COMMENTARY AND INDEX.




## सटीकामरकोशः

## शब्दानुक्रमणिकासमेतः

---

*Price One Rupee.*

The Department of Public Instruction, Bombay.

# AMARAKOŚA,

WITH

## THE COMMENTARY OF MAHEŚVARA

ENLARGED BY

RAGHUNATH SHASTRI TALEKAR.

REVISED, ENLARGED, AND IMPROVED

FROM

CHINTAMANI SHASTRI THATTE'S EDITION OF 1882,

BY

VAMANACHARYA JHALAKIKAR,

UNDER THE SUPERINTENDENCE OF

Dr. RAMKRISHNA GOPAL BHANDARKAR,

LATE PROFESSOR OF ORIENTAL LANGUAGES, DECCAN COLLEGE.

FIFTH EDITION. 10,000 Copies.



Bombay:

GOVERNMENT CENTRAL BOOK DEPÔT.

1896.



*Price One Rupee.*

अथ

# नामलिङ्गानुशासनं नाम कोशः

## अमरसिंहविरचितः

तलेकरोपाह्वरघुनाथशास्त्रिणा प्रपञ्चितया महेश्वरकृतामरविवेकाख्यटीकया
समन्वितः पूर्वं द्व्यशीत्यधिकाष्टादशशतीमिते १८८२ खृस्ताब्दे
थत्तोपनामकचिन्तामणिशास्त्रिणा शोधितो मुद्रणेन
प्रसिद्धिमुपगतः, स एवेदानीं

दक्षिणकालेजसंज्ञकविद्यालयस्थसंस्कृतादिप्राच्यभाषाप्रधानाध्याप-
कस्य डाक्टर (पण्डित) भाण्डारकरोपाह्वस्य

रामकृष्णस्य

निदेशमनुवर्तमानेन झळकीकरोपनाम्ना

वामनाचार्येण

पुनः सूक्ष्मया रीत्या संशोधितः, पूर्वं चिन्तामणिशास्त्रिकृतया पाठान्तरशब्दसंनिवेशनेन
स्वपरिवर्धितया वर्णानुपूर्व्यनुसारिण्या कोशस्यशब्दानुक्रमणिकया
सनाथीकृतश्च ।

---

स च

मुंबापुरीवर्तिराजकीयग्रन्थशालाधिकारिणा पुनः प्रकाशितः ।

---

शकाब्दाः १८१७ खृस्ताब्दाः १८९६.

---

मूल्यमेकं रूपकम् ।

# सूचना.

अस्यां हि शब्दानुक्रमणिकायां यो यः शब्दः स्वमस्तके तिर्यग्रेखाद्वयवान् स तत्रैव टीकायां द्रष्टव्यः । यद्यपि शब्दानुक्रमणिका थत्तोपनामकचिन्तामणिशास्त्रिकृताऽऽसीत् तथाऽपि तत्र कोशस्थानां केषांचिच्छब्दानामसमावेशेनापूर्तेस्तेषां शब्दानां समावेशनविधया तत्पूर्तिं कृतवता मया (झळकीकरोपनाम्ना भट्टवामनाचार्येण) संशोधिता पाठान्तरस्थशब्दसंनिवेशेन प्रपञ्चिता चेति बोध्यम् । किं च मूलग्रन्थोऽपि कलियुगस्याष्टनवत्यधिकत्रिचत्वारिंशच्छतीमिते संवत्सरे ( ४३९८ ) [ खृस्त १२९७ वर्षे ] हस्तलिखितेन ताडपत्रपुस्तकेन सह, टीकाग्रन्थोऽपि रामाश्रम्यादिटीकाभिः सह संवादित इति द्रष्टव्यम् ॥

# अथ प्रस्तावना.

---

अयं हि नामलिङ्गानुशासनं नाम कोशः अमरसिंहेन विरचितः, "इत्यमरसिंहकृतौ नामलिङ्गानुशासने"—इति प्रत्येककाण्डसमाप्तौ स्वयमेव लिखितत्वात् । परं तु अयममरसिंहः कदाऽऽसीदिति प्रश्नस्योत्तरतया खृस्ताब्दनामिकाइशशतकस्य ( सन् ११०० ) चरमभागात्पूर्वमेवासीत्—इत्येतावन्मात्रमवसूत्योच्यते । यत उक्तमिताब्दकालिकेन मम्मटेन काव्यप्रकाशे सप्तमोल्लासे ( ३२८ पृष्ठे ) "दैवतानि पुंसि वा"—इत्यमरकोशपङ्क्तिको ऽधारीति । मम्मटस्योक्तमिताब्दकालिकत्वं तु अस्मत्कृतायां काव्यप्रकाशटीकायां बालबोधिन्याख्यायामुपोद्घातप्रकरणे निर्णीतमिति तत एव द्रष्टव्यम् । केचित्तु, विक्रमसमकालिकोऽयममरसिंह इति वदन्ति, तच्चानुपदमेव स्पष्टं भविष्यति ।

अयममरसिंहो बौद्ध एव । तदुक्तं व्याख्यासुधाख्यया ( 'रामाश्रमी'—इति प्रसिद्धया ) भानुदीक्षितकृतया व्याख्यया समेतस्यामरकोशस्याङ्किततपुस्तके पण्डितशिवदत्तशर्मणा—" अयममरसिंहः कदा किंजातीयः कुत्रत्यं महीमण्डलं मण्डयांचकारेति न निश्चितम् । परंतु [ 'अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः'—इत्यादिना ] देवसामान्यनामान्युक्त्वा देवविशेषनामारम्भे 'सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः । समन्तभद्रो भगवान् मारजिल्लोकजिज्जिनः'—इत्यादिना बुद्धनाम्नां लेखनेन बौद्धत्वमवसीयते । केचित्तु—'धन्वन्तरिः क्षपणकोऽमरसिंहशङ्कुवेतालभट्टघटखर्परकालिदासाः । ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य ॥'—इति वैक्रमनवरत्नख्यापकश्लोकतो विक्रमसमकालकत्वममरसिंहस्य वदन्ति । परे तु—'इन्द्रश्चन्द्रः काशकृत्स्नाऽऽपिशली शाकटायनः । पाणिन्यमरजैनेन्द्रा जयन्त्यष्टौ च शाब्दिकाः ॥'—इति पद्यानुरोधेन पाणिनिसमन्तभद्रयोरन्तरालभवत्वं ब्रुवते ॥ अत्रेदं बोध्यम्—इदं न क्रमबोधकम्, पाणिनिमहाभाष्यप्रवृत्तिसमकालकनिष्पत्तिकचान्द्रव्याकरणकर्तृचन्द्राचार्यस्य पाणिनितः प्राग्लेखनात् । अस्य वैयाकरणत्वं तु 'अमरसिंहो हि पापीयान् सर्वं भाष्यमचूचुरत्'—इति पद्यात्सकलभाष्यतत्त्वज्ञत्वस्य ( संपूर्णमहाभाष्यतत्त्वज्ञत्वस्य ) प्रतीतेः प्रतीतमेव । इत्थं भङ्ग्यन्तरेणोक्तिस्तु बौद्धत्वेन सकलवैदिकविरुद्धत्वात्"—इति ।

बौद्धत्वादेव नानार्थवर्गे 'धर्मराजौ जिनयमौ'—इति श्लोके जिनशब्दस्य पूर्वनिपातेन निर्देशोऽमरसिंहेन कृतः । तथाहि—'जिनयमौ'—इत्यत्र 'तापसपर्वतौ'—इत्यादाविव "अल्पाच्तरम्" ( २।२।३४ )—इत्यादिसूत्राणामप्राप्त्या "अभ्यर्हितं च"—इति वार्तिकेनैव जिनशब्दस्य पूर्वनिपातः । अभ्यर्हितत्वं च पूज्यत्वम्, तच्च बौद्धानां मते बुद्धापरपर्यायस्य जिनस्य देवविशेषत्वात्स्पष्टमेव । यद्ययममरसिंहो बौद्धो न स्यात्, किंतु वेदानुसार्येव स्यात्तदा वैदिकमते जिनापेक्षया यमस्यैवाभ्यर्हितत्वात् छन्दोभङ्गाद्यभावाच्च 'यमजिनौ'—इत्येव वदेत् ।

किंचास्य बौद्धत्वे बहवः प्राचीना अमरकोशटीकाग्रन्था अप्यानुकूल्यं भजन्ते ।

तथाहि—'यस्य ज्ञानदयासिन्धोः'—इति प्रथमश्लोकव्याख्यानावसरे 'हे धीराः ज्ञानदयासिन्धोः ज्ञानदयाभ्यां सिन्धुरिव सिन्धुस्तस्य अगाधस्य यस्य अनघाः गुणाः सन्ति स भगवान् श्रिये अमृताय च सेव्यतामाराध्यताम्'—इत्यभिप्रायकं विस्तरेणान्वयं प्रदर्श्य, विशेष्यानिर्देशप्रयुक्तदोषपरिहारायोक्तं रायमुकुटीकारेण—"अत्रानुक्तोऽपि वाक्ये लक्ष्यार्थो ज्ञानदयादिभिः स्फुटं प्रतीयते। यथा—'अयमुदयति मुद्राभञ्जनः पद्मिनीनामुदयगिरिवनालीबालमन्दारपुष्पम्'—इत्यादावनुक्तोऽपि सूर्य उदयतिना पद्ममुद्राभञ्जनादिना च लक्ष्यते। अन्ये तु-क्वचिद्विशेषणमपि विशेष्यप्रतिपत्तिकरम्, यथा—'निधानगर्भामिव सागराम्बराम्'—इति। एवमिहापि ज्ञानदयासिन्ध्वादिविशेषणं विशेष्यप्रतिपत्तिकरमित्यदोष इत्याहुः। इह तु बुद्धादिपदोल्लेखे कृते दक्षिणापथपथिकसार्थानामनुपादेयता स्यात्, कृष्णादिपदोद्देशे त्वनुपादेयत्वात् तत्कालबलितमदोद्धुराणां बौद्धानामित्युभयसाधारण्येनोपादेयतार्थं मुख्यानुद्देशः"—इति।

अमरदीपिकायामप्युक्तम्—"समुद्रपक्षे सर्वज्ञानलक्षणां धियं बुद्धिं रान्ति गृह्णन्तीति धीराः देवाः। बुद्धपक्षे भो धीराः पण्डिताः स बुद्धः सेव्यताम्"—इति।

त्रिकाण्डरहस्ये रामनाथेनाप्युक्तम्—"यदाऽसौ कविरमरसिंहो ग्रन्थमेतं चकार तदानीमनादृतवेदपथानां मदोद्धुराणामतिप्राबल्यमासीत्। अत एव कृष्णादिपदोल्लेखे तेषामनुपादेयता स्यात्, बुद्धादिपदोल्लेखे तु दक्षिणापथप्रवृत्तानामनुपादेयता स्यादित्युभयेषां तत्रोपादेयतार्थमस्य मङ्गलश्लोकस्य तादृशी गूढार्थता"—इति।

अमरकोशोद्घाटने क्षीरस्वामिनाऽपि—"यस्य भगवतो ज्ञानदययोः बोधकरुणयोः सिन्धोः समुद्रस्येव गम्भीरस्य अनघाः निष्पापाः गुणाः क्षान्त्यादयो बोधिपक्ष्याः सप्तत्रिंशत्"—इति प्रथमश्लोकव्याख्यानावसरे उक्त्वा द्वितीयश्लोकस्यावतरणं दत्तम्—"इति ग्रन्थारम्भेऽभीप्सितसिद्धिहेतुं जिनमनुस्मृत्य श्रोतृप्रोत्साहनार्थं स्वप्रवृत्तिप्रयोजनं साभिधेयमादिवाक्येनाह समाहृत्येति"—इति।

एवं च यत्तूक्तं भानुदीक्षितेन "स्वामी तु (क्षीरस्वामी तु) 'जिनमनुस्मृत्य'—इति स्मरणलक्षणं मङ्गलमाह, तन्न। जिनवाचकपदस्यात्रादर्शनात्। सामान्यशब्दानां जिनलक्षणविशेषपरत्वेन व्याख्यानस्य वैदिकानामनुचितत्वात्, अमरकर्तुः (नामलिङ्गानुशासनकर्तुः) जैनत्वे प्रमाणाभावाच्च"—इति, तत्तु अनादेयमेव। जिनवाचकपदानुपन्यासे कारणस्य प्राचीनै रायमुकुटीकारादिभिरुक्तस्योपदर्शितत्वात्, सामान्यशब्दानां जिनलक्षणविशेषपरत्वेन व्याख्यानस्य बौद्धग्रन्थव्याख्याने प्रवृत्तानां वैदिकानामपि उचितत्वात्। प्रकृतग्रन्थकर्तुर्जैनत्वे प्रमाणस्य प्रागुपपादितत्वाच्चेति विचारिभिर्विचार्यम्।

यद्यपि केनचित्कविना कोशपरिगणनावसरे 'अमरोऽयं सनातनः'—इत्युक्तम्, तथा हि-

"मेदिन्यमरमाला च त्रिकाण्डो रत्नमालिका।
रन्तिदेवो भागुरिश्च व्याडिः शब्दार्णवस्तथा॥
द्विरूपश्च कलिङ्गश्च रभसः पुरुषोत्तमः।
दुर्गोऽभिधानमाला च संसारावर्तशाश्वतौ॥

विश्वो बोपालितश्चैव वाचस्पतिहलायुधौ ।
हारावली साहसाङ्को विक्रमादित्य एव च ॥
हेमचन्द्रश्च रुद्रश्चाप्यमरोऽयं सनातनः ।
एते कोशाः समाख्याताः संख्या षड्विंशतिः स्मृता ॥ "—इति ।

तथापि तत्र 'सनातनः'—इत्यस्य विश्वहेमचन्द्राद्यपेक्षया प्राचीनो मतु व्याडिभागुर्याद्यपेक्षयेत्यर्थः । प्रकृतकोशापेक्षया पूर्वं बहूनां कोशानां विद्यमानत्वात् । "समाहृत्यान्यतन्त्राणि"—इति ( १ पृष्ठे ) वदताऽमरसिंहेन स्वयं स्पष्टीकृतत्वात् । व्याडेः परमप्राचीनत्वे प्रमाणं तु महर्षिपतञ्जल्यादिप्रणीतं महाभाष्यादिकम् । तथा हि—" संग्रहे एतत्प्राधान्येन परीक्षितम् "—इति महाभाष्यम् ( १ अ०, १पा०, १ आ० )। संग्रहे इति । ग्रन्थविशेषे इति कैयटः । ग्रन्थविशेष इति । संग्रहो व्याडिकृतो लक्षश्लोकसंख्यो ग्रन्थ इति प्रसिद्धिरिति नागोजीभट्टकृतं विवरणम् (महाभाष्यप्रदीपोद्द्योतः ) । किं च, ऋग्वेदप्रातिशाख्ये "व्याडेः सर्वत्राभिधानलोपः"—इति शौनकोक्तिरपि प्रमाणमिति द्रष्टव्यम् ।

अथ यान्यमरकोशटीकासु अन्यत्र च कोशानां कोशकाराणां वा नामान्युपलभ्यन्ते तान्यत्र बालप्रतिपत्त्यर्थं वर्णक्रमेण लिख्यन्ते—

अजयः १, अनेकार्थध्वनिमञ्जरी २, अभिधानचिन्तामणिः । ( हेमचन्द्रकृतः ) ३, अभिधानमाला ४, अमरदत्तः ५, अमरमाला ( अमरसिंहकृता ) ६, अरुणः ७, इन्दुकोशः ८, उत्पलिनी ९, ऊष्मविवेकः १०, एकाक्षरकोशः ( जैनपुरुषोत्तमदेवकृतः ) ११, कलिङ्गः १२, कल्पतरुः १३, कल्पद्रुः ( केशवकृतः ) १४, कात्यः १५, कात्यायनः १६, कोशसारः १७, गङ्गाधरः १८, गोवर्धनकोशः १९, चन्द्रकोशः २०, चरककोशः २१, तारपालः २२, त्रिकाण्डशेषः (जैनपुरुषोत्तमदेवकृतः) २३, त्रिविक्रमः २४, दामोदरकोशः २५, दुर्गकोशः २६, देशिकोशः २७, द्विरूपकोशः २८, धनंजयः २९, धनपालः ३०, धन्वन्तरिः ३१, धरणीकोशः (धरणीदासकृतः) ३२, धर्मदासः ३३, नानार्थध्वनिमञ्जरी ३४, नानार्थरत्नमाला ( भास्करकृता ) ३५, नामनिधानम् ३६, नाममाला ३७, नामलिङ्गानुशासनम् (अमरसिंहकृतम्) ३८, पदरत्नावली ३९, पालकोशः ४०, पुद्गलकोशः ४१, भट्टमल्लः ४२, भरतमाला ४३, भागुरिकोशः ४४, भुग्नकोशः ४५, भोगीन्द्रकोशः ४६, मङ्खकोशः ४७, महीपकोशः ४८, माधवकोशः ४९, मुकुटः ५०, मुक्तावली (श्रीधरकृता) ५१, मुनिकोशः ५२, मेदिनी ५३, यादवः ५४, रत्नकोशः ५५, रत्नमाला ( दण्डाधिनाथोपनामक-इरुगप्पकृता) ५६, रत्नमाला ( हलायुधकृता ) ५७, रन्तिदेवः ५८, रभसः ५९, राजदेवः ६०, राजमुकुटः ६१, रुद्रकोशः ६२, वररुचिः ६३, वाचस्पतिः ६४, विक्रमादित्यः ६५, विश्वकोशः ६६, विश्वप्रकाशः ६७, विश्वरूपः ६८, विश्वलोचनः ६९, वैजयन्ती ७०, वो[बो] पालितः ७१, व्याडिः ७२, शब्दरत्नावली (मथुरेशकृता) ७३, शब्दार्णवः ७४, शब्दार्थचिन्तामणिः ७५, शाश्वतः ७६, शुभाङ्कः ७७, संसारावर्तः ७८, सज्जनकोशः ७९, सर्वधरः ८०, साहसाङ्कः ८१, सुधा ८२, सुभूतिकोशः ८३, सोमनन्दिः ८४, हरकोशः ८५, हारावली ( जैनपुरुषोत्तमदेवकृता) ८६,—इति ॥

झळकीकरोपनामा
भट्टवामनाचार्यशर्मा.

अथ

# सटीकामरकोशस्य

## प्रथमं काण्डम्.

यस्य ज्ञानदयासिंधोरगाधस्यानघा गुणाः ॥
सेव्यतामक्षयो धीराः स श्रिये चामृताय च ॥ १ ॥
समाहृत्यान्यतंत्राणि संक्षिप्तैः प्रतिसंस्कृतैः ॥
संपूर्णमुच्यते वर्गैर्नामलिंगानुशासनम् ॥ २ ॥
प्रायशो रूपभेदेन साहचर्याच्च कुत्रचित् ॥
स्त्रीपुंनपुंसकं ज्ञेयं तद्विशेषविधेः क्वचित् ॥ ३ ॥

श्रीगणेशाय नमः ॥ वंदे तं परमानंदं वामार्धेनोमया युतम् ॥ रज्जौ भुजंगवद्यत्र विवरीवृत्यते जगत् ॥ इह खलु श्रीमदमरसिंहश्चिकीर्षितस्य नामलिंगानुशासनस्य निर्विघ्नपरिसमाप्त्यर्थं कृतं मंगलं ग्रंथादौ शिष्यशिक्षार्थं निबध्नाति । यस्येति । भो धीराः अगाधस्यातिगंभीरस्य ज्ञानकरुणयोः समुद्रस्य यस्य अनघा निर्मला गुणाः क्षांत्यादयः सन्ति सोऽक्षयः श्रिये संपत्तये अमृताय मोक्षार्थं च भवद्भिः सेव्यतामाराध्यताम् ॥ १ ॥ चिकीर्षितं प्रतिजानीते । समाहृत्येति । अन्येषां तंत्राणि शास्त्रान्तराणि "नामलिंगानुशासनानि" समाहृत्य एकत्र कृत्वा संक्षिप्तैः अल्पविस्तरबह्वर्थैः प्रतिसंस्कृतैः प्रतिपदं प्रकृतिप्रत्ययविचारेण कृतसंस्कारैः वर्गैः सजातीयसमूहैः संपूर्णं सांगोपांगं नाम्नां स्वरित्यादीनां लिंगानां च स्त्रीपुंनपुंसकाख्यानां अनुशासनं व्युत्पादकं शास्त्रमुच्यते । मयेति शेषः ॥ २ ॥ अथ वक्ष्यमाणशास्त्रस्य तावत्परिभाषामाह त्रिभिः श्लोकैः । प्रायश इति । अत्र प्रायशः बाहुल्येन रूपभेदेन आकारविशेषेण स्त्रीपुंनपुंसकं ज्ञेयम् । यथा । लक्ष्मीः पद्मालया पद्मा । पिनाकोऽजगवं धनुः । तथा, कुत्रचित्साहचर्याच्छब्दान्तरसान्निध्याल्लिंगं ज्ञेयम् । यथा । अश्वयुगश्विनी । ब्रह्मात्मभूः सुरज्येष्ठः । वियद्विष्णुपदम् । अत्र संदिग्धानि अश्वयुग्ब्रह्मवियन्ति अश्विन्यात्मभूविष्णुपदसाहचर्यात्स्त्रीपुंनपुंसकलिंगानि । तथा,

भेदाख्यानाय न द्वंद्वो नैकशेषो न संकरः ॥
कृतोऽत्र भिन्नलिंगानामनुक्तानां क्रमादृते ॥ ४ ॥
त्रिलिंग्यां त्रिष्विति पदं मिथुने तु द्वयोरिति ॥
निषिद्धलिंगं शेषार्थं त्वंताथादि न पूर्वभाक् ॥ ५ ॥

---

स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः ॥
सुरलोको द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम् ॥ ६ ॥

क्वचित् तद्विशेषविधेः लिंगविशेषोक्तेः । यथा । भेरी स्त्री दुंदुभिः पुमान् । क्लीबे त्रिविष्टपम् ॥ ३ ॥ भेदेति । अत्रास्मिन् ग्रंथेऽनुक्तानामव्युत्पादितानां भिन्नलिंगानामसमानलिंगानां नाम्नां भेदाख्यानाय लिंगभेदं समाख्यातुं द्वंद्वो न कृतः । यथा । कुलिशं भिदुरं पविः । न तु 'कुलिशभिदुरपवयः' इति । तथा, एकशेषोऽपि न कृतः । शिष्यमाणलिंगस्यैव प्रतीतेः । यथा । नभः खं श्रावणो नभाः । न तु 'खश्रावणौ तु नभसी' इति (१) । तथा, क्रमादृते क्रमं विना संकरोऽपि भिन्नलिंगानां मिश्रीभावोऽपि न कृतः । साहचर्येण लिंगनिश्चयाभावप्रसंगात् । किं तु स्त्रीपुंनपुंसकानि क्रमेण पठितानि । यथा । स्तवः स्तोत्रं स्तुतिर्नुतिः । न तु स्तुतिः स्तोत्रं स्तवो नुतिरिति । अत्र प्रायशो रूपभेदेनेत्याद्युक्तरीत्या येषां लिंगं व्युत्पादितं तेषां तु भिन्नलिंगानामपि स्थलांतरे द्वंद्वादयः कृताः । यथा । अप्सरोयक्षरक्षोगंधर्वकिन्नराः । मातापितरौ पितरौ ॥ ४ ॥ त्रिलिंग्यामिति । त्रिलिंग्यां लिंगत्रयसमाहारे त्रिष्विति पदमुक्तम् । यथा । त्रिषु स्फुलिंगोऽग्निकणः । स्फुलिंगशब्दो लिंगत्रयेऽपि वर्तत इत्यर्थः । तथा, मिथुने स्त्रीपुंसयोर्द्वयोरिति पदम् । यथा । वह्नेर्द्वयोर्ज्वालकीलौ । तथा, निषिद्धलिंगं शेषार्थम् । यत्र लिंगं निषिद्धं तत्र तदवशिष्टं लिंगं ज्ञेयम् । यथा । व्योमयानं विमानोऽस्त्रीत्यत्र स्त्रीलिंगे निषिद्धे विमानस्य पुंनपुंसकविधिः । तथा, तुशब्दः अंतो यस्य तत्त्वंतम् । अथशब्दः आदिर्यस्य तदथादि । इदं द्वयं पूर्वभाक् न भवति पूर्वेण न संबध्यते । यथा । पुलोमजा शचींद्राणी नगरी त्वमरावतीत्यत्र नगरीति त्वंतं पदमिंद्राण्या न संबध्यते किंत्वमरावत्या संबद्धम् । तथा, नित्यानवरताजस्रमप्यथातिशयो भर इत्यथादि पदं न पूर्वभाक् । किं तु भरस्य पर्यायः ॥ ५ ॥ स्वरिति । स्वः स्वर्गः नाकः । न कं सुखं अकं दुःखं तत् न विद्यते यस्मिन् । न भ्राडिति प्रकृतिभा-

---

१ अत्रत्यं टिप्पणं स्थलाभावादनुक्रमणिकाऽनन्तरपृष्ठे लिखितमिति तत्रैव द्रष्टव्यम् ॥

अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः ॥
सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः ॥ ७ ॥
आदितेया दिविषदो लेखा अदितिनंदनाः ॥
आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतांधसः ॥ ८ ॥
बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः ॥
वृंदारका दैवतानि पुंसि वा देवताः स्त्रियाम् ॥ ९ ॥
आदित्यविश्ववसवस्तुषिताभास्वरानिलाः ॥
महाराजिकसाध्याश्च रुद्राश्च गणदेवताः ॥ १० ॥

वान्नलोपो न । त्रिदिवः त्रिदशालयः सुरलोकः द्यौः द्यौः त्रिविष्टपम् इति नव नामानि स्वर्गस्य । तत्र स्वरित्यव्ययं स्वरादिनिपातमव्ययमिति सूत्रात् । लिंगसंख्याकारकाभाववदित्यर्थः । द्योदिवौ द्वे स्त्रीलिंगे । द्यौर्गोवदाद्यः । द्यौः दिवौ दिवः द्युभ्यामित्यादिरपरः । त्रिविष्टपं क्लीबे नपुंसके एव । त्रिदशालयादयः सुरसदनादिशब्दोपलक्षकाः । एवमुत्तरत्रापि अर्थसाम्येन पर्यायांतराणि स्वयमूह्यानि । स्त्रियौ क्लीबे इत्यपि पाठः ॥ ६ ॥ अमराः निर्जराः देवाः त्रिदशाः विबुधाः सुराः सुपर्वाणः सुमनसः त्रिदिवेशाः दिवौकसः "दिवोकसः" ॥ ७ ॥ आदितेयाः दिविषदः लेखाः अदितिनंदनाः आदित्याः ऋभवः अस्वप्नाः अमर्त्याः अमृतांधसः ॥ ८ ॥ बर्हिर्मुखाः । बर्हिरग्निः मुखं येषाम् । क्रतुभुजः गीर्वाणाः "गीर्बाणाः" दानवारयः वृंदारकाः दैवतानि देवताः इति षड्विंशतिनामानि देवानाम् । व्यक्तिबाहुल्याद्बहुवचनप्रयोगः । विकल्पेन दैवतशब्दः पुंसि । यथा दैवतमिदं दैवतोऽयमिति । देव एव देवता स्वार्थे तल् ॥ ९ ॥ अथ संघचारिण आह । आदित्येति । आदित्या द्वादश प्रोक्ता विश्वे देवा दश स्मृताः । वसवश्चाष्ट संख्याताः षट्त्रिंशत्तुषिता मताः ॥ १ ॥ आभास्वराश्चतुःषष्टिर्वाताः पंचाशदूनकाः । महाराजिकनामानो द्वे शते विंशतिस्तथा ॥२॥ साध्या द्वादश विख्याता रुद्रा एकादश स्मृताः ॥ आदित्या द्वादश । विश्वेदेवा दश । वसवोऽष्टौ । तुषिताः षट्त्रिंशत् । आभास्वराः चतुःषष्टिः । अनिला एकोनपंचाशत् । महाराजिकाः विंशत्यधिकशतद्वयम् । साध्या द्वादश । रुद्रा एकादश । एता गणदेवताः । अत्र तुषिताद्या गणा बौद्धपातंजलादौ द्रष्टव्याः ॥ १० ॥ देवयोनीनाह । विद्येति । विद्याधरा जीमूतवाहनादयः । अप्सरसो देवांगनाः । यक्षाः कुबेरादयः । रक्षांसि माया-

विद्याधराप्सरोयक्षरक्षोगंधर्वकिन्नराः ॥
पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ॥११॥
असुरा दैत्यदैतेयदनुजेंद्रारिदानवाः ॥
शुक्रशिष्या दितिसुताः पूर्वदेवाः सुरद्विषः ॥ १२ ॥
सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः ॥
समंतभद्रो भगवान्मारजिल्लोकजिज्जिनः ॥ १३ ॥
षडभिज्ञो दशबलोऽद्वयवादी विनायकः ॥
मुनींद्रः श्रीघनः शास्ता मुनिः शाक्यमुनिस्तु यः॥१४॥
स शाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिश्च सः ॥
गौतमश्चार्कबंधुश्च मायादेवीसुतश्च सः ॥ १५ ॥

विनो लंकादिवासिनः । गंधर्वास्तुंबुरुप्रभृतयो देवगायनाः । किन्नरा अश्वादिमुखा नराकृतयः । पिशाचाः पिशिताशा भूतविशेषाः । गुह्यकाः मणिभद्रादयः । "निधिं रक्षंति ये रक्षास्ते स्युर्गुह्यकसंज्ञकाः ।" सिद्धाः विश्वावसुप्रभृतयः । भूताः बालग्रहादयो रुद्रानुचरा वा । जातावेकवचनानि । एते देवयोनिसंज्ञका इत्यर्थः । विद्याधरोऽप्सर इत्यपि पाठः । भिन्नलिंगत्वादग्रेऽनभिधानादसमास इति रामाश्रम्याम् ॥ ११ ॥ असुराः "आसुराः" दैत्याः दैतेयाः दनुजाः इंद्रारयः दानवाः शुक्रशिष्याः दितिसुताः पूर्वदेवाः सुरद्विषः इति दश नामान्यसुराणाम् ॥ १२ ॥ सर्वज्ञः सुगतः बुद्धः धर्मराजः तथागतः । तथा सत्यं गतं ज्ञातं यस्य । समंतभद्रः भगवान् मारजित् लोकजित् जिनः ॥१३॥ षडभिज्ञः दशबलः अद्वयवादी विनायकः मुनींद्रः श्रीघनः शास्ता मुनिः इत्यष्टादश बुद्धस्य । शाक्यमुनिः ॥ १४ ॥ शाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिः गौतमः । गोतमस्य शिष्यः गौतमः । तस्येदमित्यण् । अर्कबंधुः मायादेवीसुतः इति सप्त नामानि बुद्धावांतरभेदस्य शाक्यमुनेः । षडभिज्ञः । षट् अभितः ज्ञायमानानि यस्य । दिव्यं चक्षुः श्रोत्रं परिचितज्ञानं पूर्वनिवासानुस्मृतिः आत्मज्ञानं वियद्गमनं कायव्यूहादिसिद्धिश्चेति इमानि षट् ज्ञायमानानि । दश बलानि यस्य दशबलः । दानं शीलं क्षमा वीर्यं ध्यानप्रज्ञाबलानि च । उपायः प्रणिधिर्ज्ञानं दश बुद्धबलानि चेति ॥ १५ ॥ ब्रह्मा आत्मभूः सुरज्येष्ठः परमेष्ठी पितामहः हिरण्यगर्भः लोकेशः स्वयंभूः चतुराननः

ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः ॥
हिरण्यगर्भो लोकेशः स्वयंभूश्चतुराननः ॥ १६ ॥
धाताऽब्जयोनिर्द्रुहिणो विरिंचिः कमलासनः ॥
स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड्विधिः ॥ १७ ॥
("नाभिजन्मांडजः पूर्वो निधनः कमलोद्भवः ॥
सदानंदो रजोमूर्तिः सत्यको हंसवाहनः" ॥ १ ॥) (१)
विष्णुर्नारायणः कृष्णो वैकुंठो विष्टरश्रवाः ॥
दामोदरो हृषीकेशः केशवो माधवः स्वभूः ॥ १८ ॥
दैत्यारिः पुंडरीकाक्षो गोविंदो गरुडध्वजः ॥
पीतांबरोऽच्युतः शार्ङ्गी विष्वक्सेनो जनार्दनः ॥ १९ ॥
उपेंद्र इंद्रावरजश्चक्रपाणिश्चतुर्भुजः ॥
पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रमः ॥ २० ॥
देवकीनंदनः शौरिः श्रीपतिः पुरुषोत्तमः ॥
वनमाली बलिध्वंसी कंसारातिरधोक्षजः ॥ २१ ॥

॥ १६ ॥ धाता अब्जयोनिः द्रुहिणः "द्रुघणः" विरिंचिः "विरिंचः" कमलासनः स्रष्टा प्रजापतिः वेधाः विधाता विश्वसृट् विधिः इति विंशतिर्ब्रह्मणः ॥ १७ ॥ विष्णुः नारायणः "नरायणः" कृष्णः वैकुंठः विष्टरश्रवाः दामोदरः । दाम उदरे यस्य । हृषीकेशः । हृषीकाणामिंद्रियाणामीशः । केशवः माधवः स्वभूः ॥ १८ ॥ दैत्यारिः पुंडरीकाक्षः गोविंदः गरुडध्वजः पीतांबरः अच्युतः शार्ङ्गी । शृंगस्य विकारो धनुः यस्यास्ति सः । विष्वक्सेनः "विश्वक्सेनः" जनार्दनः ॥ १९ ॥ उपेंद्रः इंद्रावरजः चक्रपाणिः चतुर्भुजः पद्मनाभः मधुरिपुः वासुदेवः त्रिविक्रमः ॥ २० ॥ देवकीनंदनः शौरिः "सौरिः" श्रीपतिः पुरुषोत्तमः वनमाली बलिध्वंसी कंसारातिः अधोक्षजः ॥ २१ ॥ विश्वंभरः कैटभजित् विधुः श्रीवत्सलांछनः । श्रीयुक्तो वत्सः श्रीवत्सः केशावर्तविशेषः लांछनं चिह्नं यस्य । उक्तं च

---

१ अयं श्लोकस्तालपत्रपुस्तकेऽपि नास्ति ॥

विश्वंभरः कैटभजिद्विधुः श्रीवत्सलांछनः ॥
(पुराणपुरुषो यज्ञपुरुषो नरकांतकः ॥ २२ ॥
जलशायी विश्वरूपो मुकुंदो मुरमर्दनः ॥) (१)
वसुदेवोऽस्य जनकः स एवानकदुंदुभिः ॥ २३ ॥
बलभद्रः प्रलंबघ्नो बलदेवोऽच्युताग्रजः ॥
रेवतीरमणो रामः कामपालो हलायुधः ॥ २४ ॥
नीलांबरो रौहिणेयस्तालांको मुसली हली ॥
संकर्षणः सीरपाणिः कालिंदीभेदनो बलः ॥ २५ ॥
मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः ॥
कंदर्पो दर्पकोऽनंगः कामः पंचशरः स्मरः ॥ २६ ॥
शंबरारिर्मनसिजः कुसुमेषुरनन्यजः ॥
पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभूः ॥ २७ ॥

हरिवंशे। श्रीवत्सेनोरसि श्रीमान् रोमजातेन राजता। शुशुभे भगवान् कृष्णः। पुराणपुरुषः यज्ञपुरुषः नरकांतकः ॥ २२ ॥ जलशायी विश्वरूपः मुकुंदः मुरमर्दनः। इति षट्चत्वारिंशद्विष्णोः। अस्य कृष्णस्य जनकः पिता वसुदेवः। वसुदेव एव आनकदुंदुभिः द्वे कृष्णपितुः ॥ २३ ॥ बलभद्रः प्रलंबघ्नः बलदेवः अच्युताग्रजः रेवतीरमणः रामः कामपालः हलायुधः ॥ २४ ॥ नीलांबरः रौहिणेयः तालांकः मुसली "मुषली" हली संकर्षणः सीरपाणिः कालिंदीभेदनः बलः। इति सप्तदश बलरामस्य ॥ २५ ॥ मदनः मन्मथः मारः प्रद्युम्नः मीनकेतनः कंदर्पः दर्पकः अनंगः कामः पंचशरः स्मरः ॥ २६ ॥ शंबरारिः "संबरारिः" मनसिजः कुसुमेषुः अनन्यजः पुष्पधन्वा रतिपतिः मकरध्वजः आत्मभूः। इत्येकोनविंशतिर्मदनस्य नामानि ॥ २७ ॥ "अरविंदमशोकं च चूतं च नवमल्लिका ॥ नीलोत्पलं च पंचैते पंचबाणस्य सायकाः ॥ १ ॥ उन्मादनस्तापनश्च शोषणः स्तंभनस्तथा ॥ संमोहनश्च कामस्य पंच बाणाः प्रकीर्तिताः ॥ २ ॥" ब्रह्मसूः ऋष्यकेतुः "ऋश्यकेतुः विश्वकेतुः झषकेतुरित्यपि पाठांतरम्"। अनिरुद्धः उषापतिः

१ अयं श्लोकस्तालपत्रपुस्तके नास्ति ॥

ब्रह्मसूर्ऋष्यकेतुः स्यादनिरुद्ध उषापतिः ॥
लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया ॥२८॥
इंदिरा लोकमाता मा क्षीरोदतनया रमा ॥
("भार्गवी लोकजननी क्षीरसागरकन्यका")॥ (१)
शंखो लक्ष्मीपतेः पांचजन्यश्चक्रं सुदर्शनम् ॥ २९ ॥
कौमोदकी गदा खड्गो नंदकः कौस्तुभो मणिः ॥
(चापः शार्ङ्गं मुरारेस्तु श्रीवत्सो लांछनं स्मृतम् ॥३०॥
"अश्वाश्च शैब्यसुग्रीवमेघपुष्पबलाहकाः ॥
सारथिर्दारुको मंत्री ह्युद्धवश्चानुजो गदः" ॥१॥) (२)
गरुत्मान्गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः ॥
नागांतको विष्णुरथः सुपर्णः पन्नगाशनः ॥ ३१ ॥
शंभुरीशः पशुपतिः शिवः शूली महेश्वरः ॥
ईश्वरः शर्व ईशानः शंकरश्चंद्रशेखरः ॥ ३२ ॥

इति चत्वारि प्रद्युम्नसूनोः । लक्ष्मीः पद्मालया पद्मा कमला श्रीः हरिप्रिया ॥ २८ ॥ इंदिरा लोकमाता मा क्षीरोदतनया । क्षीराब्धितनया इत्यपि पाठः । रमा । इत्येकादश लक्ष्म्याः । लक्ष्मीपतेर्विष्णोः शंखः पांचजन्यः । तस्य चक्रं सुदर्शननामकम् । "सुदर्शनः" ॥ २९ ॥ तस्य गदा कौमोदकी । कुमोदक इति श्रीविष्णोर्नाम तस्येयं कौमोदकी तस्येदमित्यण् ङीप् दुर्गसंमतोऽयमर्थः । "कौमोदकी" । तस्य खड्गः नंदकः । तस्य मणिः कौस्तुभः । तस्य चापः शार्ङ्गम् । अस्योरःस्थलांछनं श्रीवत्सः ॥ ३० ॥ अस्य अश्वाश्च शैब्य-सुग्रीव-मेघपुष्प-बलाहकाश्चत्वारः । दारुकः सारथिः । मंत्री उद्धवः । अनुजः गदः । तदुक्तम् । गदो भ्रातरि विष्णोश्च आमये नायुधे गदा । एकैकम् ॥ १ ॥ गरुत्मान् गरुडः तार्क्ष्यः वैनतेयः खगेश्वरः नागांतकः विष्णुरथः सुपर्णः पन्नगाशनः इति नव नामानि गरुडस्य ॥ ३१ ॥ शंभुः ईशः पशुपतिः शिवः शूली महेश्वरः । ईश्वरः शर्वः "सर्वः" ईशानः शंकरः चंद्रशेखरः ॥ ३२ ॥ भूतेशः खंडपरशुः गिरीशः गिरेः कैलासस्य ईशः ।

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥ २ अयं सार्धोऽपि श्लोकस्तालपत्रपुस्तके नास्ति ॥

भूतेशः खंडपरशुर्गिरीशो गिरिशो मृडः ॥
मृत्युंजयः कृत्तिवासाः पिनाकी प्रमथाधिपः ॥ ३३ ॥
उग्रः कपर्दी श्रीकंठः शितिकंठः कपालभृत् ॥
वामदेवो महादेवो विरूपाक्षस्त्रिलोचनः ॥ ३४ ॥
कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः ॥
हरः स्मरहरो भर्गस्त्र्यंबकस्त्रिपुरांतकः ॥ ३५ ॥
गंगाधरोंऽधकरिपुः क्रतुध्वंसी वृषध्वजः ॥
व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः ॥३६॥
("अहिर्बुध्न्योऽष्टमूर्तिश्च गजारिश्च महानटः ॥") (१)
कपर्दोऽस्य जटाजूटः पिनाकोऽजगवं धनुः ॥
प्रमथाः स्युः पारिषदा ब्राह्मीत्याद्यास्तु मातरः ॥३७॥
विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा ॥
उमा कात्यायनी गौरी काली हैमवतीश्वरी ॥३८॥

गिरीशः । गिरिर्यस्यास्ति अथवा गिरौ शेते । मृडः मृत्युंजयः कृत्तिवासाः पिनाकी प्रमथाधिपः ॥ ३३ ॥ उग्रः कपर्दी श्रीकंठः शितिकंठः कपालभृत् वामदेवः महादेवः विरूपाक्षः त्रिलोचनः ॥ ३४ ॥ कृशानुरेताः सर्वज्ञः धूर्जटिः नीललोहितः हरः "हीरः" स्मरहरः भर्गः "भर्ग्यः" त्र्यंबकः त्रिपुरांतकः ॥ ३५ ॥ गंगाधरः अंधकरिपुः क्रतुध्वंसी वृषध्वजः व्योमकेशः भवः भीमः स्थाणुः रुद्रः उमापतिः इत्यष्टचत्वारिंशन्नामानि शिवस्य । ईशितुं शीलमस्येश्वरः । ईष्टे तच्छील ईशानः ॥ ३६ ॥ अस्य शंभोः जटाजूटः कपर्दनामा । अस्य धनुः अजगवम् । "अजकवम्" तदेव पिनाक इत्यपि । अस्य पारिषदाः परिषदि साधवः "पारिषद्याः" प्रमथाः । ब्राह्मीत्याद्याः "ब्रह्मा-ण्याद्याः" मातरः । यथाहुः । ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । वाराही च तथेंद्राणी चामुंडा सप्त मातरः इति ॥ ३७ ॥ विभूतिः भूतिः ऐश्वर्यं इति त्रीणि ऐश्वर्यस्य । तत्तु अणिमा महिमेत्यादिभेदैरष्टविधम् ॥ "ते चाष्टौ भेदा यथा । अणिमा महिमा चैव गरिमा लघिमा तथा । प्राप्तिः

---

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

शिवा भवानी रुद्राणी शर्वाणी सर्वमंगला ॥
अपर्णा पार्वती दुर्गा मृडानी चंडिकांबिका ॥ ३९ ॥
(आर्या दाक्षायणी चैव गिरिजा मेनकात्मजा ॥) (१)
विनायको विघ्नराजद्वैमातुरगणाधिपाः ॥ ४० ॥
अप्येकदंतहेरंबलंबोदरगजाननाः ॥
कार्तिकेयो महासेनः शरजन्मा षडाननः ॥ ४१ ॥
पार्वतीनंदनः स्कंदः सेनानीरग्निभूर्गुहः ॥
बाहुलेयस्तारकजिद्विशाखः शिखिवाहनः ॥ ४२ ॥
षाण्मातुरः शक्तिधरः कुमारः क्रौंचदारणः ॥
(शृंगी भृंगी रिटिस्तुंडी नंदिको नंदिकेश्वरः ॥ ४३ ॥
"कर्ममोटी तु चामुंडा चर्ममुंडा तु चर्चिका ॥") (२)
इंद्रो मरुत्वान्मघवा बिडौजाः पाकशासनः ॥
वृद्धश्रवाः शुनासीरः पुरुहूतः पुरंदरः ॥ ४४ ॥

प्राकाम्यमीशित्वं वशित्वं चाष्ट सिद्धयः ॥ अणोर्भावः । महतो भावः, येन ब्रह्मांडे न माति । गुरोर्भावः । लघोर्भावः । प्राप्तिरंगुल्यग्रेण चंद्रादेः । प्रकामस्य भाव इच्छानभिघातः । ईशिनो भावः प्रभुत्वं येन स्थावरा अप्याज्ञाकारिणः । वशिनो भावः येन भूमावपि उन्मज्जननिमज्जने ।" उमा कात्यायनी गौरी काली "काला" हैमवती ईश्वरी "ईश्वरा" ॥ ३८ ॥ शिवा "शिवी" भवानी रुद्राणी शर्वाणी सर्वमंगला अपर्णा पार्वती दुर्गा मृडानी चंडिका अंबिका ॥ ३९ ॥ आर्या दाक्षायणी गिरिजा मेनकात्मजा इत्येकविंशतिः पार्वत्याः ॥ विनायकः विघ्नराजः द्वैमातुरः गणाधिपः ॥ ४० ॥ एकदंतः हेरंबः लंबोदरः गजाननः इत्यष्टौ गणेशस्य । कार्तिकेयः महासेनः शरजन्मा षडाननः ॥ ४१ ॥ पार्वतीनंदनः स्कंदः सेनानीः अग्निभूः गुहः बाहुलेयः तारकजित् विशाखः शिखिवाहनः ॥ ४२ ॥ षाण्मातुरः शक्तिधरः कुमारः क्रौंचदारणः "कौंचदारणः" इति सप्तदश स्कंदस्य । शृंगी भृंगी रिटिः तुंडी नंदिकः नंदिकेश्वरः इति षण्नामानि नंदिनः । शृंगी भृंगीत्यर्धं क्षेपकमिति केचित् ॥ ४३ ॥ इंद्रः मरुत्वान् मघवा "मघवान्"

---

१ इदमर्धं तालपत्रपुस्तके नास्ति ॥ २ इदं पद्यमपि तालपत्रपुस्तके नास्ति ॥

2

जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः ॥
सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा ॥ ४५ ॥
वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः ॥
जंभभेदी हरिहयः स्वाराण्नमुचिसूदनः ॥ ४६ ॥
संक्रंदनो दुश्च्यवनस्तुराषाण्मेघवाहनः ॥
आखंडलः सहस्राक्ष ऋभुक्षास्तस्य तु प्रिया ॥४७॥
पुलोमजा शचींद्राणी नगरी त्वमरावती ॥
हय उच्चैःश्रवाः सूतो मातलिर्नंदनं वनम् ॥ ४८ ॥
स्यात्प्रासादो वैजयंतो जयंतः पाकशासनिः ॥
ऐरावतोऽभ्रमातंगैरावणाभ्रमुवल्लभाः ॥ ४९ ॥
ह्रादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः ॥
शतकोटिः स्वरुः शंबो दंभोलिरशनिर्द्वयोः ॥ ५० ॥

बिडौजाः पाकशासनः वृद्धश्रवाः शुनासीरः "द्वितालव्यः द्विदंत्यश्च" पुरुहूतः पुरंदरः ॥ ४४ ॥ जिष्णुः लेखर्षभः शक्रः शतमन्युः । शतं मन्यवो यज्ञाः यस्य । मन्युर्दैन्ये क्रतौ क्रुधीति विश्वः । दिवस्पतिः सुत्रामा "सूत्रामा" गोत्रभित् वज्री वासवः वृत्रहा वृषा ॥ ४५ ॥ वास्तोष्पतिः सुरपतिः बलारातिः शचीपतिः जंभभेदी हरिहयः स्वाराट् नमुचिसूदनः ॥ ४६ ॥ संक्रंदनः दुश्च्यवनः तुराषाट् मेघवाहनः । आखंडलः सहस्राक्षः ऋभुक्षाः इति पंचत्रिंशदिंद्रस्य । तत्र स्वाराट् जकारांतः । तुराषाट् हांतः । ऋभुक्षा नांतः पथिवत् । तस्येंद्रस्य प्रिया तु पुलोमजेत्युत्तरेण संबंधः ॥ ४७ ॥ पुलोमजा शची "दंत्यादिरपि" इंद्राणी । इति त्रयमिंद्रप्रियायाः । इंद्रस्य नगरी तु अमरावती । तस्य स्वश्व उच्चैःश्रवाः । तस्य सारथिर्मातलिः । तस्योपवनं नंदनम् ॥ ४८ ॥ इंद्रस्य प्रासादो गृहविशेषः वैजयंतनामा । जयंतः पाकशासनिः द्वे इंद्रपुत्रस्य । ऐरावतः अभ्रमातंगः ऐरावणः अभ्रमुवल्लभः इति चत्वारि ऐरावतस्य ॥ ४९ ॥ ह्रादिनी वज्रं कुलिशं भिदुरं "भिदिरं" पविः शतकोटिः स्वरुः "संतोऽपि" शंबः "संबः । शंवः । तालव्या अपि दंत्याश्च संबसूकरपांसव इत्यूष्मविवेकः" दभोलिः अशनिः इति दशकं वज्रस्य । तत्र ह्रादिनी स्त्री वज्रमस्त्री पुन्नपुंसकलिंगम् । पव्यादयः पुंसि ।

व्योमयानं विमानोऽस्त्री नारदाद्याः सुरर्षयः ॥
स्यात्सुधर्मा देवसभा पीयूषममृतं सुधा ॥ ५१ ॥
मंदाकिनी वियद्गंगा स्वर्णदी सुरदीर्घिका ॥
मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः ॥ ५२ ॥
पंचैते देवतरवो मंदारः पारिजातकः ॥
संतानः कल्पवृक्षश्च पुंसि वा हरिचंदनम् ॥ ५३ ॥
सनत्कुमारो वैधात्रः स्वर्वैद्यावश्विनीसुतौ ॥
नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ ॥ ५४ ॥
स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखाः ॥
हाहा हूहूश्चैवमाद्या गंधर्वास्त्रिदिवौकसाम् ॥ ५५ ॥

अशनिर्द्वयोः स्त्रीपुंसयोः॥५०॥ व्योमयानं विमानः द्वे विमानस्य । तत्र विमानः पुंसि क्लीबे च । नारददेवलाद्याः सुरर्षयः एकम् । सुधर्मा देवसभा इति द्वे देवसभायाः । पीयूषं "पेयूषं" अमृतं सुधा त्रीण्यमृतस्य ॥५१॥ मंदाकिनी वियद्गंगा स्वर्णदी सुरदीर्घिका चत्वारि मंदाकिन्याः । मेरुः सुमेरुः हेमाद्रिः रत्नसानुः सुरालयः पंचकं कनकाचलस्य ॥५२ ॥ मंदारः परिजातकः संतानः कल्पवृक्षः हरिचंदनं पंचैते देवतरवः । तत्र हरिचंदनं क्लीबपुंसोः ॥ ५३ ॥ सनत्कुमारः "सनात्कुमारः" वैधात्रः द्वे सनकादेः । स्वर्वैद्यौ अश्विनीसुतौ नासत्यौ अश्विनौ दस्रौ आश्विनेयौ इति षट् अश्विनीकुमारयोः । तावुभौ यमलौ अत एव द्विवचनम् ॥५४॥ उर्वशीमुखाः उर्वशीमेनकारंभेत्याद्याः अप्सरसः स्वर्वेश्या इति चोच्यंते द्वे । "घृताची मेनका रंभा उर्वशी च तिलोत्तमा । सुकेशी मंजुघोषाद्याः कथ्यंतेऽप्सरसो बुधैः" ॥ अत्र अप्सरसःशब्द एकस्यामपि व्यक्तौ बहुवचनांतः स्त्रीलिंगः । अप्सरा इत्यपि प्रयोगदर्शनात्प्रायशो बहुत्वम् । हाहाः हूहूः एवमाद्यौ येषां ते तथा दिवौकसां देवानां गंधर्वाः गायना एकैकम् । आद्यशब्दात्तुंबुरुविश्वावसुचित्ररथप्रभृतयः । हाहाशब्दस्य रूपं तु हाहाः हाहौ हाहाः हाहां हाहौ हाहान् हाहाभ्यामित्यादि "हाहाः सांतोऽपि, गंधर्वो हाहासि प्रोक्त इति रत्नकोशात्" हूहूशब्दस्य द्वितीयैकवचनं हूहूमित्यादि द्रष्टव्यम् । "हहा इत्यादिह्रस्वः हुहुइत्युभयह्रस्वश्च । गीतमाधुर्यसंपन्नौ विख्यातौ च हहाहुहू इति व्यासोक्तेः" ॥ ५५ ॥

अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनंजयः ॥
कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात् ॥ ५६ ॥
बर्हिः शुष्मा कृष्णवर्त्मा शोचिष्केश उषर्बुधः ॥
आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः ॥५७॥
रोहिताश्वो वायुसखः शिखावानाशुशुक्षणिः ॥
हिरण्यरेता हुतभुग्दहनो हव्यवाहनः ॥ ५८ ॥
सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः ॥
शुचिरप्पित्तमौर्वस्तु वाडवो वडवानलः ॥ ५९ ॥
वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम् ॥
त्रिषु स्फुलिंगोऽग्निकणः संतापः संज्वरः समौ ॥६०॥

अग्निः वैश्वानरः वह्निः वीतिहोत्रः । वीति भक्ष्यं पुरोडाशादि हूयतेऽस्मिन् । धनंजयः कृपीटयोनिः । कृपीटस्य जलस्य योनिः, कृपीटमुदरे जले इति रत्नकोशात्, कृपीटं योनिरस्येति वा । ज्वलनः जातवेदाः तनूनपात् ॥ ५६ ॥ बर्हिः शुष्मा कृष्णवर्त्मा शोचिष्केशः उषर्बुधः आश्रयाशः "आशयाशः" बृहद्भानुः कृशानुः पावकःअनलः ॥ ५७ ॥ रोहिताश्वः "लादिरपि" वायुसखः शिखावान् अशुशुक्षणिः । आशु शीघ्रं आशुं व्रीहिं वा शु क्षणोति क्षणु हिंसायाम् शु इति पूजार्थमव्ययम् । हिरण्यरेताः हुतभुक् दहनः हव्यवाहनः ॥ ५८ ॥ सप्तार्चिः "काली कराली मनोजवा सुलोहिता सुधूम्रवर्णा स्फुलिंगिनी विश्वदासाख्याः सप्त वह्नेर्जिह्वाः" । दमुनाः "दमूनाः" शुक्रः चित्रभानुः विभावसुः । विभा प्रभा वसुः धनं यस्य सः । शुचिः अप्पित्तं इति चतुस्त्रिंशदग्निनामानि । बर्हिः शुष्मेति संघातो विगृहीतं च नाम । 'शुक्रो वैश्वानरो बर्हिर्बर्हिःशुष्मा तनूनपादिति शब्दार्णवात्" । बर्हते वर्धत इति बर्हिः । "इदंतः सांतोऽपि" शुष्यत्यनेन शुष्मा "नांतः अदंतोऽपि" । और्वः "ऊर्वः बहुत्वे ऊर्वाः" । वाडवः वडवानलः त्रयं वाडवाग्नेः ॥ ५९ ॥ ज्वालः कीलः अर्चिः "इदंतोऽपि" हेतिः शिखा पंचकं वह्नेरर्चिषि । तत्र ज्वालकीलौ स्त्रीपुंसयोः । अर्चिः स्त्रीनपुंसकयोः । हेतिशिखे स्त्रियाम् । स्फुलिंगः अग्निकणः द्वे अग्नेः कणिकायां त्रिषु लिंगत्रये । संतापः संज्वरः द्वे अग्नेः संतापे ॥ ६० ॥ धर्मराजः पितृपतिः समवर्ती परेतराट् कृतांतः

("उल्का स्यान्निर्गतज्वाला भूतिर्भसितभस्मनी ॥
क्षारो रक्षा च दावस्तु दवो वनहुताशनः ॥१॥") (१)
धर्मराजः पितृपतिः समवर्ती परेतराट् ॥
कृतांतो यमुनाभ्राता शमनो यमराड्यमः ॥ ६१ ॥
कालो दंडधरः श्राद्धदेवो वैवस्वतोंऽतकः ॥
राक्षसः कौणपः क्रव्यात्क्रव्यादोऽस्रप आशरः ॥६२॥
रात्रिंचरो रात्रिचरः कर्बुरो निकषात्मजः ॥
यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी ॥ ६३ ॥
प्रचेता वरुणः पाशी यादसांपतिरप्पतिः ॥
श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः ॥ ६४ ॥
पृषदश्वो गंधवहो गंधवाहानिलाशुगाः ॥
समीरमारुतमरुज्जगत्प्राणसमीरणाः ॥ ६५ ॥
नभस्वद्वातपवनपवमानप्रभंजनाः ॥
(प्रकंपनो महावातो झंझावातः सवृष्टिकः ॥६६॥)(२)

यमुनाभ्राता शमनः यमराट् यमः ॥ ६१ ॥ कालः दंडधरः श्राद्धदेवः । श्राद्धस्य देवः पितृपतित्वात् । वैवस्वतः अंतकः इति चतुर्दश नामानि यमस्य । राक्षसः कौणपः "कोणपः" क्रव्यात् । क्रव्यं मांसं अत्ति इति क्रव्यात् । क्रव्यादः अस्रपः अस्रं रक्तं पिबति "अश्रपः" आशरः आ शृणाति हिनस्तीत्याशरः "आशिरः" ॥ ६२ ॥ रात्रिंचरः रात्रिचरः कर्बुरः "कर्बरः" निकषात्मजः यातुधानः "जातुधानः" पुण्यजनः नैर्ऋतः यातु रक्षः पंचदश राक्षसस्य । तत्र यातुरक्षसी नपुंसके ॥ ६३ ॥ प्रचेताः वरुणः "वरणः" पाशी यादसांपतिः । षष्ठ्या अलुक् । अप्पतिः पंचकं वरुणस्य । श्वसनः स्पर्शनः वायुः मातरिश्वा । मातरि अंतरिक्षे श्वयति संचरति श्वन्नुक्षन्निति निपातनात् सप्तम्या अलुक् । सदागतिः ॥ ६४ ॥ पृषदश्वः । पृषन्मृगभेदोऽश्वो वाहनमस्य । गंधवहः गंधवाहः अनिलः आशुगः समीरः मारुतः मरुत् जगत्प्राणः "जगत् प्राण इति पदद्वयमपि" समीरणः ॥६५॥ नभस्वान् वातः "वातिः" पवनः पवमानः प्रभंजनः विंशतिर्नामानि वायोः ।

१ इदं पद्यं तालपत्रपुस्तकेऽपि नास्ति ॥ २ इदमर्धं तालपत्रपुस्तके नास्ति ॥

प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ॥
शरीरस्था इमे रंहस्तरसी तु रयः स्यदः ॥ ६७ ॥
जवो ऽथ शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम् ॥
सत्वरं चपलं तूर्णमविलंबितमाशु च ॥ ६८ ॥
सतते ऽनारताश्रांतसंततविरतानिशम् ॥
नित्यानवरताजस्रमप्यथातिशयो भरः ॥ ६९ ॥
अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम् ॥
तीव्रैकांतनितांतानि गाढबाढदृढानि च ॥ ७० ॥
क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां सत्त्वगामि यत् ॥
कुबेरस्त्र्यंबकसखो यक्षराड्गुह्यकेश्वरः ॥ ७१ ॥

प्रकंपनः महावातः द्वयं महावायोः । स एव सवृष्टिकः झंझावात इत्युच्यते ॥६६॥ प्राणः अपानः समानः उदानः व्यानः इमे पंच शरीरस्था वायुभेदाः । तथा चोक्तम् । हृदि प्राणो गुदे ऽपानः समानो नाभिमंडले । उदानः कंठदेशे स्याद्व्यानः सर्वशरीरग इति ॥ अन्नप्रवेशनं मूत्राद्युत्सर्गोऽन्नादिपाचनम् । भाषणादिनिमेषाश्च तद्व्यापाराः क्रमादमी इत्यपि ॥ एकैकम् । रंहः तरः रयः स्यदः ॥६७॥ जवः पंचकं वेगस्य । शीघ्रं त्वरितं लघु क्षिप्रं अरं द्रुतं सत्वरं चपलं तूर्णम् अविलंबितम् आशु एकादश त्वरितस्य । "[रंहआदयः सवेगगतिवचनाः। शीघ्रादयस्तु धर्मवचना एव । अत एव शीघ्रं पचतीति प्रयोगो न तु जवं पचतीति । वस्तुतस्तु वेगाख्यगुणपरा रंहःप्रभृतयः शीघ्रायदस्तु कालाल्पत्वपरा इति]" ॥ ६८ ॥ सततं अनारतं अश्रांतं संततं अविरतं अनिशं नित्यं अनवरतं अजस्रं इति नवकं नित्यस्य । "सततं क्रियांतरैरव्यवधानम् अतिशयस्तु पौनःपुन्यं इति भेदः" अतिशयः भरः ॥ ६९ ॥ अतिवेलं भृशं अत्यर्थं अतिमात्रं उद्गाढं निर्भरं तीव्रं एकांतं नितांतं गाढं बाढं दृढं इति चतुर्दश अतिशयस्य ॥ ७० ॥ शीघ्रादि शीघ्रं त्वरितमित्यारभ्य दृढशब्दपर्यंतं क्लीबे नपुंसकलिंगे यदुक्तं तत्तु असत्त्वे द्रव्यवृत्तित्वाभावे एव ज्ञेयम् । यथा शीघ्रं कृतवान् । भृशं मूर्खः । भृशं याति । एषां शीघ्रादीनां मध्ये यत्सत्त्वगामि द्रव्यवृत्ति तत् त्रिषु तस्य द्रव्यस्य यल्लिंगं तदेवास्येत्यर्थः । यथा शीघ्रा धेनुः । शीघ्रो वृषः शीघ्रं गमनम् । भरातिशययोः सत्त्वगामित्वं नास्ति । नित्यं पुस्त्वम् । "क्वचित् भेद्यगामीति पाठस्तस्य विशेष्यगामीत्यर्थः" । कुबेरः त्र्यंबकसखः यक्षराट् गुह्यकेश्वरः ॥ ७१ ॥ मनुष्यधर्मा ।

मनुष्यधर्मा धनदो राजराजो धनाधिपः ॥
किन्नरेशो वैश्रवणः पौलस्त्यो नरवाहनः ॥ ७२ ॥
यक्षैकपिंगैलविलश्रीदपुण्यजनेश्वराः ॥
अस्योद्यानं चैत्ररथं पुत्रस्तु नलकूबरः ॥ ७३ ॥
कैलासः स्थानमलका पूर्विमानं तु पुष्पकम् ॥
स्यात्किन्नरः किंपुरुषस्तुरंगवदनो मयुः ॥ ७४ ॥
निधिर्ना शेवधिर्भेदाः पद्मशंखादयो निधेः ॥ (१)

इति स्वर्गवर्गः ॥ १ ॥

द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमंबरम् ॥
नभोऽतरिक्षं गगनमनंतं सुरवर्त्म खम् ॥ १ ॥
वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी ॥
(विहायसोऽपि नाकोऽपि द्युरपि स्यात्तदव्ययम् ॥२॥
"तारापथोंऽतरिक्षं च मेघाध्वा च महाबिलम्" ॥) (२)

इति व्योमवर्गः ॥ २ ॥

मनुष्यस्येव धर्मो आचारः श्मश्रुलोमादिर्यस्य । धनदः राजराजः धनाधिपः किन्नरेशः वैश्रवणः पौलस्त्यः नरवाहनः ॥ ७२ ॥ यक्षः एकपिंगः ऐलविलः "ऐडविलः ऐडाविडः" श्रीदः पुण्यजनेश्वरः सप्तदश कुबेरस्य । अस्येति प्रत्येकं संबध्यते । अस्य कुबेरस्योद्यानं चैत्ररथम् । अस्य पुत्रो नलकूबरः ॥७३॥ अस्य स्थानं कैलासः । अस्य पूर्नगरं अलका । अस्य विमानं पुष्पकं "पुष्पकः" इत्येकैकम् । किन्नरः किंपुरुषः तुरंगवदनः मयुः चत्वारि किन्नरमात्रस्य ॥७४॥ निधिः शेवधिः द्वे सामान्यनिधेः । ना पुंलिंगः। काकाक्षिवदुभयत्रास्य संबंधः । पद्मः शंखः इत्यादयो निधेर्भेदाः । आदिशब्दान्मकरकच्छपादयः । "महापद्मश्च पद्मश्च शंखो मकरकच्छपौ । मुकुंदकुंदनीलाश्च खर्वश्च निधयो नव॥" एकैकम् ॥ इति स्वर्गवर्गः ॥ १ ॥ द्यौः द्यौः अभ्रं व्योम पुष्करं अंबरं नभः अंतरिक्षं "अंतरीक्षं" गगनं अनंतं सुरवर्त्म खम् ॥ १ ॥ वियत् विष्णुपदं आकाशं विहायः विहायसः नाकः द्युः इत्येकोनविंशतिराकाशस्य । तत्र द्योदिवौ स्त्रीलिंगे ।

---

१ महापद्मश्चेति टीकास्थं पद्यं तालपत्रपुस्तकेऽत्रैवास्ति ॥ २ इदं पद्यमपि तालपत्रपुस्तके नास्ति ॥

दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः ॥
प्राच्यवाचीप्रतीच्यस्ताः पूर्वदक्षिणपश्चिमाः ॥ १ ॥
उत्तरा दिगुदीची स्याद्दिश्यं तु त्रिषु दिग्भवे ॥
("अवाग्भवमवाचीनमुदीचीनमुदग्भवम् ॥
प्रत्यग्भवं प्रतीचीनं प्राचीनं प्राग्भवं त्रिषु ॥१॥") (१)
इंद्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् ॥ २ ॥
कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात् ॥
("रविः शुक्रो महीसूनुः स्वर्भानुर्भानुजो विधुः ॥
बुधो बृहस्पतिश्चेति दिशां चैव तथा ग्रहाः॥१॥") (२)
ऐरावतः पुंडरीको वामनः कुमुदोऽजनः ॥ ३ ॥
पुष्पदंतः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥
करिण्यो ऽभ्रमुकपिलापिंगलानुपमाः क्रमात् ॥ ४ ॥
ताम्रकर्णी शुभ्रदंती चांगना चांजनावती ॥
क्लीबाव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम् ॥५॥

आकाशविहायसी क्लीबपुंसोः । विहायसनाकौ पुंसि । द्युरव्ययं अलिंगमित्यर्थः । शेषं क्लीबे ॥ इति व्योमवर्गः ॥ २ ॥ दिशः ककुभः काष्ठाः आशाः हरितः पंचकं दिशाम् । ताः पूर्वदक्षिणपश्चिमाः क्रमेण प्राच्यवाचीप्रतीच्यः स्युः । यथा पूर्वा दिक् प्राची । दक्षिणा दिगवाची (अपाची) । पश्चिमा दिक् प्रतीची एकैकम् ॥१॥ या उत्तरा दिक् सोदीची एकम् । दिश्यमित्येकं दिग्भवे । दिगादिभ्य इति यत्प्रत्ययः, तत्त्रिषु वाच्यलिंगम् । यथा दिश्यो हस्ती । दिश्या हस्तिनीत्यादि । इंद्रादयो ऽष्टौ क्रमात्पूर्वादीनां दिशां पतयः एकैकम् ॥ २ ॥ ऐरावत इत्यष्टौ क्रमाद्दिग्गजाः पूर्वादिदिशां धारका गजा इत्यर्थः ॥ ३ ॥ अभ्रमुः कपिला पिंगला अनुपमा ॥ ४ ॥ ताम्रकर्णी शुभ्रदंती "शुभदंती" अंगना (अंजना) अंजनावती एता अष्टौ करिण्यः क्रमाद्दिग्गजानां स्त्रिय इत्यर्थः । एकैकम् । अपदिशं विदिक् इति द्वयं दिशोर्मध्ये दिग्द्वयमध्यभागे । तत्राऽपदिशं क्लीबाव्ययं नपुंसकं अव्ययं चेत्यर्थः । विदिक्

१ इदं पद्यं ताळपत्रपुस्तकेऽपि नास्ति ॥ २ इदं पद्यं ताळपत्रपुस्तकेऽपि नास्ति ॥

अभ्यंतरं त्वंतरालं चक्रवालं तु मंडलम् ॥
अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः ॥ ६ ॥
धाराधरो जलधरस्तडित्वान्वारिदोंऽबुभृत् ॥
घनजीमूतमुदिरजलमुग्धूमयोनयः ॥ ७ ॥
कादंबिनी मेघमाला त्रिषु मेघभवेऽभ्रियम् ॥
स्तनितं गर्जितं मेघनिर्घोषे रसितादि च ॥ ८ ॥
शंपाशतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा ॥
तडित्सौदामनी विद्युच्चंचला चपला अपि ॥ ९ ॥
स्फूर्जथुर्वज्रनिर्घोषो मेघज्योतिरिरंमदः ॥
इंद्रायुधं शक्रधनुस्तदेव ऋजुरोहितम् ॥ १० ॥
वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ ॥
धारासंपात आसारः शीकरोंऽबुकणाः स्मृताः ॥११॥

स्त्रियाम् । यान्यासामंतरालानि प्रदिशो विदिशश्च ता इत्यमरमालायाम् ॥ ५ ॥ अभ्यंतरं अंतरालं द्वे अंतरवकाशस्य । चक्रवालं मंडलं द्वे मंडलस्य । अभ्रं मेघः वारिवाहः स्तनयित्नुः बलाहकः ॥ ६ ॥ धाराधरः जलधरः तडित्वान् वारिदः अंबुभृत् घनः जीमूतः मुदिरः ।मुदिरः कामुकाभ्रयोरिति विश्वमेदिन्यौ । जलमुक् धूमयोनिः इति पंचदश मेघस्य ॥ ७ ॥ कादंबिनी मेघमाला द्वे मेघवृंदस्य । अभ्रियमित्येकं मेघभवे तत्त्रिषु। यथा अभ्रिया आपः। अभ्रिय आसारः। अभ्रियं जलम् । स्तनितं गर्जितं रसितं आदिशब्दात् ध्वनितादि त्रयं मेघनिर्घोषे ॥ ८ ॥ शंपा शतह्रदा ह्रादिनी ऐरावती क्षणप्रभा तडित् सौदामनी । सुदाम्नाऽद्रिणा एकदिक् । अथवा सुदाम्नि मेघे वा भवा । अण्प्रत्ययः । सुदामा तु पुमान्वारिधरपर्वतभेदयोरित्युक्तत्वात् । " सौदामिनी " विद्युत् चंचला चपला दशकं विद्युल्लतायाः । चपलापि चेति पाठः ॥ ९ ॥ स्फूर्जथुः वज्रनिर्घोषः "वज्रनिष्पेषः" द्वयमशनिनिर्घोषस्य । मेघज्योतिः इरंमदः द्वे मेघज्योतिषः "वीज इति प्रसिद्धस्य" । इंद्रायुधं शक्रधनुः ऋजुरोहितम् । ऋजु च तत् रोहितं च इति त्रीणि मेघप्रतिफलिता रविरश्मयो धनुराकारेण भांति तस्य धनुषः ॥ १० ॥ वृष्टिः वर्षं द्वयं मेघवर्षणस्य । अवग्राहः अवग्रहः। "अवे ग्रहो०" इति वा घञ् । पक्षे अप् । द्वयं

वर्षोपलस्तु करका मेघच्छन्नेऽह्नि दुर्दिनम् ॥
अंतर्धा व्यवधा पुंसि त्वंतर्द्धिरपवारणम् ॥ १२ ॥
अपिधानतिरोधानपिधानाच्छादनानि च ॥
हिमांशुश्चंद्रमाश्चंद्र इंदुः कुमुदबांधवः ॥ १३ ॥
विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः ॥
अब्जो जैवातृकः सोमो ग्लौर्मृगांकः कलानिधिः ॥ १४ ॥
द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः ॥
कला तु षोडशो भागो बिंबोऽस्त्री मंडलं त्रिषु ॥ १५ ॥
भित्तं शकलखंडे वा पुंस्यर्धोऽर्धं समेंऽशके ॥
चंद्रिका कौमुदी ज्योत्स्ना प्रसादस्तु प्रसन्नता ॥ १६ ॥
कलंकांकौ लांछनं च चिह्नं लक्ष्म च लक्षणम् ॥
सुषमा परमा शोभा शोभा कांतिर्द्युतिश्छविः ॥ १७ ॥

तद्विघाते वर्षनिरोधे । धारासंपातः आसारः द्वयं मेघधाराणां निरंतरपतनस्य । शीकर इत्येकं अंबुकणानाम् । "दंत्यादिरप्ययम्" ॥ ११ ॥ वर्षोपलः करका द्वे यत्प्रथमवृष्टौ मेघोदकं कठिनं सदुपलवत्पतति तस्य । दुर्दिनमित्येकं मेघच्छन्ने दिने । "रात्रेरप्युपलक्षणम्" । अंतर्धा व्यवधा अंतर्द्धिः अपवारणम् ॥ १२ ॥ अपिधानं तिरोधानं पिधानं आच्छादनं अष्टकमाच्छादनस्य । तत्र अंतर्धाव्यवधे स्त्रियाम् । अंतर्द्धिः पुंसि । हिमांशुः चंद्रमाः चंद्रः इंदुः कुमुदबांधवः ॥ १३ ॥ विधुः सुधांशुः शुभ्रांशुः ओषधीशः निशापतिः अब्जः जैवातृकः । जीवयतीति अंतर्भावितण्यर्थः । आतृकन् प्रत्ययः । सोमः "सोमा" ग्लौः मृगांकः कलानिधिः ॥ १४ ॥ द्विजराजः शशधरः नक्षत्रेशः क्षपाकरः इति विंशति नामानि चंद्रस्य । चंद्रमंडलस्य षोडशो भागः कलासंज्ञः । एकम् । बिंबः मंडलं द्वे बिंबस्य ॥ १५ ॥ भित्तादिचतुष्कं शकलस्य । तत्र भित्तं नपुंसकम् । शकलखंडे क्लीबपुंसोः । अर्धः पुंस्येव । यथा कंबलस्यार्धः खंड इत्यर्थः । वाच्यलिंगोऽपि । यथा अर्धा शाटी अर्धः पटः अर्धं वस्त्रम् । अर्धमित्येकं समे विभागे तन्नपुंसकमेव । चंद्रिका कौमुदी जोत्स्ना त्रयं चंद्रप्रभायाम् । प्रसादः प्रसन्नता द्वयं नैर्मल्यस्य ॥ १६ ॥ कलंकः अंकः लाञ्छनं चिह्नं लक्ष्म लक्षणं षट्कं चिह्नस्य । सुषमेत्येकं परमायाः शोभायाः । शोभा कांतिः

अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् ॥
प्रालेयं मिहिका चाथ हिमानी हिमसंहतिः ॥ १८ ॥
शीतं गुणे तद्वदर्थाः सुषीमः शिशिरो जडः ॥
तुषारः शीतलः शीतो हिमः सप्तान्यलिंगकाः ॥ १९ ॥
ध्रुव औत्तानपादिः स्यादगस्त्यः कुंभसंभवः ॥
मैत्रावरुणिरस्यैव लोपामुद्रा सधर्मिणी ॥ २० ॥
नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम् ॥
दाक्षायण्योऽश्विनीत्यादितारा अश्वयुगश्विनी ॥ २१ ॥
राधा विशाखा पुष्ये तु सिध्यतिष्यौ श्रविष्ठया ॥
समा धनिष्ठा स्युः प्रोष्ठपदा भाद्रपदाः स्त्रियः ॥ २२ ॥

द्युतिः छविः चत्वारि शोभामात्रस्य । शोभा कांतिरित्यत्राभिख्या कांतिरित्यपि पाठः ॥ १७ ॥ अवश्यायः नीहारः तुषारः तुहिनं हिमं प्रालेयं मिहिका ( महिका ) सप्तकं हिमस्य । हिमानी हिमसंहतिः द्वे महतो हिमस्य । एवमुक्तलिंगा अवश्यायादयः ॥ १८ ॥ नपुंसकलिंगः शीतशब्दश्च गुणे स्पर्शविशेषे एव नतु गुणिनि । सुषीमः ( सुषिमः सुशीमः ) शिशिरः जडः तुषारः शीतलः शीतः हिमः एते सप्त तद्वदर्थाः तद्वान् शीतगुणवानर्थो येषां ते तथा ते चान्यलिंगकाः विशेष्यनिघ्नाः । तुषारहिमशीतशब्दा निरूढलक्षणया गुणिन्यपि वर्तंत इत्युभयत्र पठिताः ॥ १९ ॥ ध्रुवः । औत्तानपादिः द्वे उत्तानपादपुत्रस्य । अगस्त्यः कुंभसंभवः मैत्रावरुणिः । "मैत्रावरुणः । और्वशेयागस्त्यमैत्रावरुणास्त्वाग्निमारुताः इति नामनिधानात्" त्रयमगस्त्यस्य । अगस्तिरित्यपि । अथागस्त्यः कुंभयोनिरगस्तिः कलशीसुत इति शब्दार्णवः । अस्यागस्त्यस्य सधर्मिणी पत्नी लोपामुद्रा एकम् ॥ २० ॥ नक्षत्रं ऋक्षं भं तारा तारका उडु इति षट्कं नक्षत्रमात्रस्य । उडु स्त्रीनपुंसकयोः। अपिशब्दात्तारकापि तथा । नक्षत्रे चाक्षिमध्ये च तारकं तारकापि चेति शाश्वतः । अश्विनीत्यादितारा अश्विन्यादिसप्तविंशति नक्षत्राणि दाक्षायणीसंज्ञकानि । एकम् । अश्वयुक् अश्विनी द्वे अश्विन्याः ॥ २१ ॥ राधा विशाखा द्वे विशाखायाः । पुष्यः सिध्यः तिष्यः त्रयं पुष्ये । श्रविष्ठा धनिष्ठा द्वे धनिष्ठायाः । श्रविष्ठया समा श्रविष्ठातुल्येत्यर्थः । प्रोष्ठपदाः भाद्रपदाः द्वयं पूर्वाभाद्रपदोत्तराभाद्रपदासु । पूर्वे

मृगशीर्षं मृगशिरस्तस्मिन्नेवाग्रहायणी ॥
इल्वलास्तच्छिरोदेशे तारका निवसंति याः ॥ २३ ॥
बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः ॥
जीव आंगिरसो वाचस्पतिश्चित्रशिखंडिजः ॥ २४ ॥
शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः ॥
अंगारकः कुजो भौमो लोहितांगो महीसुतः ॥२५॥
रौहिणेयो बुधः सौम्यः समौ सौरिशनैश्चरौ ॥
तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुंतुदः ॥ २६ ॥
सप्तर्षयो मरीच्यत्रिमुखाश्चित्रशिखंडिनः ॥
राशीनामुदयो लग्नं ते तु मेषवृषादयः ॥ २७ ॥

प्रोष्ठपदे द्वे उत्तरे च द्वे एवं चतुःसंख्याकत्वाद्बहुवचनम् । स्त्रियः स्त्रीलिंगाः स्युः ॥ २२ ॥ मृगशीर्षं " शीर्षे इत्यापि पाठः " मृगशिरः आग्रहायणी त्रयं मृगशीर्षस्य । तस्य मृगशीर्षस्य शिरोदेशे याः पंच तारा निवसंति ता इल्वलाः ( इन्वकाः ) एकम् ॥ २३ ॥ बृहस्पतिः सुराचार्यः गीष्पतिः धिषणः गुरुः जीवः आंगिरसः वाचस्पतिः चित्रशिखंडिजः नवकं बृहस्पतेः । चित्रशिखंडी अंगिराः तज्जः ॥ २४ ॥ शुक्रः दैत्यगुरुः काव्यः उशनाः भार्गवः कविः षट्कं शुक्रस्य । उशनेति सांतम् ऋदुशनेत्यनङ् । अंगारकः कुजः भौमः लोहितांगः महीसुतः पंचकं मंगलस्य ॥ २५ ॥ रौहिणेयः बुधः सौम्यः त्रयं बुधस्य । सौरिः "शौरिरपि" "सौरः" शनैश्चरः द्वे शनेः । तमः राहुः स्वर्भानुः सैंहिकेयः विधुंतुदः पंच राहोः । तमः सांतं क्लीबे पुंसि च क्वचित् । "अदंतः । स्वर्भानुस्तु तमो राहुरिति पुंस्कांडे रत्नकोशामरमालयोर्दर्शनात्" ॥ २६ ॥ मरीच्यत्रिमुखाः सप्तर्षयश्चित्रशिखंडिसंज्ञाः एकम् । मुखशब्दात्पुलहपुलस्त्यादयः सप्तर्षयः । "ते यथा । मरीचिरंगिरा अत्रिः पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखंडिनः ॥" राशीनामुदयो लग्नमित्युच्यते । एकम् । मेषवृषादयो राशयः स्युः एकम् । आदिना मिथुनकर्कटकादयः । " मेषो वृषोऽथ मिथुनं कर्कटः सिंहकन्यके । तुला च वृश्चिको धन्वी मकरः कुंभमीनकौ" ॥ २७ ॥ सूरः (शूरः) सूर्यः अर्यमा आदित्यः द्वादशात्मा दिवाकरः

सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः ॥
भास्कराहस्करब्रध्नप्रभाकरविभाकराः ॥ २८ ॥
भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः ॥
विकर्तनार्कमार्तंडमिहिरारुणपूषणः ॥ २९ ॥
द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः ॥
विभावसुर्ग्रहपतिस्त्विषांपतिरहर्पतिः ॥ ३० ॥
भानुर्हंसः सहस्रांशुस्तपनः सविता रविः ॥
("पद्माक्षस्तेजसां राशिश्छायानाथस्तमिस्रहा ॥
कर्मसाक्षी जगच्चक्षुर्लोकबंधुस्त्रयीतनुः ॥ १ ॥
प्रद्योतनो दिनमणिः खद्योतो लोकबांधवः ॥
इनो भगो धामनिधिश्चांशुमाल्यब्जिनीपतिः"॥२॥)(१)
माठरः पिंगलो दंडश्चंडांशोः पारिपार्श्वकाः ॥ ३१ ॥
सूरसूतोऽरुणोऽनूरुः काश्यपिर्गरुडाग्रजः ॥
परिवेषस्तु परिधिरुपसूर्यकमंडले ॥ ३२ ॥

भास्करः अहस्करः ब्रध्नः प्रभाकरः विभाकरः ॥ २८ ॥ भास्वान् विवस्वान् सप्ताश्वः हरिदश्वः उष्णरश्मिः विकर्तनः अर्कः मार्तंडः ( मार्तांडः ) मिहिरः ( महिरः ) अरुणः पूषा ॥ २९ ॥ द्युमणिः तरणिः मित्रः चित्रभानुः विरोचनः विभावसुः ग्रहपतिः त्विषांपतिः अहर्पतिः ॥ ३० ॥ भानुः हंसः सहस्रांशुः तपनः (तापनः) सविता रविः इति सप्तत्रिंशत्सूर्यस्य । "चंडांशुरपि । चंडांशोः पारिपार्श्वका इति वक्ष्यमाणत्वात्" । माठरः पिंगलः दंडः इति चंडांशोः पारिपार्श्वकाः परितः पार्श्वे विद्यमानाः । यत उक्तं सौरतंत्रे । शक्रोऽस्य वामपार्श्वे तु दंडाख्यो दंडनायकः । वह्निस्तु दक्षिणे पार्श्वे पिंगलो वामभागतः ॥ यमो ऽपि दक्षिणे पार्श्वे भवेन्माठरसंज्ञयेति । एकैकम् ॥३१॥ सूरसूतः अरुणः अनूरुः काश्यपिः गरुडाग्रजः पंचकं अरुणस्य । परिवेषः "तालव्यांतोऽपि । वेष्टने परिवेशः स्याद्भानोः सविधमंडल इति रभसे" । परिधिः उपसूर्यकं मंडलं चत्वारि परिवेषस्य सूर्यमभितः कदाचिद्दृश्यमानस्य कुंडला-

१ इदं पद्यद्वयं तालपत्रपुस्तकेऽपि नास्ति ॥

किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः ॥
भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम् ॥ ३३ ॥
स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः ॥
रोचिः शोचिरुभे क्लीबे प्रकाशो द्योत आतपः ॥ ३४ ॥
**कोष्णं कवोष्णं मंदोष्णं कदुष्णं त्रिषु तद्वति ॥**
**तिग्मं तीक्ष्णं खरं तद्वन्मृगतृष्णा मरीचिका ॥ ३५ ॥**

**॥ इति दिग्वर्गः ॥ ३ ॥**

**कालो दिष्टोऽप्यनेहाऽपि समयोऽप्यथ पक्षतिः ॥**
**प्रतिपद्वे इमे स्त्रीत्वे तदाद्यास्तिथयो द्वयोः ॥ १ ॥**

कारतेजोविशेषस्य । परिवेषसाहचर्यात्परिधिः पुंसि ज्ञेयः । मंडलं परिवेषश्च परिधिश्चोपसूर्यकमिति भागुरिः ॥३२॥ किरणः उस्रः मयूखः अंशुः गभस्तिः घृणिः । जिघर्ति इति घृणिः । 'घृ क्षरणदीप्त्योः' 'घृ सेचने' वा । रश्मिः [धृष्णिः वृष्णिः पृश्निः] भानुः करः मरीचिः दीधितिः एकादश किरणस्य । मरीचिः स्त्रीपुंसयोः । द्वयोर्मरीचिः किरणो भानुरुस्रः करः पदमिति शब्दार्णवः । मरीचिर्मुनिभेदे ना गभस्तावनपुंसकमिति मेदिनी च । दीधितिः स्त्रियाम् । स्त्रियामित्यस्य काकाक्षिगोलकन्यायेनोत्तरश्लोकेऽप्यन्वयः ॥३३॥ प्रभा रुक् रुचिः त्विट् भा भाः छविः द्युतिः दीप्तिः रोचिः शोचिः इत्येकादश प्रभामात्रस्य । तत्र दीप्त्यंतानि स्त्रियां स्युः । रोचिः शोचिः सांते क्लीबे । द्विवचनं तु रोचिषी शोचिषी । भाः सांतः । प्रकाशः द्योतः आतपः इति त्रयं सूर्यप्रभायाः । प्रभामात्रस्येत्येके ॥३४॥ कोष्णं कवोष्णं मंदोष्णं कदुष्णं चतुष्टयमीषदुष्णे । इदं धर्ममात्रे रूपभेदात्क्लीबे । तद्वति धर्मिणि त्रिषु वाच्यलिंगमित्यर्थः । तिग्मं तीक्ष्णं खरं त्रयमत्युष्णस्य । तद्वत्कोष्णवत् । धर्मे क्लीबं । धर्मिणि त्रिषु । मृगतृष्णा मरीचिका द्वयं मृगजलस्य । मरुदेशादौ सिकतासु प्रतिच्छुरिताः सूर्यकिरणाः जलाकारेण भांति तस्य जलाभासस्येत्यर्थः ॥३५॥ इति दिग्वर्गः ॥ ३ ॥ कालः । कालो मृत्यौ महाकाले समये यमकृष्णयोरिति कोशांतरे । अन्यार्थेऽपि कालशब्दः । दिष्टः अनेहा समयः चत्वारि कालस्य । अनेहा सांतः । ऋदुशनेस-नङ् । पक्षतिः पक्षस्य मूलम् । पक्षतिस्तु भवेत्पक्षमूले च प्रतिपत्तिथाविति । प्रतिपत् इमे द्वे प्रथमतिथेः । तदाद्याः प्रतिपदाद्यास्तिथय इत्युच्यंते एकम् ।

घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ ॥
प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि ॥ २ ॥
("व्युष्टं विभातं द्वे क्लीबे पुंसि गोसर्ग इष्यते"॥)(१)
प्रभातं च दिनांते तु सायं संध्या पितृप्रसूः ॥
प्राह्णापराह्णमध्याह्नास्त्रिसंध्यमथ शर्वरी ॥ ३ ॥
निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा ॥
विभावरीतमस्विन्यौ रजनी यामिनी तमी ॥ ४ ॥
तमिस्रा तामसी रात्रिर्ज्यौत्स्नी चंद्रिकयान्विता ॥
आगामिवर्तमानाहर्युक्तायां निशि पक्षिणी ॥ ५ ॥

तिथिशब्दः द्वयोः स्त्रीपुंसयोः । तथा च प्रयोगः । सकलो निशि पूर्णिमातिथीनुपतस्थेऽतिथिरेकिका तिथिरिति ॥ १ ॥ घस्रः दिनं अहः दिवसः वासरः पंचकं दिवसस्य । तत्र दिवसवासरौ क्लीबपुंसोः । प्रत्यूषः अहर्मुखं कल्यं (काल्यं) उषः (ऊषः उषा) "उषा प्रभातं गोसर्ग इति त्रिकांडशेषः" । प्रत्युषः (प्रत्यूषः) "उषः प्रत्युषसि क्लीबं पितृप्रस्वां च योषिति ।" प्रभातं षट्कं प्रभातस्य । तत्राद्यः प्रत्यूषोऽदंतःपुंसि क्लीबे च । "प्रत्यूषोऽहर्मुखे वसाविति मेदिनी ।" कल्यं तालव्यांतम् ॥२॥ दिनांतः सायं "सायः" संध्या "संधा । संध्या पितृप्रसूः संधेति शब्दार्णवः"। सम्यक् ध्यायंत्यस्यामिति संध्या । पितृप्रसूः चत्वारि दिनांते । तत्र सायमित्यव्ययं नपुंसकलिंगं वा । "सायः कांडे दिनांते चेति मेदिन्यादिषु साय इत्युक्तत्वात्सायमिति मांताव्ययस्याव्ययवर्गे वक्ष्यमाणत्वादत्र सायोऽदंतः पुंस्येव" । प्राह्णादयः समाहृताः त्रिसंध्यं ज्ञेयम् । "आबंतो वेति पाक्षिकी क्लीबता । पक्षे त्रिसंध्यी" एकम् । तत्र प्राह्णः पूर्वाह्णः । शर्वरी (शार्वरी) ॥ ३ ॥ निशा निशीथिनी रात्रिः (रात्री) "रात्री रात्रिस्तमस्विनीति शब्दर्णवः" त्रियामा क्षणदा क्षणमुत्सवं निर्व्यापारस्थितिं वा ददाति । क्षपा विभावरी तमस्विनी रजनी (रजनिरपि) यामिनी तमी "तमा तमिः" द्वादश निशायाः ॥ ४ ॥ या तामसी तमोयुक्ता रात्रिः सा तमिस्रा एकम् । या चंद्रिकया चंद्रप्रकाशेन अन्विता युक्ता रात्रिः सा ज्यौत्स्नी एकम् । ज्यौत्स्नी ज्योतिष्मती रात्रिर्ज्यौत्स्ना चंद्रमसः प्रभेति शाश्वतः । पूर्वापरदिनाभ्यां युक्तायां

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

गणरात्रं निशा बह्व्यः प्रदोषो रजनीमुखम् ॥
अर्धरात्रनिशीथौ द्वौ द्वौ यामप्रहरौ समौ ॥ ६ ॥
स पर्वसंधिः प्रतिपत्पंचदश्योर्यदंतरम् ॥
पक्षांतौ पंचदश्यौ द्वे पौर्णमासी तु पूर्णिमा ॥ ७ ॥
कलाहीने सानुमतिः पूर्णे राका निशाकरे ॥
अमावास्या त्वमावस्या दर्शः सूर्येंदुसंगमः ॥ ८ ॥
सा दृष्टेंदुः सिनीवाली सा नष्टेंदुकला कुहूः ॥
उपरागो ग्रहो राहुग्रस्ते त्विंदौ च पूष्णि च ॥ ९ ॥

रात्रौ पाक्षिणीति नामैकम्। पक्षाविव पक्षौ पूर्वोत्तरादिवसौ यस्याः सा पक्षिणी। पाक्षिणी पक्षतुल्याभ्यामहोभ्यां वेष्टिता निशेति स्मरणात् ॥५॥ बह्व्यो निशाः गणरात्रं स्यात्। एकं रात्रिसमुदायस्य। प्रदोषः रजनीमुखं द्वे रात्रेः पूर्वभागस्य। अर्धरात्रः निशीथ इति द्वे रात्रिमध्यसमयस्य। यामः प्रहरः द्वे अहोरात्राष्टमांशस्य ॥६॥ प्रतिपत्पंचदश्योर्यदंतरं स संधिः पर्वेत्यन्वयः। यदाह रुद्रः। दर्शप्रतिपदोः संधौ ग्रंथिप्रस्तावयोरपि। पर्व क्लीबे विजानीयाद्विषुवत्प्रभृतिष्वपीति ॥ पर्वसंधिरिति चतुरक्षरं वा एकम्। द्वे अमापूर्णिमे पक्षांतौ पंचदश्यौ द्वयं पक्षांततिथ्योः। द्वित्वाद्विवचनम्। नतु नित्यम्। पौर्णमासी पूर्णिमा। द्वे शुक्लपक्षांत्यातिथौ ॥७॥ सा पूर्णिमा कलाहीने चंद्रे सति अनुमतिरित्युच्यते एकम्। सैव पूर्णिमा पूर्णे निशाकरे सति राका एकम्। या पूर्वा पौर्णमासी सा अनुमतिर्योत्तरा सा राकेति श्रुतिः। अमावास्या अमावस्या। अमावस्यदन्यतरस्याम्। पा०। अमा सह वसतः अस्यां चंद्रार्कौ। अमोपपदाद्वसेरधिकरणे ण्यत्। वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते। "अमावसी अमावासी अमामासी अमामसी। अप्यमावस्यमावासी चामामास्यप्यमामसीति शब्दार्णवः। नामैकदेशे नामग्रहणादमापि"। दर्शः सूर्येंदुसंगमः चत्वारि कृष्णपक्षांत्यतिथेः ॥ ८ ॥ सा अमावास्या दृष्टेंदुश्चेद्दृष्ट इंदुर्यस्यां सा सिनीवाली एकम्। सैव नष्टेंदुकला नष्टा इंदुकला यस्यां सा कुहूः "कुहुः" एकम्। या पूर्वामावास्या सिनीवाली योत्तरा सा कुहूरिति श्रुतिः। अयमर्थः। चतुर्दश्या अंतिमप्रहरः अमावास्याया अष्टौ प्रहराश्चेति नवप्रहरात्मकश्चंद्रक्षयकालः शास्त्रसिद्धः। तत्राद्यप्रहरद्वये चंद्रस्य सूक्ष्मता। अंतिमप्रहरद्वये कृत्स्नक्षयः। अतोऽमावास्याया आद्यप्रहरः सिनीवालीसंज्ञः। अंत्यप्रहरद्वयं कुहूसंज्ञम्। मध्यमप्रहरपंचकं

सोपप्लवोपरक्तौ द्वावग्न्युत्पात उपाहितः ॥
एकयोक्त्या पुष्पवंतौ दिवाकरनिशाकरौ ॥ १० ॥
अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कला ॥
तास्तु त्रिंशत्क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम् ॥ ११ ॥
ते तु त्रिंशदहोरात्रः पक्षस्ते दश पंच च ॥
पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ ॥ १२ ॥
द्वौ द्वौ मार्गादिमासौ स्यादृतुस्तैरयनं त्रिभिः ॥
अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः ॥ १३ ॥

दर्शसंज्ञमिति । राहुणा चंद्रे सूर्ये च ग्रस्ते सति तस्य ग्रासस्योपरागः ग्रह इति नामद्वयम् ॥ ९ ॥ सोपप्लवः उपरक्तः इति द्वे राहुग्रस्तस्येंदोः सूर्यस्य वा । अग्न्युत्पातः उपाहितः इति द्वे वह्निकृतोपसर्गस्य । ग्रहणे सति कदाचिदाग्नेयमंडलादुत्पन्नो भवति तस्येत्येके । धूमकेत्वाख्यस्योत्पातस्येत्यपरे । एकयोक्त्याऽपृथग्वचनेन पुष्पवंतावित्युक्तौ सूर्याचंद्रमसौ ज्ञेयौ एकम् । एकयोक्त्येति वचनात्पुष्पवंत इति पुष्पवानिति वा सूर्यः चंद्रो वा न वक्तव्यः । यथा रोदसी इत्येकयोक्त्या द्यावापृथिव्यौ उच्येते । पुष्पवंतशब्दो मतुबंतोऽकारांतश्च । धरणीधरशिखरस्थितपुष्पवंताभ्यामित्यादिप्रयोगदर्शनात् ॥ १० ॥ निमेषोऽक्षिस्पंदकालः । अक्षिपक्ष्मपरिक्षेपो निमेषः परिकीर्तित इत्युक्तम् । अष्टादश निमेषा मिलित्वा एका काष्ठा भवति । त्रिंशत्काष्ठाः मिलित्वा एका कला । ताः कलास्त्रिंशन्मिलित्वा एकः क्षणः । ते क्षणाः द्वादश मिलित्वा एको मुहूर्तः क्लीबपुंसोः ॥ ११ ॥ ते त्रिंशन्मुहूर्ता एकोऽहोरात्रः । अह्ना सहिता रात्रिरहोरात्रः । "अत्र अहश्च रात्रिश्च तयोः समाहार इति विग्रहः साधुः, अन्यथा अजभावप्रसंगात् । अहःपूर्वाद्रात्रिशब्दाद्द्वंद्व एवाज्विधानात् ।" तेऽहोरात्राः पंचदशसंख्याका एकः पक्षः । पक्षो द्विविधः शुक्लः कृष्णश्चेति । तत्र मासस्य पूर्वः शुक्लः कृष्णस्त्वपरः । यतः शुक्लादिक्रमेण प्रायशो मासप्रवृत्तिः । तावुभौ पक्षावेको मासः । चांद्रेण मानेनेदमुक्तम् ॥ १२ ॥ मार्गादी द्वौ द्वौ मासौ ऋतुरेकः स च हेमंतादिसंज्ञः । माघादीत्यपि पाठः । माघाद्युपक्रमस्तु अयनारंभवशाज्ज्ञेयः । तैर्ऋतुभिस्त्रिभिरेकमयनम् । तद्द्विधा सूर्यगतिभेदात् । अर्कस्योदग्गतिः उत्तरायणम् अयतें गच्छति अर्कः अनेन । अय गतौ ल्युट्, पूर्वपदात्संज्ञायामग

समरात्रिंदिवे काले विषुवद्विषुवं च तत् ॥
("पुष्ययुक्ता पौर्णमासी पौषी मासे तु यत्र सा ॥
नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे ॥ १ ॥") (१)
मार्गशीर्षे सहा मार्ग आग्रहायणिकश्च सः ॥ १४ ॥
पौषे तैषसहस्यौ द्वौ तपा माघेऽथ फाल्गुने ॥
स्यात्तपस्यः फाल्गुनिकः स्याच्चैत्रे चैत्रिको मधुः ॥ १५ ॥
वैशाखे माधवो राधो ज्येष्ठे शुक्रः शुचिस्त्वयम् ॥
आषाढे श्रावणे तु स्यान्नभाः श्रावणिकश्च सः ॥ १६ ॥
स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः ॥
स्यादाश्विन इषोप्याश्वयुजोऽपि स्यात्तु कार्तिके ॥ १७ ॥
बाहुलोर्जौ कार्तिकिको हेमंतः शिशिरोऽस्त्रियाम् ॥

इति णत्वम्। दक्षिणा गतिस्तु दक्षिणायनम्। एवं द्वे अयने एको वत्सरः ॥ १३ ॥ विषुवत् विषुवं "विषुपं विषुणः विषुवः। विषुवान्समरात्रिवासर इति पुंस्कांडे बोपालितः" द्वयं समं रात्रिंदिवं यस्मिंस्तस्मिन्काले तुलासंक्रांतौ मेषसंक्रांतौ च दिनरात्री समे भवतः तस्य कालस्येत्यर्थः। रात्रिंदिवशब्दः अचतुरविचतुरे-त्यादिना साधुः। "पुष्यनक्षत्रयुक्ता पौर्णमासी पौषी ज्ञेया सा पौषी यस्मिन्मासे वर्तते स नाम्ना पौषः मघायुक्ता पौर्णमासी यत्र स माघः स आद्यो येषां ते। अपरे पौषादन्ये एकादश मासा एवमुक्तरीत्या ज्ञेयाः" एकैकम्। मार्गशीर्षः सहाः मार्गः आग्रहायणिकः चत्वारि मार्गशीर्षस्य ॥ १४ ॥ पौषः तैषः सहस्यः त्रीणि पौषस्य। तपाः माघः द्वे माघस्य। फाल्गुनः तपस्यः फाल्गुनिकः त्रयम्। चैत्रः चैत्रिकः मधुः त्रयम् ॥ १५ ॥ वैशाखः माधवः राधः त्रीणि। ज्येष्ठः शुक्रः द्वे। शुचिः आषाढः द्वे। श्रावणः नभाः सांतः। श्रावणिकः त्रीणि ॥ १६ ॥ नभस्यः प्रौष्ठपदः भाद्रः भाद्रपदः चत्वारि। आश्विनः इषः आश्वयुजः त्रीणि। कार्तिकः ॥ १७ ॥ बाहुलः ऊर्जः कार्तिकिकः चत्वारि। ऋतुभेदानाह। हेमंत इत्येक ऋतुः। शिशिर इत्यपरः। स च पुन्नपुंसकलिंगः एकैकम्। वसंतः पुष्प-

१ इदं पद्यं तालपत्रपुस्तकेऽप्यस्ति ॥

वसंते पुष्पसमयः सुरभिर्ग्रीष्म ऊष्मकः ॥ १८ ॥
निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः ॥
स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ शरत्स्त्रियाम् ॥ १९ ॥
षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात् ॥
संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः ॥ २० ॥
मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः ॥
दैवे युगसहस्रे द्वे ब्राह्मः कल्पौ तु तौ नृणाम् ॥ २१ ॥
मन्वंतरं तु दिव्यानां युगानामेकसप्ततिः ॥

समयः सुरभिः त्रीणि वसंतस्य । ग्रीष्मः उष्मकः (ऊष्मकः) ॥ १८ ॥ निदाघः नितरां दह्यंतेऽत्र । दह भस्मीकरणे । हलश्चेति घञ् । न्यंक्वादित्वात्कुत्वम् । उष्णोपगमः उष्णः ऊष्मागमः "उष्मागमः" तपः इति सप्तकं ग्रीष्मस्य । तपो ऽकारांतः पुंसि । प्रावृट् वर्षणं वृट् प्रकृष्टा वृट् यत्र वृषु सेचने नहिवृतीति दीर्घः । वर्षाः द्वे वर्षर्तोः । तत्र प्रावृट्शब्दः षांतः स्त्रियाम् । वर्षाशब्दस्तु स्त्रीलिंगो भूम्नि नित्यं बहुवचनांत इत्यर्थः । शरदित्येकं ऋतुः स स्त्रीलिंगो दकारांतः ॥ १९ ॥ अमी हेमंतादयः षडपि ऋतवः ऋतुसंज्ञकाः । ऋतुशब्दः पुल्लिंगः । ते च हेमंतादयः मार्गशीर्षादिमासानां षड्भिर्युग्मैः क्रमाद्भवंति । उक्तं च । आदाय मार्गशीर्षाच्च द्वौ द्वौ मासावृतुर्मत इति । संवत्सरः वत्सरः अब्दः हायनः शरत् समाः षट्कं वर्षस्य । तत्र हायनांता अस्त्रियाम् । समाः स्त्रियां बहुत्वे च । समां समां विजायते इत्येकत्वेऽपि दृश्यते ॥ २० ॥ मानुषेण मासेन एकः पैत्रोऽहोरात्रः । तत्र कृष्णाष्टम्या उत्तरार्धे दिनारंभः शुक्लाष्टम्या उत्तरार्धे रात्र्यारंभः । तथा मानुषेण वर्षेण दैवतः देवानामहोरात्रः । तत्रोत्तरायणं दिनम् । दक्षिणायनं रात्रिः । मानुषाणां यत्कृतादि युगचतुष्टयं तद्दैवं युगं ज्ञेयम् । एवं दैवे द्वे युगसहस्रे ब्राह्मोऽहोरात्रः । अयमर्थः—उक्तानां देवताहोरात्राणां षष्ट्यधिकशतत्रयेण दिव्यं वर्षम् । दिव्यैर्द्वादशभिर्वर्षसहस्रैर्मानुषचतुर्युगं तच्च देवानामेकं युगं तत्सहस्रं ब्रह्मणो दिनं तत्तु भूतानां स्थितिकालस्तावत्येव रात्रिर्भूतानां प्रलयकाल इति । अत उक्तं तौ कल्पाविति । ये द्वे दैवे युगसहस्रे तौ नृणां कल्पौ स्थितिप्रलयकालावित्यर्थः ॥ २१ ॥ दिव्यानां युगानां या एकसप्ततिरेकाधिका सप्ततिः तन्मन्वंतरम् । मनूनां स्वायंभुवचाक्षुषादीनामंतरमवकाशो ऽवधिर्वा । तैश्चतुर्दशभिर्ब्रह्मणो दिनं भवति एकम् ।

संवर्तः प्रलयः कल्पः क्षयः कल्पांत इत्यपि ॥ २२ ॥
अस्त्री पंकं पुमान्पाप्मा पापं किल्बिषकल्मषम् ॥
कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृतम् ॥ २३ ॥
स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः ॥
मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसंमदाः ॥ २४ ॥
स्यादानंदथुरानंदः शर्मशातसुखानि च ॥
श्वःश्रेयसं शिवं भद्रं कल्याणं मंगलं शुभम् ॥ २५ ॥
भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम् ॥
शस्तं चाथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च ॥ २६ ॥
मतल्लिका मचर्चिका प्रकांडमुद्घतल्लजौ ॥

संवर्तः प्रलयः कल्पः क्षयः कल्पांतः पंच प्रलयस्य ॥ २२ ॥ पंकं पाप्मा पापं किल्बिषं कल्मषं कलुषं वृजिनं एनः अघं अंहः "अंधः" दुरितं दुष्कृतं द्वादश पापस्य। तत्र पंकं क्लीबपुंसोः। पाप्मा नकारांतःपुंसि। शेषं क्लीबे ॥ २३ ॥ धर्मं पुण्यं श्रेयः सुकृतं वृषः पंचकं सुकृतस्य। तत्र धर्मः क्लीबपुंसोः। वृषः पुंसि। मुत् प्रीतिःप्रमदः हर्षः प्रमोदः आमोदः संमदः॥२४॥ आनंदथुः टुनदि समृद्धौ द्वितोऽथुच्। आनंदः शर्म शातं "दंत्यादिर्वा"सुखं द्वादश हर्षस्य। तत्र प्रीति-साहचर्यान्मुदपि स्त्रियां दकारांतः। श्वःश्रेयसम्। श्वः आगामि श्रेयो यत्र। श्वसो वसीयःश्रेयस इत्यच्। शिवम्। शिवं च मोक्षे क्षेमे च महादेवे सुखे जले। शिवो योगांतरे वेदे गुग्गुलौ बालके हरे इति विश्वः। भद्रं (भंदं) "भंदं भद्रं शिवं तथेति त्रिकांडशेषः" कल्याणं मंगलं शुभम् ॥२५॥ भावुकं भविकं भव्यं कुशलं क्षेमं शस्तं द्वादश कल्याणमात्रस्य। तत्र क्षेमं शस्तं च पुन्नपुंसकयोः। श्वःश्रेयसमिति चतुरक्षरम्। पापपुण्यशब्दौ तथा सुखादिशब्दाः श्वःश्रेयःशिव-भद्रादयः शस्तांताः द्रव्ये विशेष्ये वर्तमानास्त्रिषु विशेष्यलिंगा इत्यर्थः। यथा पापा स्त्री। पापः पुमान्। पापं कुलमित्यादि ॥ २६ ॥ मतल्लिका मचर्चिका प्रकांडं "प्रकांडः पुंस्यपि। प्रकांडो न स्त्री विटपे मूलशाखांतरे तरोः। शस्त इति मेदिनी। अस्त्री प्रकांडो विटपे तरुस्कंधप्रशस्तयोरिति रभसः।" उद्धः तल्लजः अमूनि पंच प्रशस्तवाचकानि। एते तु पंच नित्यं द्रव्ये एव लिंगां-

प्रशस्तवाचकान्यमून्ययः शुभावहो विधिः ॥ २७ ॥
दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः ॥
हेतुर्ना कारणं बीजं निदानं त्वादिकारणम् ॥ २८ ॥
क्षेत्रज्ञ आत्मा पुरुषः प्रधानं प्रकृतिः स्त्रियाम् ॥
विशेषःकालिकोऽवस्था गुणाः सत्त्वं रजस्तमः॥२९॥
जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः ॥
प्राणी तु चेतनो जन्मी जंतुजन्युशरीरिणः ॥ ३० ॥
(जातिर्जातं च सामान्यं व्यक्तिस्तु पृथगात्मता ॥)(१)
चित्तं तु चेतो हृदयं स्वांतं हृन्मानसं मनः ॥ ३१ ॥
॥ इति कालवर्गः ॥ ४ ॥

तरेण सामानाधिकरण्येऽपि स्वलिंगं न जहति । प्रशंसावचनैश्चेति कृष्णसर्पवाप्यश्वादिवत् नित्यसमासः। यथा प्रशस्तो ब्राह्मणो ब्राह्मणमतल्लिका । प्रशस्ता गौर्गोमचर्चिका । गोप्रकांडम् । ब्राह्मणोद्धः । कुमारीतल्लजः । अयः एत्यनेन सुखम् । इण् गतौ घप्रत्ययः । शुभावहो विधिः शुभोत्पादकं दैवं सोऽय उच्यते अयोऽकारांतः एकम ॥२७॥ दैवं दिष्टं भागधेयं भाग्यं नियतिः। नियम्यतेऽनया क्तिन् । नियतिर्नियमे दैवे इति विश्वः । विधिः । षट्कं प्राक्तनकर्मणः । नियतिः स्त्री । विधिः पुंसि ।हेतुः कारणं बीजं त्रयं हेतुमात्रस्य । हेतुः पुंसि। यदादिकारणं तन्निदानं एकमुपादानकारणस्य ॥ २८ ॥ क्षेत्रज्ञः क्षीयते इति क्षेत्रं शरीरं तज्जानाति। ज्ञा अवबोधने, आतो नुपेति कः। आत्मा पुंसि स्वभावेऽपि प्रयत्नमनसोरपि। धृतावपि मनीषायां शरीरब्रह्मणोरपि ॥१॥ पुरुषः त्रयं शरीराधिदैवतस्य । प्रधानं प्रकृतिः द्वे सत्त्वादिगुणसाम्यावस्थायाः । यः कालिको विशेषः कालकृतो देहादेर्विशेषः यौवनादिरवस्थोच्यते एकम् । सत्त्वं रजः तमः एते गुणाः प्रकृतेर्धर्माः एकैकम् । रजस्तमसी सांते॥२९॥ जनुः जननं जन्म जनिः उत्पत्तिः उद्भवः षट्कं जन्मनः । जनुः सांतम् । जनिः स्त्री । प्राणी चेतनः जन्मी जंतुः जन्युः शरीरी षट्कं प्राणिनः ॥३०॥ जातिरित्यादि पद्यं केचिदत्र पठंति "इति टीकाकारेण लिखितं परंतु मूल एवैतत्पद्यं दृश्यते ।" जातिः जातं सामान्यं त्रयं घटत्वादिजातेः। व्यक्तिः व्यज्यतेऽनया व्यक्तिः।अंजू व्यक्त्यादौ

१ इदमर्धं तालपत्रपुस्तके नास्ति ॥

बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः ॥
प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः ॥ १ ॥
धीर्धारणावती मेधा संकल्पः कर्म मानसम् ॥
("अवधानं समाधानं प्रणिधानं तथैव च ॥") (१)
चित्ताभोगो मनस्कारश्चर्चा संख्या विचारणा ॥ २ ॥
("विमर्शो भावना चैव वासना च निगद्यते ॥") (२)
अध्याहारस्तर्क ऊहो विचिकित्सा तु संशयः ॥
संदेहद्वापरौ चाथ समौ निर्णयनिश्चयौ ॥ ३ ॥
मिथ्यादृष्टिर्नास्तिकता व्यापादो द्रोहचिंतनम् ॥
समौ सिद्धांतराद्धांतौ भ्रांतिर्मिथ्यामतिर्भ्रमः ॥ ४ ॥

क्तिन्। पृथगात्मता द्वे घटादिव्यक्तेः। चित्तं चेतः हृदयं स्वांतं हृत् मानसं मनः सप्तकं चित्तस्य। हृत् दकारांतः ॥३१॥ इति कालवर्गः ॥ ४ ॥ बुद्धिः मनीषा मनस ईषा। ईष गत्यादिषु, शकंध्वादिः। धिषणा धीः प्रज्ञा शेमुषी शेः मोहस्तं मुष्णाति। मुष स्तेये। शीङो विच्। मूलविभुजेति मुषेः कः। मतिः प्रेक्षा उपलब्धिः चित् संवित् प्रतिपत् ज्ञप्तिः चेतना चतुर्दश बुद्धेः। तत्र चित् तांतः। संविद् प्रतिपत् च दांतः ॥१॥ या धारणावती धीः सा मेधा एकम्। यन्मानसं कर्म मनोव्यापारः स संकल्पः एकम्। "अवधानादि त्रयं समाधानस्य"। चित्ताभोगः मनस्कारः द्वे मनसः सुखादौ तत्परतायाः। चर्चा संख्या विचारणा त्रयं प्रमाणैरर्थपरीक्षणस्य ॥२॥ "विमर्शादित्रयं पूर्वानुभूताविस्मरणस्य"। अध्याहारः तर्कः ऊहः त्रयं तर्कस्य। "अपूर्वोत्प्रेक्षणं तर्कः"। विचिकित्सा विपूर्वात् कितेः सन्नंतादकारः। संशयः संदेहः द्वापरः द्वौ परौ प्रकारौ यस्य पृषोदरादित्वादात्वम्। चत्वारि संशयज्ञानस्य। यथा स्थाणुर्वा पुरुषो वेति संशयः। निर्णयः निश्चयः द्वे निश्चयज्ञानस्य ॥३॥ मिथ्यादृष्टिः नास्तिकता द्वे परलोकाभाववादिज्ञानस्य। नास्ति परलोक इति मतिर्यस्य तस्य भावो नास्तिकता। व्यापादः द्रोहचिंतनम् द्वे परद्रोहचिंतनस्य। सिद्धांतः राद्धांतः द्वे सिद्धांतस्य। सिद्धः अंतो निर्णयो यस्य स सिद्धांतः। भ्रांतिः मिथ्यामतिः भ्रमः त्रयमयथार्थज्ञानस्य। स्थाणौ पुरुषोऽयमिति ज्ञानं भ्रांतिः। स्थाणुर्वा पुरुषो वायमित्-

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥ २ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः ॥
अंगीकाराभ्युपगमप्रतिश्रवसमाधयः ॥ ५ ॥
मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः ॥
मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम् ॥ ६ ॥
मोक्षोऽपवर्गोऽथाज्ञानमविद्याहंमतिः स्त्रियाम् ॥
रूपं शब्दो गंधरसस्पर्शाश्च विषया अमी ॥ ७ ॥
गोचरा इंद्रियार्थाश्च हृषीकं विषयींद्रियम् ॥
कर्मेंद्रियं तु पाय्वादि मनोनेत्रादि धींद्रियम् ॥ ८ ॥

नेककोटिकं ज्ञानं संशयः । स्थाणौ स्थाणुरिति ज्ञानं निश्चयः ॥ ४ ॥ संवित् आगूः प्रतिज्ञानं नियमः आश्रवः संश्रवः अंगीकारः अभ्युपगमः प्रतिश्रवः समाधिः दशकं अंगीकारस्य । तत्र संवित् आगूश्च स्त्रियाम् । "आगूर्वधूवत् । आग्वौ आग्व इत्यादि । पक्षे धूर्वत् आगुरौ आगुर इत्यादि" ॥ ५ ॥ मोक्षविषये या धीर्बुद्धिः तत् ज्ञानं एकम् । मोक्षशास्त्रादन्यत्र शास्त्रे शिल्पे चित्रादौ च धीर्विज्ञानमुच्यते । "मोक्षनिमित्तं शिल्पशास्त्रयोर्धीर्ज्ञानम् । अन्यनिमित्तं या तयोर्धीः सा विज्ञानमिति वा" । विज्ञानं कर्मणि ज्ञाने इति हैमः । एकम् । मुक्तिः जन्ममरणाभ्यां मोचनं मुच्लृ मोक्षणे क्तिन् । मुक्तिर्मोचनमोक्षयोरिति हैमः । कैवल्यं निर्वाणं श्रेयः । अतिशयेन प्रशस्यं ईयसुनि प्रशस्यस्येति श्रादेशः । निःश्रेयसम् । अचतुरेति निपातनादच् । अमृतम् ॥ ६ ॥ मोक्षः अपवर्गः अष्टकं मोक्षस्य । अज्ञानं अविद्या अहंमतिः । अहंप्रधाना मतिः । अहमिति विभक्तिप्रतिरूपकमव्ययं अहंकारार्थकम् । त्रयमज्ञानस्य । रूपं शब्दः गंधः रसः स्पर्शः एते पंच विषया इति गोचरा इति इंद्रियार्था इति चोच्यंते त्रयम् ॥ ७ ॥ हृषीकं विषयि इंद्रियं इंद्रस्यात्मनो लिंगम् । त्रयं चक्षुरादेरिंद्रियस्य । विषयि नांतम् । पायूपस्थादि कर्मेंद्रियमुच्यते । आदिना वागादि । "तद्यथा । पायूपस्थं पाणिपादौ वाक्चेतींद्रिय संग्रहः । उत्सर्ग आनंदादानगत्यालापाश्च तत्क्रिया इति" । मनोनेत्रादि धींद्रियमुच्यते । आदिना श्रोत्रादि । "मनः कर्णस्तथा नेत्रं रसना च त्वचा सह ॥ नासिका चेति षट् तानि धींद्रियाणि प्रचक्षते" एकम् ॥ ८ ॥ रसभेदानाह । तुवरः "दीर्घादिरपि कुवरोऽपि" कषायः द्वे तुवरस्य प्राकृतभाषया तुरट इति ख्यातस्य । मधुराद्याः पृथक् पृथक् ज्ञेयाः । एवं तुव-

तुवरस्तु कषायोऽस्त्री मधुरो लवणः कटुः ॥
तिक्तोऽम्लश्च रसाः पुंसि तद्वत्सु षडमी त्रिषु ॥ ९ ॥
विमर्दोत्थे परिमलो गंधे जनमनोहरे ॥
आमोदः सोऽतिनिर्हारी वाच्यलिंगत्वमागुणात् ॥१०॥
समाकर्षी तु निर्हारी सुरभिर्घ्राणतर्पणः ॥
इष्टगंधः सुगंधिः स्यादामोदी मुखवासनः ॥ ११ ॥
पूतिगंधिस्तु दुर्गंधो विस्रं स्यादामगंधि यत् ॥
शुक्लशुभ्रशुचिश्वेतविशदश्येतपांडराः ॥ १२ ॥

राद्याः षडपि रसा उच्यंते । तत्र तुवरो हरीतक्यादौ प्रसिद्धः । मधुरो जलादौ प्रसिद्धः । लवणः सैंधवादौ प्रसिद्धः । कटुर्मरीचादौ प्रसिद्धः । एवं तिक्तो निंबादौ । अम्लस्तिंत्तिड्यादौ "अम्बं" । रस्यंते आस्वाद्यंते इति रसाः । कर्माणि घञ् । अमी तुवराद्याः षडपि रसमात्रे वर्तमानाः पुंसि । तद्वत्सु रसवत्सु वर्तमानास्त्रिषु वाच्यलिंगा इत्यर्थः । "तुवरकषायौ नपुंसकावपि अस्त्रीत्युक्तत्वात्" ॥ ९ ॥ विमर्दोत्थे संघर्षणादिनोत्पन्ने जनमनोहरे गंधे परिमल इत्येकम् । विमर्दग्रहणेन जातिपद्मादेर्निरासः । योऽतिनिर्हारी अत्यंतसमाकर्षी स गंध आमोद उच्यते । "कस्तूरिकायामामोदः कर्पूरे मुखवासनः । बकुले स्यात्परिमलश्चंपके सुरभिस्तथेति शब्दार्णवः" एकम् । इतः परं आगुणाद्गुणाः शुक्लादय इति वक्ष्यमाणाद्गुणशब्दात्प्राक् वाच्यलिंगत्वं अभिधेयानुसारेणत्रिलिंगत्वम् ॥ १० ॥ समाकर्षी निर्हारी द्वे दूरनिपातिनो गंधद्रव्यस्य । निर्हरत्यवश्यं मनो निर्हारी । सुरभिः घ्राणतर्पणः इष्टगंधः सुगंधिः चत्वारि शोभनगंधयुक्तस्य । शोभनो गंधोऽस्य सुगंधिः । आमोदी मुखवासनः इति द्वे यन्मुखं वासयति तस्य तांबूलादेः ॥ ११ ॥ पूतिगंधिः दुर्गंधः द्वे अनिष्टगंधयुक्तस्य । पूतिर्दुष्टः गंधो यस्य सः । यदामगंधि तद्विस्रं एकं अपक्वमांसादिगंधस्य । आमोऽपक्वमलस्तस्येव गंधो यस्य तत् । उपमानाच्चेतीत् । शुक्लः शुभ्रः शुचिः श्वेतः विशदः श्येतः पांडरः ॥ १२ ॥ अवदातः सितः गौरः अवलक्षः "वलक्षोऽपि" वष्टिभागुरिरित्यनेनाल्लोपपक्षे । धवलः अर्जुनः हरिणः पांडुरः । नगपांसुपांडुभ्यश्चेति रः । पांडुः षोडश नामानि शुक्लस्य । "तत्रार्जुनांतानि त्रयोदश नामानि शुक्लस्य । हरिणादीनि त्रीणि पीत-

अवदातः सितो गौरोऽवलक्षो धवलोऽर्जुनः ॥
हरिणः पांडुरः पांडुरीषत्पांडुस्तु धूसरः ॥ १३ ॥
कृष्णे नीलासितश्यामकालश्याममलमेचकाः ॥
पीतो गौरो हरिद्राभः पालाशो हरितो हरित् ॥ १४ ॥
लोहितो रोहितो रक्तः शोणः कोकनदच्छविः ॥
अव्यक्तरागस्त्वरुणः श्वेतरक्तस्तु पाटलः ॥ १५ ॥
श्यावः स्यात्कपिशो धूम्रधूमलौ कृष्णलोहिते ॥
कडारः कपिलः पिंगपिशंगौ कद्रुपिंगलौ ॥ १६ ॥

मिश्रशुक्लस्येति विभागः साधुः । शब्दार्णवे तु । श्वेतस्तु समपीतोऽसौ रक्तेतर-जपारुचिः । वलक्षस्तु सितः शावः कदलीकुसुमोपमः ॥ अर्जुनस्तु सितः कृष्ण-लेशवान् कुमुदच्छविः । पांडुस्तु पीतभागार्धः केतकीधूलिसन्निभ इत्युक्तम् । हरिणौ पांडुसारंगाविति हैमः ।" ईषत्पांडुः धूसरः । "धूसरस्तु सितः पीतले-शवान् बकुलच्छविरिति शब्दार्णवः ।" द्वे ईषद्धवलस्य ॥ १३ ॥ कृष्णः नीलः असितः श्यामः कालः श्यामलः मेचकः । "मेचकः कृष्णनीलः स्यादतसीपु-ष्पसन्निभ इति शब्दार्णवः" । सप्तकं नील्यादिगतवर्णस्य । पीतः गौरः हरि-द्राभः त्रयं पीतस्य । पालाशः "पलाशोऽपि" हरितः हरित् त्रयं शिरीषादिपत्र-गतवर्णस्य । हरित्तांतः ॥१४॥ लोहितः रोहितः रक्तः त्रयं रक्तस्य । यः कोकन-दच्छविः रक्तोत्पलाभः स शोण इत्येकम् । योऽव्यक्तराग ईषद्रक्तः सोऽरुणः । "अरुणः कृष्णलोहित इत्यमरमाला" एकम् । यः श्वेतमिश्रो रक्तः स पाटल इत्येकम् ॥ १५ ॥ श्यावः कपिशः द्वे धूसरारुणवर्णस्य । कपिर्मर्कटः तद्वद्वर्णो-ऽस्त्यस्य कपिशः । धूम्रः धूमलः कृष्णलोहितः त्रयं कृष्णमिश्रलोहितवर्णस्य । कडारः कपिलः पिंगः पिशंगः कद्रुः पिंगलः षट्कं पिंगलवर्णस्य । अयमत्यंत-गौरबालकस्य केशेषु प्रसिद्धः । पिंगा गोरोचना पांडुरिति कात्यः । "शब्दार्णवे तु सितपीतहरिद्रक्तः कडारस्तृणवह्निवत् । अयं तद्रक्तपीतांगः कपिलो गोवि-भूषणः । हरितांशेऽधिकेऽसौ तु पिशंगः पद्मधूलिवत् । पिशंगस्त्वासितावे-शार्तिपञ्चो दीपशिखादिषु । पिंगलस्तु परच्छायः पिंगे शुक्लांगखंडवदित्युक्तम्" ॥ १६ ॥ चित्रं किर्मीरः "कर्मीरः" कल्माषः शबलः एतः कर्बुरः षट्कं कर्बुरस्य विचित्रवर्णस्येत्यर्थः । शुक्लादयः गुणे गुणमात्रे वर्तमानाः पुंसि । चित्रं तु रूप-

चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे ॥
गुणे शुक्लादयः पुंसि गुणिलिंगास्तुतद्वति ॥ १७ ॥
इति धीवर्गः ॥ ५ ॥
ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती ॥
व्याहार उक्तिर्लपितं भाषितं वचनं वचः ॥ १ ॥
अपभ्रंशोऽपशब्दः स्याच्छास्त्रे शब्दस्तु वाचकः ॥
तिङ्सुबंतचयो वाक्यं क्रिया वा कारकान्विता ॥ २ ॥
श्रुतिः स्त्री वेद आम्नायस्त्रयी धर्मस्तु तद्विधिः ॥

भेदान्नपुंसकम् । यथास्य पटस्य शुक्लं रूपम् । तद्वति गुणवति वस्तुनि वर्तमाना गुणिलिंगाः अभिधेयलिंगाः । गुणवचनेभ्यो मतुपो लुक् इति गुणिनि वर्तमानत्वम् । तत्प्रत्याख्याने गुणगुणिनोरभेदान्निर्वाहः इति महाभाष्ये । यथा शुक्ला शाटी शुक्लः पटः शुक्लं वस्त्रम् । रोहितादीनां स्त्रीत्वे तु वर्णादनुदात्तात्तोपधात्तो न इति ङीष्वा तकारस्य नकारश्च । यथा श्येनी श्येता । रोहिणी रोहिता । लोहिनी लोहितेत्यादि ॥ १७ ॥ इति धीवर्गः ॥५॥ ब्राह्मी ब्रह्मण इयम् । ब्राह्मोऽजाताविति टिलोपः ङीप् । भारती भाषा गीः "गिरापि । ब्रह्माणी वचनं वाचा जल्पितं गदितं गिरेति शब्दार्णवः । गीर्भणितिर्गिरेति त्रिकांडशेषः । तत्र गिरा वाणीति पाठः ।" वाक् वाणी सरस्वती व्याहारः उक्तिः लपितं भाषितं वचनं वचः त्रयोदश नामानि वचनस्य । तत्रापि सरस्वत्यंतानि वचनाधिष्ठात्र्या देवताया अपि । व्याहारादीनि त्वधिष्ठेयस्यैव । गीः रेफांता ॥ १ ॥ अपभ्रष्टः शब्दः गावीगोणीत्यादिः अपशब्दः सोऽपभ्रंश इत्युच्यते एकम् । शास्त्रे व्याकरणादौ यो वाचकः स शब्द इत्युच्यते एकम् । यथा ओतप्रोततंतूनां वाचकः पट इति । तिङ्सुबंतचयः तिङंतसुबंतपदसमूहो वाक्यम् । वचेर्ण्यत, वचोशब्दसंज्ञायामिति कुत्वम् । तिङंतचयो यथा पचति भवति पाको भवतीत्यर्थः । सुबंतचयो यथा । प्रकृतिसिद्धमिदं हि महात्मनाम् । कारकान्विता कारकैः संबद्धा क्रिया वाक्यमुच्यते । यथा देवदत्त गामभिरक्ष शुक्लदंडेन । अत्रान्वितत्वं आकांक्षायोग्यतासन्निधिवशाज्ज्ञेयम् ॥ २ ॥ श्रुतिः वेदः आम्नायः त्रयी चत्वारि वेदस्य । अत्र लिंगसंकरो न दोषाय स्त्रीति विशेषविधानात् त्रय्या व्याख्यायमानत्वाच्च । तद्विधिः वैदिको विधिर्यागादिः धर्म इत्युच्यते । वेदमू-

स्त्रियामृक्सामयजुषी इति वेदास्त्रयस्त्रयी ॥ ३ ॥
शिक्षेत्यादि श्रुतेरंगमोंकारप्रणवौ समौ ॥
इतिहासः पुरावृत्तमुदात्ताद्यास्त्रयः स्वराः ॥ ४ ॥
आन्वीक्षिकी दंडनीतिस्तर्कविद्यार्थशास्त्रयोः ॥
आख्यायिकोपलब्धार्था पुराणं पंचलक्षणम् ॥५॥(१)
प्रबंधकल्पना कथा प्रवह्लिका प्रहेलिका ॥

लत्वात्स्मृत्युक्तोऽपि विधिर्धर्म एव । यदाह गौतमः । श्रुतिस्मृतिविहितो धर्म इति । केचित्तु लिंगसंकरो मा भूदिति त्रयीधर्म इति समस्तं पदमाहुः । "विधानमृग्यजुः साम्नां त्रयीधर्मं विदुर्बुधाः" ॥ त्रयीशब्दे विशेषं दर्शयन्वेदभेदानभिधत्ते । ऋक् ऋच्यंते स्तूयंते देवा अनया । ऋच् स्तुतौ संपदादित्वात् क्विप् । साम यजुः इति त्रयो वेदामिलितास्त्रयी ज्ञेया । तत्र ऋक्शब्दः स्त्रीलिंगः ॥ ३ ॥ शिक्षा कल्पो व्याकरणमित्यादि वेदस्यांगं ज्ञेयम् ।"शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः ॥ छंदोविचितिरित्येष षडंगो वेद उच्यते । प्रसंगादिदमप्युच्यते । वेदानामष्टौ विकृतयः । जटा माला शिखा रेखा ध्वजो दंडो रथो घनः ॥ अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः ॥ षट् शास्त्राण्याह । गौतमस्य कणादस्य कपिलस्य पतंजलेः । व्यासस्य जैमिनेश्चापि दर्शनानि षडेव हि ॥ चतुर्दश विद्याः । अंगानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश" ॥ " कल्पः कल्पसूत्रम् " । ओंकारः प्रणवः द्वे । इतिहासः इतिहेति पारंपर्योपदेशेऽव्ययं तदास्तेऽस्मिन् । आस उपवेशने अधिकरणे घञ् । पुरावृत्तं द्वे पूर्वचरितस्य महाभारतादेः । उदात्तः अनुदात्तः स्वरितः इति त्रयः स्वरा उच्यंते एकम् ॥ "उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः । चतुर्थः प्रचितो नोक्तो यतोऽसौ छांदसः स्मृतः" ॥ ४ ॥ आन्वीक्षिकीत्येकं तर्कविद्यायां गौतमादिप्रणीतायाम् । दंडनीतिरित्येकं अर्थशास्त्रे बृहस्पत्यादिप्रणीते । "अर्थस्य भूम्यादेः शास्त्रम् " । आख्यायिका उपलब्धार्था द्वयं अनुभूतार्थप्रतिपादकस्य वासवदत्तादेः । यत्पंचलक्षणं तत्पुराणमुच्यते । " सर्गश्च प्रतिसर्गश्च वंशो मन्वंतराणि च ॥ वंश्यानुचरितं चैव पुराणं पंचलक्षणम् " ॥५॥ प्रबंधस्य वाक्यविस्तरस्य या कल्पना रचना सा कथा एकं नाटकरामायणादेः । प्रवह्लिका "प्रव-

१ सर्गश्चेति टीकास्थं पद्यं तालपत्रपुस्तके मूल एवास्ति ॥

स्मृतिस्तु धर्मसंहिता समाहृतिस्तु संग्रहः ॥६॥
समस्या तु समासार्था किंवदंती जनश्रुतिः ॥
वार्ता प्रवृत्तिर्वृत्तांत उदंतः स्यादथाह्वयः ॥ ७ ॥
आख्याह्वे अभिधानं च नामधेयं च नाम च ॥
हूतिराकारणाह्वानं संहूतिर्बहुभिः कृता ॥ ८ ॥
विवादो व्यवहारः स्यादुपन्यासस्तु वाङ्मुखम् ॥
उपोद्घात उदाहारः शपनं शपथः पुमान् ॥ ९ ॥

ह्लिका" प्रहेलिका द्वयं यथापरैः संदिह्यते तादृशगुप्ताभिधानस्य। यथा। पानीयं पातुमिच्छामि त्वत्तः कमललोचने॥ यदि दास्यसि नेच्छामि नो दास्यसि पिबाम्यहमिति। "यदुक्तम्। व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपना। यत्र बाह्यार्थसंबद्धं कथ्यते सा प्रहेलिकेति"। या मन्वादिभिः प्रणीता धर्मसंहिता "धर्मबोधार्थं रचिता संहिता" सा स्मृतिः। वेदार्थस्मरणपूर्वकं रचितत्वात्स्मृतिरित्यर्थोऽपि। स्मरतेः क्तिन् एकम्। समाहृतिः संग्रहः। "विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः। निबंधो यः समासेन संग्रहं तं विदुर्बुधाः" द्वयं संग्रहग्रंथस्य॥६॥ या समासार्था पूरणीयार्था कविशक्तिपरीक्षणार्थमपूर्णतयैव पठ्यमानार्था वा सा समस्या। यथा शतचंद्रं नभस्तलम्। तत्पूरणं यथा। दामोदरकराघातविह्वलीकृतचेतसा। दृष्टं चाणूरमल्लेनेति। "समस्या त्वसमासार्थेति पाठे तु अपरिपूर्णार्थेत्यर्थः।" किं वदंती "किंवदंतिः" जनश्रुतिः जनेभ्यः श्रूयते। कर्मणि क्तिन्। द्वे चतुरक्षरे नामनी लोकप्रवादस्य। वार्ता प्रवृत्तिः वृत्तांतः उदंतः चत्वारि यथास्थितलोकवृत्तकथनस्य। आह्वयः॥७॥ आख्या आह्वा अभिधानं नामधेयम्। भागरूपेति नामशब्दात् धेयप्रत्ययः। नाम षट्कं नाम्नः। हूतिः आकारणा आह्वानं त्रयं आह्वानस्य। या बहुभिः कृता हूतिः सा संहूतिः एकम्॥ ८ ॥ विरुद्धो वादः विवादः व्यवहारः। "वि नानाऽर्थेऽव संदेहे हरणं हार उच्यते। नानासंदेहहरणाद्व्यवहारः प्रकीर्तित इति कात्यायनः।" द्वे ऋणदानादिनिमित्तविविधवादस्य। उपन्यासः वाङ्मुखं वाचोमुखमिव मुखमुपक्रमः द्वे वचनारंभस्य। उपोद्घातः उदाहारः द्वे प्रकृतसिद्ध्यर्थचिंतनस्य। तदुक्तम्। चिंतां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षत इति। "उपोद्घातादि द्वे वक्ष्यमाणोपयोग्यर्थवर्णनस्येति वा।" शपनं शपथः द्वयम्॥ ९ ॥ प्रश्नः अनुयोगः पृच्छा त्रयं प्रश्नस्य। प्रतिवाक्यं उत्तरं

प्रश्नोऽनुयोगः पृच्छा च प्रतिवाक्योत्तरे समे ॥
मिथ्याभियोगोऽभ्याख्यानमथ मिथ्याभिशंसनम्॥१०॥
अभिशापः प्रणादस्तु शब्दः स्यादनुरागजः ॥
यशः कीर्तिः समज्ञा च स्तवः स्तोत्रं स्तुतिर्नुतिः ॥११॥
आम्रेडितं द्विस्त्रिरुक्तमुच्चैर्घुष्टं तु घोषणा ॥
काकुःस्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः ॥१२॥
अवर्णाक्षेपनिर्वादपरीवादापवादवत् ॥
उपक्रोशो जुगुप्सा च कुत्सा निंदा च गर्हणे ॥ १३ ॥
पारुष्यमतिवादः स्याद्भर्त्सनं त्वपकारगीः ॥
यः सनिंद उपालंभस्तत्र स्यात्परिभाषणम् ॥ १४ ॥

द्वे प्रतिवचनस्य। मिथ्याभियोगः अभ्याख्यानं द्वे "शतं मे धारयसीत्याद्यसत्याक्षेपस्य"। मिथ्याभिशंसनम् ॥१०॥ अभिशापः द्वे सुरापानादिमिथ्यापापोद्भावनस्य। अनुरागजः गुणानुरागोत्थः शब्दः प्रणाद इत्युच्यते एकम्। यशः कीर्तिः। कीर्तिः प्रसादयशसोर्विस्तारे कर्दमेऽपि चेति हैमः। समज्ञा "समज्या समाज्ञा चेति पाठांतरम्" त्रयं कीर्तेः। स्तवः स्तोत्रं स्तुतिः नुतिः चत्वारि स्तुतेः॥ ११॥ द्विवारं त्रिवारं चोक्तं आम्रेडितमुच्यते। यथा "सर्पः सर्प इति" एकम्। उच्चैर्घुष्टं घोषणा द्वे उच्चैर्घोषस्य। शोकभीतिकामादिभिर्ध्वनेर्यो विकारः सा काकुः एकम् ॥ १२ ॥ अवर्णः "वर्णः प्रशंसा तद्विरुद्धोऽवर्णः" आक्षेपः निर्वादः। परीवादः "परिवादः" अपवादः उपक्रोशः जुगुप्सा कुत्सा निंदा गर्हणं दश निंदायाः। अपवादवदिति वत्प्रत्ययेन अवर्णादीनामुपक्रोशस्य चैकलिंगत्वं ज्ञापितम्। उपक्रोशांता अवर्णादयः पुंसीति तात्पर्यम्॥ १३ ॥ पारुष्यं परुषो निष्ठुरभाषणं पुरुष एव पारुष्यम्। स्वार्थे ष्यञ्। अतिवादः द्वे निष्ठुरभाषणस्य। अपकारगीः अपकारार्थकं भाषणं "चौरोऽसि त्वां घातयिष्यामीत्यादि" तद्भर्त्सनमुच्यते एकम्। कस्यांचित् व्यक्तौ क्रोधपूर्वकं दोषप्रतिपादनमुपालंभः यः सनिंदः निंदायुक्त उपालंभस्तत्र परिभाषणमित्येकम्। "उपालंभो द्वेधा। गुणाविष्करणपूर्वको निंदापूर्वकश्च। आद्यो यथा। महाकुलीनस्य तव किमुचितमिदम्। द्वितीयस्तु बंधकीसुतस्य तवोचितमेवेदमिति। तत्र यो द्वितीयः स परिभाषणम्"

तत्र त्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति ॥
स्यादाभाषणमालापः प्रलापोऽनर्थकं वचः ॥ १५ ॥
अनुलापो मुहुर्भाषा विलापः परिदेवनम् ॥
विप्रलापो विरोधोक्तिः संलापो भाषणं मिथः ॥ १६ ॥
सुप्रलापः सुवचनमपलापस्तु निह्नवः ॥
("चोद्यमाक्षेपाभियोगौ शापाक्रोशौ दुरेषणा ॥
अस्त्री चाटुचटुश्लाघा प्रेम्णा मिथ्याविकत्थनम्॥१॥") (१)
संदेशवाग्वाचिकं स्याद्वाग्भेदास्तु त्रिषूत्तरे ॥ १७ ॥
रुशती वागकल्याणी स्यात्कल्या तु शुभात्मिका ॥
अत्यर्थमधुरं सांत्वं संगतं हृदयंगमम् ॥ १८ ॥

॥ १४ ॥ मैथुनं प्रति परस्त्रीपुरुषसंयोगेन निमित्तेन य आक्रोशस्तत्र आक्षारणेत्येकम् । "आक्षारणमिति क्लीबमपि" । आभाषणं आलापः द्वे अन्योन्यसंबोधनपूर्वकभाषणस्य । यदनर्थकं वचः स प्रलापः इत्येकम् ॥ १५ ॥ अनुलापः मुहुर्भाषा द्वे बहुशो भाषणस्य । विलापः परिदेवनं द्वे रोदनपूर्वकभाषणस्य । विप्रलापः विरोधोक्तिः द्वे अन्योन्यविरुद्धभाषणस्य । मिथः परस्परं उक्तिप्रत्युक्तियुक्तं यद्भाषणं स संलापः "आलापस्तु एकेनापि क्रियते" ॥१६॥ सुप्रलापः सुवचनं द्वे सुभाषितस्य । अपलापः निह्नवः द्वे गोपनकारिवचनस्य । यथा तन्मिथ्येति प्रतिवादिनि निह्नवः । "चोद्यादित्रयमद्भुतप्रश्नस्य । शापादित्रयं शापवचनस्य । चाट्विति त्रयं प्रेम्णा मिथ्याभाषणस्य" । संदेशवाक् वाचिकं द्वे दूतादिमुखेन संदिश्यमानवचनस्य । उत्तरे अतः परं वक्ष्यमाणाः वाग्भेदाः "रुशत्यादयः" सम्यगंतास्त्रिषु त्रिलिंगाः ॥१७॥ यथा रुशन् शब्दः रुशद्वचनम् । या अकल्याणी वाक् सा रुशती एकं तांतम् । या शुभात्मिका वाक् सा कल्या "काल्यापि" एकं तालव्यांतम् । यदतिशयेन मधुरं तत्सांत्वं एकम् । संगतं हृदयंगमं द्वे संबद्धवचनस्य ॥ १८ ॥ निष्ठुरं परुषं द्वे कर्कशवचनस्य । ग्राम्यं अश्लीलं द्वे शिथिलवचसः । "अश्रीकारकभंडादिवचस इत्यर्थः ।" यत्प्रियं सत्यं वचनं तत्र सूनृतमित्येकम् । तदुक्तं रभसे । सूनृतं मंगलेऽपि स्यात्प्रियसत्ये वचस्यपि । यत्पर-

१ इदं पद्यं तालपत्रपुस्तकेऽपि नास्ति ॥

निष्ठुरं परुषं ग्राम्यमश्लीलं सूनृतं प्रिये ॥
सत्येऽथ संकुलक्लिष्टे परस्परपराहते ॥ १९ ॥
लुप्तवर्णपदं ग्रस्तं निरस्तं त्वरितोदितम् ॥
अंबूकृतं सनिष्ठीवमबद्धं स्यादनर्थकम् ॥ २० ॥
अनक्षरमवाच्यं स्यादाहतं तु मृषार्थकम् ॥
("सोल्लुंठनं तु सोत्प्रासं भणितं रतिकूजितम् ॥
श्राव्यं हृद्यं मनोहारि विस्पष्टं प्रकटोदितम् ॥ १ ॥") (१)
अथ म्लिष्टमविस्पष्टं वितथं त्वनृतं वचः ॥ २१ ॥
सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति ॥

स्परेण पराहतं "माता मे वंध्येतिवत्" पूर्वापरविरुद्धं तत्र संकुलं क्लिष्टमिति नामद्वयम्। यथा पश्यत्यचक्षुः स शृणोत्यकर्णः ॥१९॥ यत् लुप्तवर्णपदं असंपूर्णोच्चारितं वचस्तद् ग्रस्तमित्येकम्। ग्रस्तं ग्रासीकृतेऽपि स्याल्लुप्तवर्णपदोदिते इत्युक्तम्। यत्त्वरितोदितं तन्निरस्तं एकम्। सनिष्ठीवं लालायुक्तं तदंबूकृतमुच्यते। अंबू इति च्व्यंतम्। "सनिष्ठेवमपि" एकम्। यदनर्थकं अर्थशून्यं तदबद्धं स्यात् एकम्। "अवध्यमपि। अवध्यमवधार्हे स्यादनर्थकवचस्यपीति दर्शनात्" ॥२०॥ अनक्षरं "न प्रशस्ताक्षराणि यस्मिन्। अक्षराणामप्राशस्त्यं चार्थद्वारकं तच्च वचनानर्हम्" अवाच्यं द्वे वक्तुमनर्हस्य वचसः। मृषार्थकं असंताभूतार्थकं तत् आहतं ज्ञेयम्। यथा। एष वंध्यासुतो याति खपुष्पकृतशेखरः। मृगतृष्णांभसि स्नातः शशशृंगधनुर्धर इति। एकम्। "सोल्लुंठनादि द्वे सोपहासवचनस्य। भणितादि द्वे रतिसमयकूजितस्य। मणितमित्यपि पाठः। श्राव्यादि पंच स्पष्टवचनस्य।" म्लिष्टं। क्षुब्धस्वांतेति निपातनादिडभावः। अविस्पष्टम्। "अत्र म्लिष्टमित्योष्ठ्यादिपाठः एव दृश्यते। म्लिष्टं त्रिष्वव्यक्तवाचीति मेदिनी। द्वे अव्यक्तवचनस्य।" यदनृतं वचः। यथा सत्यपि धने नास्ति धनमिति तद्वितथमित्युच्यते एकम् ॥ २१ ॥ सत्यम्। सत्यं कृते च शपथे तथ्ये च त्रिषु तद्वतीति रभसः। तथ्यं ऋतं सम्यक् चत्वारि सत्यस्य। सम्यक् चकारांतः। पूर्वं वाग्भेदास्तु त्रिषूत्तर इति वचनवृत्तित्वेन सत्यादीनां त्रिलिंगत्वमुक्तम्। यथा सत्यः शब्दः सत्या वाक् सत्यं वचनमिति। इदानीं वक्तृवृत्तित्वेन एषां त्रिलिंगत्वमाह अमूनीति।

१ इदं पद्यं तालपत्रपुस्तकेऽपि नास्ति ॥

शब्दे निनादनिनदध्वनिध्वानरवस्वनाः ॥ २२ ॥
स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः ॥
आरवारावसंरावविरावा अथ मर्मरः ॥ २३ ॥
स्वनिते वस्त्रपर्णानां भूषणानां तु शिंजितम् ॥
निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि ॥ २४ ॥
वीणायाः क्वणिते प्रादेः प्रक्वाणप्रक्वणादयः ॥
कोलाहलः कलकलस्तिरश्चां वाशितं रुतम् ॥
स्त्री प्रतिश्रुत्प्रतिध्वाने गीतं गानमिमे समे ॥ २५ ॥

॥ इति शब्दादिवर्गः ॥ ६ ॥

निषादर्षभगांधारषड्जमध्यमधैवताः ॥
पंचमश्चेत्यमी सप्त तंत्रीकंठोत्थिताः स्वराः ॥ १ ॥

बद्वति सत्त्ववति त्रिषु । यथा सत्या स्त्री सत्यः पुमान् सत्यं कुलमिति । शब्दः निनादः निनदः ध्वनिः ध्वानः रवः स्वनः ॥ २२ ॥ स्वानः निर्घोषः निर्ह्रादः नादः निस्वानः निस्वन आरवः आरावः संरावः विरावः सप्तदश शब्दमात्रस्य। वस्त्रपर्णानां स्वनिते शब्दे मर्मर इत्येकम् । " मर्मरो वस्त्रभेदे च शुष्कपर्णध्वनौ तथा। पुंसि स्त्रियां पुनः प्रोक्ता मर्मरी पीतदारुणीति मेदिनी"॥२३॥ भूषणानां नूपुरादीनां स्वनिते शिंजितमित्येकम्। "तालव्यादि"। निक्वाणः निक्वणः क्वाणः क्वणः क्वणनं पंच वीणादिस्वनितस्य ॥ २४ ॥ प्रादेरुपसर्गात् ये प्रक्वाणः प्रक्वण इत्यादयस्ते वीणाया एव क्वणिते नान्यत्र। "आदिशब्दादुपक्वणादयः"। कोलाहलः कलकलः द्वे बहुभिः कृतस्य स्पष्टशब्दस्य । तिरश्चां पक्षिणां रुतं शब्दः वाशितं एकम्। तालव्यमध्योऽयम्। प्रतिश्रुत् प्रतिध्वानः द्वे प्रतिशब्दस्य । गीतं गानं द्वे गायनस्य ॥२५॥ इति शब्दादिवर्गः॥६॥ स्वरभेदानाह। निषादः। निषादः स्वरभेदेऽपि चंडाले धीवरांतरे इति विश्वः। ऋषभः गांधारः षड्जः। नासां कंठमुरस्तालु जिह्वां दंतांश्च संस्पृशन्। षड्जः स जायते यस्मात्तस्मात्षड्ज इति स्मृतः। मध्यमः धैवतः पंचमः इत्यमी तंत्रीभ्यः कंठेभ्यश्चोत्थिताः सप्त स्वरा ज्ञेयाः एकैकम्। तत्र निषादं नर्दंति गजाः । ऋषभं गावः। गांधारं अजादयः। षड्जं मयूराः।

काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे ॥
कलो मंद्रस्तु गंभीरे तारोऽत्युच्चैस्त्रयस्त्रिषु ॥ २ ॥
( "नृणामुरसि मध्यस्थो द्वाविंशतिविधो ध्वनिः ॥
स मंद्रः कंठमध्यस्थस्तारः शिरसि गीयते ॥१॥")(१)
समन्वितलयस्त्वेकतालो वीणा तु वल्लकी ॥
विपंची सा तु तंत्रीभिः सप्तभिः परिवादिनी ॥ ३ ॥
ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् ॥
वंश्यादिकं तु सुषिरं कांस्यतालादिकं घनम् ॥ ४ ॥

मध्यमं क्रौंचाः । धैवतमश्वाः । पंचमं कोकिलाः । तदुक्तं नारदेन । षड्जं रौति मयूरस्तु गावो नर्दंति चर्षभम् । अजाविकौ तु गांधारं क्रौंचो नर्दति मध्यमम् ॥ १ ॥ पुष्पसाधारणे काले कोकिलो रौति पंचमम् । अश्वस्तु धैवतं रौति निषादं रौति कुंजर इति ॥२॥ सूक्ष्मे कले काकलीत्येकं स्त्रीलिंगम् । ईषत् कलः काकली । ईषदर्थे चेति कोः कादेशः । गौरादिः । "काकलिरपि" कलेरिन् । साधूदितं काकलिभिः कुलीनैरिति प्रयोगः । मधुरः श्रुतिसुखः । स चासौ अस्फुटोऽव्यक्ताक्षरः एतादृशे ध्वनौ कल इत्येकम् । गंभीरे ध्वनौ मंद्र इत्येकम् । अत्युच्चैर्ध्वनौ तार इत्येकम् । त्रयः कलमंद्रतारास्त्रिषु ॥ २ ॥ यः समन्वितलयः सम्यगन्वितोऽनुगतो लयो गीतादिसाम्यं यत्र स एकताल उच्यते। "एकः समस्तालो मानमस्येत्येकतालः" एकम् । वीणा वल्लकी विपंची त्रयं वीणायाः । सा वीणा तु सप्तभिस्तंत्रीभिरुपलक्षिता परिवादिनी । सुप्यजातौविति णिनिः । परिवदत्यवश्यम् ॥ ३ ॥ यद्वीणादिकं वाद्यं तत्ततमुच्यते । आदिना सैरंध्रीरावणहस्तकिन्नर्यादि । हेमचन्द्रकोशेऽपि । शिवस्य वीणा नालंबी सरस्वत्यास्तु कच्छपी । नारदस्याथ महती गणानां तु प्रभावती । विश्वावसोस्तु बृहती तुंबरोस्तु कलावतीत्यादि । यन्मुरजादिकं मृदंगादिकं आदिना पटहादि । आनह्यते मुखे चर्मणा बद्ध्यते तदानद्धमुच्यते । वंश्यादिकं "वंशी वेणुस्तेन वंश्यादिकमित्येव (२) ।" आदिना शंखादि । तत्सुषिरं ज्ञेयम् । "सुषिरशब्दो दंत्यादिः । प्राचीनास्तु तालव्यादिरपीत्याहुः ।" यत्कांस्यमयतालादिकं आदिना घंटाझल्लर्यादि तद्घनं ज्ञेयं एकैकम् ॥ ४ ॥

---

१ इदं पद्यं तालपत्रपुस्तकेऽपि नास्ति ॥ २ अतएव 'वंशीरवः'—इति 'वंशीकलेन बडिशेन'—इति च प्रयोगः । वंशादिकमिति पाठस्तु रामाश्रमीसम्मतः ॥

चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् ॥
मृदंगा मुरजा भेदास्त्वंक्याालिंग्योर्ध्वकास्त्रयः ॥५॥
स्याद्यशःपटहो ढक्का भेरी स्त्री दुंदुभिः पुमान् ॥
आनकः पटहोऽस्त्री स्यात्कोणो वीणादिवादनम् ॥६॥
वीणादंडः प्रवालः स्यात्ककुभस्तु प्रसेवकः ॥
कोलंबकस्तु कायोऽस्या उपनाहो निबंधनम् ॥७॥
वाद्यप्रभेदा डमरुमड्डुडिंडिमझर्झराः ॥

इदं ततादिकं चतुर्विधं वाद्यं वादित्रातोद्यनामकम् । वादित्रं आतोद्यं च नाम यस्य तत् । यदाह भरतः । ततं चैवावनद्धं च घनं सुषिरमेव च । चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वितमिति । मृदंगाः मुरजाः "मुरात् वेष्टनाज्जाताः" द्वे मृदंगस्य । बहुविधत्वाद्बहुवचनम् । अंक्यः आलिंग्यः ऊर्ध्वकः । "निर्वकारमपि" एते त्रयः मृदंगस्य भेदाः । अंक एव निधाय वादनादंक्यः । आलिंग्य वादनादालिंग्यः । ऊर्ध्वीकृतेन मुखेन वादनादूर्ध्वकः । किंच । हरीतक्याकृतिस्त्वंक्यो यवमध्यस्तथोर्ध्वकः । आलिंग्यश्चैव गोपुच्छसमानः परिकीर्तित इति ॥ ५ ॥ यशसे य आदौ पटहो वाद्यते स यशःपटहः । स एव ढक्केत्युच्यते । द्वे ढक्कायाः । भेरी "भेरिः" दुंदुभिः । दुंदुं इति शब्देन भाति । द्वे दुंदुभेः । "भेर्यामानकदुंदुभी इत्यपि पाठः ।" आनकः पटहः द्वे पटहस्य । "अस्त्रीति पूर्वान्वयि । पटहो ना समारंभे आनके पुन्नपुंसकमिति मेदिनी ।" वीणादि वाद्यते येन तद्धनुराकृति काष्ठं कोण उच्यते । कोणो वाद्यभेदे स्याद्वीणादीनां च वादने । एकदेशे गृहादीनामस्त्रेच लगुडेऽपि चेति मेदिनी ॥ ६ ॥ वीणाया दंडः प्रवालः एकम् । ककुभः प्रसेवकः द्वे वीणादंडादधो दारुमयं भांडं शब्दगांभीर्यार्थं यच्चर्मणाच्छाद्यते तस्य । "वीणाप्रांतस्थवक्रकाष्ठविशेषस्येत्यन्ये ।" अस्या वीणायाः कायः तंत्रीरहितो दंडादिसमुदायः कोलंबक इत्युच्यते एकम् । यत्र वीणाप्रांते तंत्र्यो निबध्यंते तत् निबंधनं उपनाह इत्युच्यते एकम् ॥ ७ ॥ डमरुप्रभृतयो वाद्यविशेषा ज्ञेयाः । तत्र डमरुः कापालिकादीनां वाद्यम् । स एव विपुलो मड्डुः । डिंडिमः दंवडी इति प्रसिद्धः। झर्झरः झांगड इति प्रसिद्धः । मर्दलो मृदंगसदृशो वाद्यभेदः । पणवोऽप्येकः । अन्ये च हुडुकगोमुखादयः संति । नर्तकी

मर्दलः पणवोऽन्ये च नर्तकीलासिके समे ॥ ८ ॥
विलंबितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात् ॥
तालः कालक्रियामानं लयः साम्यमथास्त्रियाम् ॥९॥
तांडवं नटनं नाट्यं लास्यं नृत्यं च नर्तने ॥
तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम् ॥ १० ॥
भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः ॥
स्त्रीवेषधारी पुरुषो नाट्योक्तौ गणिकाज्जुका॥११॥
भगिनीपतिरावुत्तो भावो विद्वानथावुकः ॥
जनको युवराजस्तु कुमारो भर्तृदारकः ॥ १२ ॥

लासिका । "वाच्यलिंगत्वात् नर्तको लासकः समाविति पुंस्त्वनिर्देशे कर्तव्ये स्त्रीलिंगनिर्देशो ङीप्टापोर्विवेकार्थः" द्वे नर्तक्याः ॥ ८ ॥ करचरणादिभिर्यद्विलंबितं नृत्यादिकं तत्तत्त्वमित्युच्यते एकम् । यत् द्रुतं शीघ्रं नृत्यादिकं तत् ओघ इत्युच्यते एकम् । यन्मध्यं न विलंबितं नापि द्रुतं तद्घनमित्युच्यते एकम् । कालक्रिययोर्मानं नियमहेतुस्ताल इत्युच्यते एकम् । गीतवाद्यपादादिन्यासानां क्रियाकालयोः साम्यं लय इत्युच्यते एकम् ॥ ९ ॥ तांडवं तंडुना प्रोक्तम् । अण् ओर्गुणः । नटनं नाट्यं लास्यं नृत्यं "नृत्तं" नर्तनं षट् नृत्यस्य । तत्र तांडवं क्लीबपुंसोः । नृत्यगीतवाद्यमितीदं त्रयं मिलित्वा तौर्यत्रिकमिति नाट्यमिति चोच्यते । "तूर्यं मुरजादि तत्र भवं तौर्यम् । तौर्योपलक्षितं त्रिकमिति विग्रहः" द्वे ॥ १० ॥ यः स्त्रीवेषधारी नर्तकः पुरुषः तत्र भ्रकुंसः भ्रुकुंसः भ्रूकुंसः भ्रुवोर्भ्रुवा वा कुंसो भाषणं शोभा वा यस्य इति त्रयमित्यर्थः । नाट्योक्तौ नाट्यप्रकरणे । अधिकारोऽयम् । प्रागंगहारात् । अज्जुकादिसंज्ञायाः नाट्यादन्यत्र प्रयोगो नास्तीत्यर्थः । या गणिका सा अज्जुका एकम् ॥ ११ ॥ भगिन्याः पतिः आवुत्त इत्युच्यते "आवृत्तोऽपि" एकम् । यो विद्वान्स भाव इत्युच्यते । भावयतीति भाव इति योगव्युत्पत्त्या नाट्यादन्यत्राप्येतादृशानां प्रयोगे न दोषः । एकम् । जनकस्तु आवुक इत्युच्यते । एकम् । युवराजस्तु कुमारः भर्तृदारकः द्वयम् ॥ १२ ॥ राजा । भट्टारकः देवः द्वयं राज्ञः । तस्य राज्ञः सुता

राजा भट्टारको देवस्तत्सुता भर्तृदारिका ॥
देवी कृताभिषेकायामितरासु तु भट्टिनी ॥ १३ ॥
अब्रह्मण्यमवध्योक्तौ राजशालस्तु राष्ट्रियः ॥
अंबा माताऽथ बाला स्याद्वासूरार्यस्तु मारिषः ॥ १४ ॥
अत्तिका भगिनी ज्येष्ठा निष्ठानिर्वहणे समे ॥
हंडे हंजे हलाह्वाने नीचां चेटीं सखीं प्रति ॥ १५ ॥

भर्तृदारिका एकम् । कृतोऽभिषेको यस्यास्तस्यां राज्ञ्यां देवीत्येकम् । इतरासु राज्ञीषु भट्टिनीत्येकम् । भट्टिनी द्विजभार्यायां नाट्योक्तां राजयोषितीति रभसः "अत्र विशेषः शब्दार्णवे । गणिकानुचरैरज्जुकेति नाम्ना नृपेण सा । युवराजस्तु सर्वेण कुमारो भर्तृदारकः । भट्टारको वा देवो वा वाच्यो भृत्यजनेन सः । ब्राह्मणेन तु नाम्नैव राजन्नित्यृषिभिः स च । वयस्य राजन्निति वा विदूषक इमं वदेत् । अभिषिक्ता तु राज्ञाऽसौ देवीत्यन्या तु भोगिनी । भट्टिनीत्यपरैरन्या नीचैर्गोस्वामिनीति सेति" ॥ १३ ॥ अवध्यस्य वधानर्हस्य ब्राह्मणादेरुक्तौ दोषोक्तिकरणे अब्रह्मण्यमित्येकम् । राज्ञः शालः राष्ट्रिय उच्यते एकम् । अंबा माता द्वे नाट्योक्तावित्यधिकारस्य प्रायिकत्वादंबादीनामन्यत्रापि प्रयोगो ज्ञेयः । बाला वासूरिति द्वे कुमार्याः । आर्यः । "कर्तव्यमाचरन् काममकर्तव्यमनाचरन् । तिष्ठति प्राकृताचारो यः स आर्य इति स्मृत इति वसिष्ठः ।" मारिषः मर्षणात्सहनान्मारिषः । हिंसानिवारकत्वाद्वा । "मार्षकः । आर्ये मारिषमार्षकाविति शब्दार्णवः" द्वे आर्यस्य ॥ १४ ॥ या ज्येष्ठा भगिनी सा अत्तिका । अत्ता माता सैव । "अंतिका । अत्तिका चांतिका तथेति द्विरूपकोशः" एकम् । निष्ठा निर्वहणं द्वे "मुखप्रतिमुखंगर्भावमर्शनिर्वहणाख्याः पंच नाटके संधयः तत्र पंचमस्य संधेः" । प्रस्तुतकथासमाप्तेरित्यन्ये । "निर्वहणं तु स्त्री संहारश्च समापन इति शब्दार्णवः । समे इति समानार्थे । न तु समानलिंगे शब्दार्णवे लिंगभेददर्शनात् ।" नीचां प्रत्याह्वाने हंडे इत्येकम् । चेटीं प्रति आह्वाने हंजे इत्येकम् । सखीं प्रत्याह्वाने हला । "हलधातोर्बाहुलकादाप्रत्ययः । हलाशब्दश्चावंतोऽपि सखीपर्यायः । तत्र पचाद्यच् । बाला चासुः सखी हलेति त्रिकांडे चोपालितात् ।" अमूनि त्रीण्यव्ययानि ॥ १५ ॥ "अंगस्य स्थानात्स्थानांतरे

अंगहारोंऽगविक्षेपो व्यंजकाभिनयौ समौ ॥
निर्वृत्ते त्वंगसत्त्वाभ्यां द्वे त्रिष्वांगिकसात्त्विके ॥ १६ ॥
शृंगारवीरकरुणाद्भुतहास्यभयानकाः ॥
बीभत्सरौद्रौ च रसाः शृंगारः शुचिरुज्ज्वलः ॥ १७ ॥
उत्साहवर्द्धनो वीरः कारुण्यं करुणा घृणा ॥
कृपा दयाऽनुकंपा स्यादनुक्रोशोऽप्यथो हसः ॥ १८ ॥
हासो हास्यं च बीभत्सं विकृतं त्रिष्विदं द्वयम् ॥
विस्मयोद्भुतमाश्चर्यं चित्रमप्यथ भैरवम् ॥ १९ ॥
दारुणं भीषणं भीष्मं घोरं भीमं भयानकम् ॥

नयनं" अंगहारः "अंगुल्यादिविन्यासः" अंगविक्षेपः द्वे नृत्यविशेषस्य । व्यंजकः अभिनयः द्वे हस्तादिभिर्मनोगतार्थप्रकाशनस्य । अंगेन निर्वृत्ते निष्पन्ने कर्मणि आंगिकम् । "भ्रूविक्षेपादि" । सत्त्वेन अंतःकरणेन निर्वृत्ते सात्त्विकम् । निर्वृत्तेऽक्षद्यूतादिभ्य इत्यनेन आंगिकसात्त्विकशब्दौ ठगंतौ । "तद्यथा । स्तंभः स्वेदोऽथ रोमांचः स्वरभंगोऽथ वेपथुः । वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विका गणाः ।" इमे द्वे अपि त्रिषु ॥ १६ ॥ नाटके हि रसाः अष्टावेवोक्तास्तानाह । शृंगारः । शृंगारो गजमंडने । सुरते रसभेदे च शृंगारं नागसंभवे इति हैमः । वीरः करुणः अद्भुतः हास्यः भयानकः बीभत्सः रौद्रः एतेऽष्टौ रसा ज्ञेयाः । रस्यंते इति रसाः । रस आस्वादने । "चशब्दाच्छांतोऽपि नवमः । वात्सल्यं दशमः" शृंगारः शुचिः उज्ज्वलः त्रयं शृंगारस्य ॥ १७ ॥ उत्साहवर्द्धनः । उत्साहेन वर्धते उत्साहं वर्धयति वा नंद्यादिः । वीरः द्वे वीरस्य । कारुण्यं करुणा घृणा । घृणा तु स्याज्जुगुप्सायां करुणायामिति हैमः । कृपा दया अनुकंपा अनुक्रोशः सप्तकं करुणस्य । हसः ॥ १८ ॥ हासः हास्यं त्रयं हासस्य । बीभत्सं विकृतम् । " वैकृतोऽपि । विकृतोऽप्याग्रहायण्यामग्रहायणमिति शब्दार्णवः ।" द्वे बीभत्सस्य । इदं द्वयं रसे पुंसि तद्वति त्रिषु । विस्मयः अद्भुतम् । इदमव्ययम् । आश्चर्यं चित्रं चत्वारि अद्भुतस्य । भैरवम् ॥ १९ ॥ दारुणं भीषणं भीष्मम् । भीष्मो रुद्रे च गांगेये राक्षसे च भयंकर इति हैमः । घोरं भीमं भयानकं भयंकरं प्रतिभयं नवकं भयानकस्य । रौद्रं उग्रं द्वे रौद्रस्य । अमी अद्भुताद्य उग्रांताश्चतुर्दश शब्दाः रसे पुंसि । शृंगारवीरेत्या-

भयकरं प्रतिभयं रौद्रं तूग्रममी त्रिषु ॥ २० ॥
चतुर्दश दरस्त्रासो भीतिर्भीः साध्वसं भयम् ॥
विकारो मानसो भावोऽनुभावो भावबोधकः ॥२१॥
गर्वोऽभिमानोऽहंकारो मानश्चित्तसमुन्नतिः ॥
("दर्पोऽवलेपोऽवष्टंभश्चित्तोद्रेकः स्मयो मदः ॥") (१)
अनादरः परिभवः परीभावस्तिरस्क्रिया ॥ २२ ॥
रीढावमाननावज्ञावहेलनमसूक्षणम् ॥
मंदाक्षं ह्रीस्त्रपा व्रीडा लज्जा साऽपत्रपाऽन्यतः ॥ २३ ॥
क्षांतिस्तितिक्षाऽभिध्या तु परस्य विषये स्पृहा ॥

दिश्लोके पुंस्त्वदर्शनात् । अभिन्नलिंगानामेव द्वंद्वप्रतिज्ञानात् । तद्वति तु त्रिषु वाच्यलिंगाः ॥ २० ॥ रसानुक्त्वा तदनुगुणत्वेनोच्चावचान् भावानभिधत्ते । दरः । दरः स्याद्भयगर्तयोरिति । त्रासः भीतिः भीः साध्वसं भयम् । "भिया । स्यादर्तनमृतीया च गर्हा चाथ भयं भियेति शब्दार्णवः ।" षट्कं भयस्य । मानसः मनःसंबंधिविकारः भाव उच्यते एकम् । "भावयति करोति रसानिति भावः।" यो भावबोधकः चित्तविकारस्य प्रकाशकः कटाक्षादिः सोऽनुभाव इत्युच्यते एकम् ॥ २१ ॥ गर्वः अभिमानः अहंकारः त्रयं गर्वस्य । " अहमिति करणमहंकारः ।" चित्तस्य समुन्नतिः परस्मादुत्कर्षचिंतनेनौन्नत्यं मान उच्यते एकम् । "गर्वादयः पंचापि पर्याया इति तु युक्तम् । दर्पादि षट्कं मदस्य ।" अनादरः परिभवः परीभावः । उपसर्गेति घञि बहुलं दीर्घः । तिरस्क्रिया ॥ २२ ॥ रीढा अवमानना अवज्ञा अवहेलनं असूक्षणं ( असूर्क्षणमित्यपि ) नवकमनादरस्य । मंदाक्षं ह्रीः त्रपा व्रीडा लज्जा पंच लज्जायाः । घञि व्रीडोऽपि । गंडूषगर्जभुजजागरहारकीलज्वालाञ्झटारभसवर्तकगर्द्धशृंगाः । व्रीडादयश्च वरटश्च बराटकश्च उत्कंठबाणकरकाश्च समामयाश्चेति स्त्रीपुंलिंगकथने रभसः॥सा लज्जाऽन्यतः परस्मात् चेदपत्रपा एकम् ॥ २३ ॥ क्षांतिः तितिक्षा । तिजेः क्षमायां सन् अप्रत्ययः टाप् । द्वे पराभ्युदयसहनस्य । परस्य विषये परकीयधने स्पृहाऽभिध्या । " परस्य विषयस्पृहेत्यपि पाठः । तत्र परस्य विषयविषयिणीच्छेत्यर्थः " एकम् । अभिचारेण ध्यानं अभिध्या । अक्षांतिः ईर्ष्या

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

अक्षांतिरीर्ष्याऽसूया तु दोषारोपो गुणेष्वपि ॥ २४॥
वैरं विरोधो विद्वेषो मन्युशोकौ तु शुक् स्त्रियाम् ॥
पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि ॥ २५ ॥
कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ ॥
शुचौ तु चरिते शीलमुन्मादश्चित्तविभ्रमः ॥ २६ ॥
प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ दोहदम् ॥
इच्छा कांक्षा स्पृहेहा तृड्वांछा लिप्सा मनोरथः ॥२७॥
कामोऽभिलाषस्तर्षश्च सोऽत्यर्थं लालसा द्वयोः ॥
उपाधिर्ना धर्मचिंता पुंस्याधिर्मानसी व्यथा ॥ २८ ॥
स्याच्चिंता स्मृतिराध्यानमुत्कंठोत्कलिके समे ॥

द्वे पराभ्युदयासहनस्य । गुणेष्वपि दोषारोपः असूया । कंड्वादियगंतादकारः। एकम् ॥ २४ ॥ वैरं विरोधः विद्वेषः त्रयं वैरस्य । मन्युः शोकः शुक् त्रयं शोकस्य । शुक् चांता । पश्चात्तापः अनुतापः विप्रतीसारः त्रयं पश्चात्तापस्य ॥ २५ ॥ कोपः क्रोधः अमर्षः रोषः प्रतिघः रुट् क्रुध् सप्तकं क्रोधस्य । तत्र रुट् षांता स्त्रियौ स्त्रीलिंगे । “ रुट्क्रुधौ टाबंतावपि । क्रोधो भामः क्रुधा रुषेति शब्दार्णवः ॥ ” शुचौ शुद्धे चरिते आचरणे शीलं एकम् । उन्मादः चित्तविभ्रमः द्वे चेतसोऽनवस्थितेः ॥२६॥ प्रेमा प्रियता हार्दं प्रेम स्नेहः पंच प्रेम्णः । तत्र प्रेमा ना पुमान् स्नेहश्च । लिंगस्योक्तत्वात् संकरो न दोषाय । प्रेम क्लीबे । दोहदं इच्छा कांक्षा स्पृहा ईहा तृट् वांछा लिप्सा मनोरथः ॥ २७ ॥ कामः अभिलाषः तर्षः द्वादश स्पृहायाः । तत्र दोहदं गर्भिणीच्छायामिच्छामात्रेऽपि दोहदम् । तृट् षांता । स तर्षो महांश्चेल्लालसा । द्वयोः स्त्रीपुंसयोः । उपाधिः धर्मचिंता द्वे धर्मचिंतनस्य । तत्रोपाधिः पुंसि । आधिः मानसी व्यथा द्वे मनःपीडायाः । आधिरुच्यते पुंसि ॥ २८ ॥ चिंता स्मृतिः आध्यानं त्रयं स्मरणस्य । उत्कंठा उत्कलिका द्वे उत्कंठायाः । “ चिंता तु स्मृतिराध्यानं स्मरणं सस्पृहे पुनः । उत्कंठोत्कलिके तस्मिन्नभिध्या तूभयोरपीति शब्दार्णवः । ” उत्साहः अध्यवसायः द्वे उत्साहस्य । येन कृत्वा असाध्यसाधनेऽप्युद्यतो भवति । स

उत्साहोऽध्यवसायः स्यात्सवीर्यमतिशक्तिभाक् ॥२९॥
कपटोऽस्त्री व्याजदंभोपधयश्छद्मकैतवे ॥
कुसृतिर्निकृतिः शाठ्यं प्रमादोऽनवधानता ॥ ३० ॥
कौतूहलं कौतुकं च कुतुकं च कुतूहलम् ॥
स्त्रीणां विलासविब्बोकविभ्रमा ललितं तथा ॥ ३१ ॥
हेला लीलेत्यमी हावाः क्रियाः शृंगारभावजाः ॥

उत्साहोऽतिशक्तिभाक् सातिशक्तिश्चेद्वीर्यमुच्यते । "अतिशयशक्तिर्वीर्या इति त्वमरमालायां स्त्रीत्वम्" एकम् ॥ २९ ॥ कपटः व्याजः दंभः उपधिः छद्म कैतवम् । कितवस्य कर्म । युवादित्वादण् । कैतवं द्यूतदंभयोरिति हैमः । कुसृतिः निकृतिः शाठ्यं नव शाठ्यस्य । "शठ कैतवे । कपटः पुन्नपुंसकयोः ।" प्रमादः अनवधानता द्वे कर्तव्यानवधानस्य ॥ ३० ॥ कौतूहलं कौतुकं कुतुकं कुतूहलं चत्वारि कौतुकस्य । विलासः विब्बोकः विभ्रमः ललितम् ॥ ३१ ॥ हेला लीला अमी स्त्रीणां शृंगारभावजाः शृंगाररससमुद्भूताः क्रियाश्चेष्टाः षडमी हावा उच्यंते एकैकम् । तत्र रामानयनवदनभ्रूप्रभृतीनां यः कश्चिदुत्पद्यते विशेषः स विलासः । गर्वाभिमानसंभूतो विकारोऽनादरात्मको विब्बोकः । वाग्वस्त्रभूषणादीनां स्थानविपर्यासो विभ्रमः । सकलांगसमीचीनविन्यासो ललितम् । अवगणनापूर्वकमभिनयप्रदर्शनं हेला । प्रियभूषणवचनाद्यनुकृतिर्लीला । "तत्र रामादिलीलांतस्य मूलं त्वेवम् । विलासोंऽगे विशेषो यः प्रियाप्तावासनादिषु । विब्बोकोऽभिमतप्राप्तावपि गर्वादनादरः । चित्तवृत्त्यनवस्थानं शृंगाराद्विभ्रमो मतः । अनाचार्योपदिष्टं स्याल्ललितं रतिचेष्टितम् । स्याद्भावसूचको हावो हेलास्यैवानुभावनम् । प्रौढेच्छा सुरते हेलेति वा । प्रियस्यानुकृतिर्लीला श्लिष्टा वाग्वेषचेष्टितैः । इतिशब्दात्प्रकारार्थादन्येऽपि ज्ञेयाः । लीला विलासो [3]विच्छित्तिर्विभ्रमः किलकिंचितम् । मोट्टायितं कुट्टमितं विब्बोको ललितं तथा । विहृतं चेति मंतव्या दश स्त्रीणां स्वभावजा इति नाटकरत्नकोशः । विच्छित्तिः । मंडनानादरन्यासो विच्छित्ती रूपदर्पतः । किलकिंचितम् । हर्षादुदितगीतादिव्यामिश्रं किलकिंचितम् । मोट्टायितम् । मोट्टायितं प्रियं स्मृत्वा सांगभंगं विजृंभणम् । कुट्टमितम् । दुःखोपचारः सौख्येऽपि हर्षात्कुट्टमितं

द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च ॥ ३२ ॥
व्याजोऽपदेशो लक्ष्यं च क्रीडा खेला च कूर्दनम् ॥
घर्मो निदाघः स्वेदः स्यात्प्रलयो नष्टचेष्टता ॥ ३३ ॥
अवहित्थाकारगुप्तिः समौ संवेगसंभ्रमौ ॥
स्यादाच्छुरितकं हासः सोत्प्रासः स मनाक् स्मितम्॥३४॥
मध्यमः स्याद्विहसितं रोमांचो रोमहर्षणम् ॥
क्रंदितं रुदितं क्रुष्टं जृंभस्तु त्रिषु जृंभणम् ॥ ३५ ॥

मतम्। विहृतम्। वक्तव्याभाषणव्याजाद्विहृतं दर्शितेंगितम् ।" द्रवः केलिः परीहासः। "परिहासः। उपसर्गस्य घञीति बहुलं दीर्घः"। क्रीडा लीला "लीलेत्यत्र खेलेति केचित्" नर्म षट्कं क्रीडामात्रस्य। केलिः पुंसि। भिन्नलिंगानां द्वंद्वाभावात् ॥ ३२॥ अभीप्सितार्थसिद्ध्यर्थमर्थांतरानुष्ठानं व्याजः। घञ्। अजेर्वीभावो न। तत्र व्याजः अपदेशः लक्ष्यमिति त्रयं स्वरूपाच्छादनस्य। "लक्षमपि। लक्ष्यं स्यादपदेशेऽपि शरव्येऽपि नपुंसकमित्युक्तम्। "व्याख्यायां च न ना लक्षं क्लीबं व्याजशरव्ययोरिरिति मूर्द्धन्यांते रभसः।" क्रीडा खेला कूर्दनं त्रयं बाललीलायाः। घर्मः निदाघः नितरां दह्यतेऽनेनेति। स्वेदः त्रयं स्वेदस्य। प्रलयः नष्टचेष्टता द्वे परिस्पंदनाशस्य ॥ ३३ ॥ अवहित्था आकारगुप्तिः द्वे "शोकादिजनितमुखग्लान्यादेः" आकारगोपनस्य। संवेगः संभ्रमः द्वे हर्षादिना कर्मसु त्वरणस्य। सोत्प्रासः साभिप्रायो हासः। "उत्प्रासेनाधिक्येन क्षपणेन वा सहित इति वा"। आच्छुरितकमुच्यते एकं "परमस्यामर्षजनकसशब्दहासस्य।" स हासो मनाक् ईषत् चेत्स्मितमुच्यते। "ईषद्विकसितैर्दंतैः कटाक्षैः सौष्ठवान्वितम। अवेक्षितद्विजद्वारमुत्तमानां स्मितं भवेत्"॥ ३४ ॥ स हासो मध्यमश्चेदनल्पाधिकस्तर्हि विहसितं स्यात्। "आकुंचितकपोलाक्षं सस्वनं निःस्वनं तथा। प्रस्तावोत्थं सानुरागमाहुर्विहसितं बुधाः॥" एकम्। रोमांचः रोमहर्षणम्। "पुलककंठकरोमविक्रियारोमोद्गमाश्चात्रैव" द्वे रोमोद्गमस्य। क्रंदितं रुदितं क्रुष्टं त्रीणि रुदितस्य। जृंभः जृंभणं द्वे जृंभिकायाः "जांभई इति ख्यातायाः।" तत्र जृंभस्त्रिषु ॥ ३५ ॥ विप्रलंभः विसंवादः द्वे वंचनायुक्तभाषणस्य। "अंगीकृतासंपादनस्येति वा।" रिंगणं "रिंखणं" स्खलनं द्वे स्वधर्मादेश्चलनस्य।

विप्रलंभो विसंवादो रिंगणं स्खलनं समे ॥
स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि ॥ ३६ ॥
तंद्री प्रमीला भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियाम् ॥
अदृष्टिः स्यादसौम्येऽक्ष्णि संसिद्धिप्रकृती त्विमे ॥३७॥
स्वरूपं च स्वभावश्च निसर्गश्चाथ वेपथुः ॥
कंपोऽथ क्षण उद्धर्षो मह उद्धव उत्सवः ॥ ३८ ॥

॥ इति नाट्यवर्गः ॥ ७ ॥

अधोभुवनपातालं बलिसद्म रसातलम् ॥
नागलोकोऽथ कुहरं सुषिरं विवरं बिलम् ॥ १ ॥
छिद्रं निर्व्यथनं रोकं रंध्रं श्वभ्रं वपा सुषिः ॥

" बालानां हस्तपादगमनस्येत्यन्ये "। रांगणें इति लौकिकभाषायां प्रसिद्धम्। निद्रा शयनं स्वापः स्वप्नः संवेशः पंचकं निद्रायाः ॥ ३६ ॥ तंद्री " तंद्रिः तंद्रा " प्रमीला द्वे निद्राया आदौ अंते च यदालस्यं तस्य। " अत्यंतश्रमादिना सर्वेंद्रियासामर्थ्यस्येति वा।" भ्रकुटिः भ्रुकुटिः भ्रूकुटिः । भ्रुवोः कुटिः कौटिल्यम्। " पृषोदरादित्वादकारे भृकुटीसापि।" त्रयं क्रोधादिजनितभ्रूवक्रतायाः। भ्रकुंसवत् त्रैरूप्यम्। असौम्येऽक्ष्णि सरोषे चक्षुषि अदृष्टिरित्येकम्। असौम्ये असुंदरे वा विरुद्धा दृष्टिरदृष्टिःक्रूरदृष्टिरित्यर्थः। संसिद्धिः प्रकृतिः ॥ ३७ ॥ स्वरूपं स्वभावः निसर्गः पंच स्वभावस्य। " इमे इति द्वयोः स्त्रीत्वबोधनार्थमुक्तम्। वेपथुः कंपः द्वे कंपस्य। क्षणः। क्षणः कालविशेषे स्यात्पर्वण्यवसरे मदे। व्यापारविकलत्वे च परतंत्रत्वमध्ययोरिति हैमः। उद्धर्षः महः उद्धवः उत्सवः पंच उत्सवस्य। महोऽदंतः ॥ ३८ ॥ इति नाट्यवर्गः ॥ ७ ॥ अधोभुवनं अधश्च तद्भुवनं च। पातालं बलिसद्म रसातलं नागलोकः पंच पातालस्य। कुहरं सुषिरं " तालव्यादिरपि "। विवरं बिलम् ॥ १ ॥ छिद्रं निर्व्यथनं रोकं रंध्रं श्वभ्रं " तालव्यादि "। वपा उप्यते यत्र। भिदादित्वादङ्। स्त्रियाम्। सुषिः " शुषिः " एकादश छिद्रमात्रस्य। सुषिः स्त्री। भुवि यत् श्वभ्रं तत्र गर्तोऽवट इति द्वयम्। " गर्तो-

गर्तावटौ भुवि श्वभ्रे सरंध्रे सुषिरं त्रिषु ॥ २ ॥
अंधकारोऽस्त्रिया ध्वांतं तमिस्रं तिमिरं तमः ॥
ध्वांते गाढेंऽधतमसं क्षीणेऽवतमसं तमः ॥ ३ ॥
विष्वक् संतमसं नागाः काद्रवेयास्तदीश्वरः ॥
शेषोऽनंतो वासुकिस्तु सर्पराजोऽथ गोनसे ॥ ४ ॥
तिलित्सः स्यादजगरे शयुर्वाहस इत्युभौ ॥
अलगर्दो जलव्यालः समौ राजिलडुंडुभौ ॥ ५ ॥
मालुधानो मातुलाहिर्निर्मुक्तो मुक्तकंचुकः ॥
सर्पः पृदाकुर्भुजगो भुजंगोऽहिर्भुजंगमः ॥ ६ ॥

ऽवटे कुकुंदरे इति हैमः । गर्तेत्यपि । शठकुसरगर्तशुंगा इति स्त्रीपुंसप्रकरणे रभसात् । अवटिरितीदंतोऽपि ” सुषिरमित्येकं सरंध्रे रंध्रयुक्ते वस्तुनि । “शुषिरमपि ” तत् त्रिषु वाच्यलिंगम् ॥ २॥ अंधकारः ध्वांतं तमिस्रं तिमिरं तमः पंचकमंधकारस्य । तत्रांधकारः क्लीबपुंसोः । गाढे ध्वांते सातिशये तमसि अंधतमसमित्येकम् । क्षीणे ध्वांतेऽवतमसमित्येकम् ॥ ३ ॥ विष्वक् तमः सर्वव्यापि ध्वांतं संतमसमुच्यते । अंधतमसावतमससंतमसशब्दा अकारांताः। अवसमंधेभ्य इत्यनेन समासांतोऽच् । एकम् । नागाः काद्रवेयाः द्वे नागानाम् । तदीश्वरः नागानामीशः शेषोऽनंत इति चोच्यते द्वयम् । वासुकिः सर्पराजः द्वे नागराजस्य । गोनसः “ गोनासगोनसाविति त्रिकांडशेषः ” ॥ ४ ॥ तिलित्सः द्वे पाणस इति प्रसिद्धस्य । अजगरः शयुः वाहसः इति त्रयं अजगरस्य आर इति ख्यातस्य । अलगर्दः “ अलगर्द्धः ” जलव्यालः द्वे जलसर्पस्य “ पाणसर्प, विरोळें इत्यादिप्रसिद्धस्य । ” राजिलः “ राजीलः ” डुंडुभः “ तवर्गतृतीयादिरपि ” द्वे निर्विषस्य द्विमुखसर्पस्य “ मालुंड, महांडुळ, दुतोंडें ” इति ख्यातस्य । निर्मुक्तो निर्विषः सर्पो राजिलः परिकीर्तित इत्यभिधानात् ॥ ५ ॥ मालुधानः मातुलाहिः द्वे खट्वाकारचित्रसर्पस्य “ आधोळें, दिवड इति ख्यातस्य ” । निर्मुक्तः । निर्मुक्तस्त्यक्तसंगे स्यान्मुक्तकंचुकभोगिनीति कोशांतरेऽपि । मुक्तकंचुकः द्वे त्यक्तकंचुकस्य । “ अत्र कंचुकस्त्वक् । ” सर्पः पृदाकुः भुजगः । भुजेन कौटिल्येन गच्छति । भुजंगः अहिः भुजंगमः ॥ ६ ॥ आशीविषः “ आशीर्विषोऽपि आशीस्तालु-

आशीविषो विषधरश्चक्री व्यालः सरीसृपः ॥
कुंडली गूढपाच्चक्षुःश्रवाः काकोदरः फणी ॥ ७ ॥
दर्वीकरो दीर्घपृष्ठो दंदशूको बिलेशयः ॥
उरगः पन्नगो भोगी जिह्मगः पवनाशनः ॥ ८ ॥
("लेलिहानो द्विरसनो गोकर्णः कंचुकी तथा ॥
कुंभीनसः फणधरो हरिर्भोगधरस्तथा ॥ १ ॥
अहेः शरीरं भोगः स्यादाशीरप्याहिदंष्ट्रिका ॥")(१)
त्रिष्वाहेयं विषास्थ्यादि स्फटायां तु फणा द्वयोः ॥
समौ कंचुकनिर्मोकौ क्ष्वेडस्तु गरलं विषम् ॥ ९ ॥
पुंसि क्लीबे च काकोलकालकूटहलाहलाः ॥
सौराष्ट्रिकः शौल्किकेयो ब्रह्मपुत्रः प्रदीपनः ॥ १० ॥
दारदो वत्सनाभश्च विषभेदा अमी नव ॥

गता दंष्ट्रा तया विद्धो न जीवति । तत्र विषमस्येति "। विषधरः चक्री व्यालः । व्यालो दुष्टगजे सर्पे खले श्वापदसिंहयोरिति विश्वमेदिन्यौ । "व्याडोपि" सरीसृपः कुंडली गूढपात् चक्षुःश्रवाः काकोदरः फणी ॥७॥ दर्वीकरः दीर्घपृष्ठः दंदशूकः बिलेशयः उरगः पन्नगः भोगी जिह्मगः पवनाशनः पंचविंशतिः सर्पस्य ॥ ८ ॥ " लेलिहानाद्यष्टौ सर्पमात्रस्य । भोग इति सर्पशरीरस्यैकम् । आशीरित्यादि द्वे सर्पदंष्ट्रायाः " । यद्विषास्थ्यादि अहिभवं तत् आहेयमुच्यते एकम् । स्त्रियाम् आहेयी । स्फटा "फटा" फणा द्वे फणायाः । द्वे अपि स्त्रीपुंसयोः । कंचुकः निर्मोकः । "निश्चयेन मुच्यते इति" द्वे सर्पत्वचः । क्ष्वेडः गरलं विषं "पुंलिंगमपि । पुंसि क्लीबे चेति विषेणापि संबध्यत इत्युक्तत्वात् ।" त्रयं विषमात्रस्य ॥ ९ ॥ काकोलः कालकूटः हलाहलः सौराष्ट्रिकः शौल्किकेयः ब्रह्मपुत्रः प्रदीपनः ॥ १० ॥ दारदः वत्सनाभः अमी काकोलाद्या नव स्थावराविषभेदाः । तत्र "काकोलादि त्रयं क्लीबपुंसोः । काकोलः काकमेचकः । कालकूटः पृथुमालिदैत्यरक्तोद्भवः । हलाहलस्तालपत्राकृतिः । हालाहलं हालहलं हलाहलमित्यपि तत्प-

१ इदं सार्धं पद्यं तालपत्रपुस्तकेऽपि नास्ति ॥

विषवैद्यो जाङ्गुलिको व्यालग्राह्यहितुंडिकः ॥ ११ ॥

इति पातालभोगिवर्गः ॥ ८ ॥

स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम् ॥
तद्भेदास्तपनावीचिमहारौरवरौरवाः ॥ १ ॥
संघातः कालसूत्रं चेत्याद्याः सत्त्वास्तु नारकाः ॥
प्रेता वैतरणी सिंधुः स्यादलक्ष्मीस्तु निर्ऋतिः ॥ २ ॥

र्यायाः। "हालाहलं हालहलं वदंत्यपि हलाहलमिति द्विरूपकोशः। गोनासगोनसौ हालाहलं हालहलं विषमिति त्रिकांडशेषः।" सुराष्ट्रदेशे भवः सौराष्ट्रिकः। "सारोष्ट्रिक इत्यपि" शुक्तिकायां भवः शौक्तिकेयः "सोमल इति प्रसिद्धः"। ब्रह्मणः पुत्रः ब्रह्मपुत्रः। यथा याज्ञवल्क्यः। त्वं विष ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थित इति।" प्रदीपयति जठरमिति प्रदीपनः। दरदि देशे भवो दारदः वत्सनाभः "बचनाग इति प्रसिद्धः"। विषवैद्यः जांगलिकः द्वे विषहारवैद्यस्य। "जांगुलीं विषविद्यामधीते वेद वा। उक्तं च। परीक्षितं समश्नीयाज्जांगुलीभिर्भिषग्वृत इति।" व्यालग्राही अहितुंडिकः अहेस्तुंडं मुखं तेन दीव्यतीति ठक्। इति द्वे सर्पग्राहिणः "गारुडीति प्रसिद्धस्य"। "व्यालग्राह्याहितुंडिक इति पाठः। तत्र आहितुंडिक इति" ॥११॥ इति पातालभोगिवर्गः ॥ ८ ॥ नारकः नरकः निरयः दुर्गतिः चत्वारि नरकस्य। नरकभेदानाह। तपनः अवीचिः न विद्यते वीचिः सुखं यत्र। वीचिः स्वल्पतरंगे स्यादवकाशे सुखेऽपि चेति विश्वः। महारौरवः रौरवः ॥ १ ॥ संघातः (संहार इत्यपि पाठः) कालसूत्रं इत्याद्यास्तपनादिनरकभेदाः। आद्यशब्दात्तामिस्रकुंभीपाकादयः। तप्यते अनेन तपनः। जलवत् भासमानोऽप्यश्मपृष्ठरूपत्वान्न वीचयो यत्र सोऽवीचिः। रुरवो नाम क्रव्यादा अतिक्रूरास्तत्संबंधी महानरको महारौरवः। रुरवः सर्पेभ्योऽतिहिंस्रा जंतुविशेषास्तत्संबंधी रौरवः। सम्यक् हन्यते यत्र संघातः। कालरूपाणि सूत्राणि यत्र तत्कालसूत्रं एकैकम्। नारकाः नरके भवाः सत्त्वाः प्राणिनः प्रेता उच्यंते एकम्। नारकी सिंधुर्नदी वैतरणी ज्ञेया। विगतास्तरणिर्यत्र तत्र भवा। विगता तरणिर्नौर्यत्र वा एकम्। नारक्यलक्ष्मीरशोभा निर्ऋतिः उच्यते। निर्गता ऋतिर्घृणा यस्याः। ऋतिर्गतौ घृणायां च श्रद्धायां च शुभेऽपि चेति रभसः।

विष्टिराजूः कारणा तु यातना तीव्रवेदना ॥
पीडा बाधा व्यथा दुःखमामनस्यं प्रसूतिजम् ॥ ३ ॥
स्यात्कृष्टं कृच्छ्रमाभीलं त्रिष्वेषां भेद्यगामि यत् ॥

इति नरकवर्गः ॥ ९ ॥

समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः ॥
उदन्वानुदधिः सिंधुः सरस्वान्सागरोऽर्णवः ॥ १ ॥
रत्नाकरो जलनिधिर्यादःपतिरपांपतिः ॥
तस्य प्रभेदाः क्षीरोदो लवणोदस्तथाऽपरे ॥ २ ॥

एकम् ॥ २ ॥ विष्टिः आजूः द्वे नरके हठात्प्रक्षेपस्य । " निर्मूल्यकर्मकरणे इति मुकुटः । " भद्राख्यकरणस्येत्यन्ये । विष्टिः कर्मकरेऽमूल्ये भद्राजूप्रेरणेषु चेति हैमः ।" आजूवेतनयोर्विष्टिरिति शाश्वतः । कारणा यातना तीव्रवेदना त्रयं नरकपीडायाः । पीडा बाधा । " आबाधेति वा छेदः । आबाधा वेदना दुःखमिति हलायुधः । व्यथा दुःखं आमनस्यं " अमानस्यम् । प्रसूतिजममानस्यं कृच्छ्र-कष्टं कलाकुलमिति वाचस्पतिः । अत्र अमनसो भाव इति । मानस्याद्भिन्न-मिति वा विग्रहः । " प्रसूतिजम् ॥ ३ ॥ कष्टं कृच्छ्रं आभीलं नव दुःखस्य । अत्र नवापि दुःखस्येत्येके । " पीडादिचतुष्कं मनःपीडायाः । आमनस्यादि द्वयं वैमनस्यस्य । कष्टादि त्रयं शरीरपीडाया इति भेदः " । एषां मध्ये यद्दुःखादिकं भेद्यगामि विशेष्यवृत्ति तत् त्रिषु । यथा । सेयं सेवा दुःखा च बहुरूपा । सोऽयं दुःखः सुतोऽगुणः । सर्वं दुःखं विवेकिन इति । भेद्यगामित्वाभावे तदुक्तलिंगमेव ॥ इति नरकवर्गः ॥ ९ ॥ समुद्रः । समीचीना उद्रा जलचरविशेषा यस्मिन् । सह मुद्रया मर्यादया वर्तते इति वा । वोपसर्जनेति सहस्य सः । अब्धिःअकूपारः पारावारः " पारापारः " सरित्पतिः उदन्वान् उदधिः सिंधुः । " सिंधुर्वमथुदेशाब्धिनदे ना सरिति स्त्रियामिति विश्वमेदिन्यौ । " सरस्वान् सागरः अर्णवः । अर्णांसि उदकानि यत्र संति । अर्णसो लोपश्चेति ॥ १ ॥ रत्नाकरः जलनिधिः यादःपतिः अपांपतिः पंचदश समुद्रमात्रस्य । तस्य समुद्रस्य प्रभेदाः । क्षीरोदः लवणोदः । तथा अपरे दध्युदघृतोदसुरोदेक्षूदस्वादूदाः । " लवणेक्षुसुरासर्पिर्दधिक्षीरजलाः समा इत्याद्युक्तेः "

आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् ॥
पयः कीलालममृतं जीवनं भुवनं वनम् ॥ ३ ॥
कबंधमुदकं पाथः पुष्करं सर्वतोमुखम् ॥
अंभोऽर्णस्तोयपानीयनीरक्षीरांबुशंबरम् ॥ ४ ॥
मेघपुष्पं घनरसस्त्रिषु द्वे आप्यमम्मयम् ॥
भंगस्तरंग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु ॥ ५ ॥
महत्सूल्लोलकल्लोलौ स्यादावर्तोऽभसां भ्रमः ॥
पृषंति बिंदुपृषताः पुमांसो विप्रुषः स्त्रियाम् ॥ ६ ॥

एकैकम् ॥ २ ॥ आपः वाः वारि "वारं" सलिलं "सरिलं । सरिलं सलिलं जलमिति वाचस्पतिः ।" कमलं जलं पयः कीलालम् । कीलालं रुधिरे तोय इति कोशांतरम् । अमृतं जीवनं भुवनं वनम् ॥३॥ कबंधं "कमं-धमिति वा" उदकं "दकमित्यपि । प्रोक्तं प्राज्ञैर्भुवनममृतं जीवनीयं दकं वेति हलायुधः । कं दकं जलमिति त्रिकांडशेषः । अस्मिन्पक्षे कबंधं च दकं पाथ इति पाठः ।" पाथः पुष्करं सर्वतोमुखम् । सर्वतो मुखानि यत्र सर्वदिग्गमन-त्वात् । अंभः अर्णः तोयं पानीयं नीरं "नारं" क्षीरं अंबु शंबरं "संबरमिति दंत्यादि" ॥ ४ ॥ मेघपुष्पं घनरसः सप्तविंशतिर्जलस्य । तत्र आपः स्त्रियां बहुत्वे च नित्यम् । वाः रेफांता । पूर्वोत्तरसाहचर्यात्स्त्रियां क्लीबे च । घनरसः पुंसि । शेषं क्लीबे । "अम्बुनि आपः सांतं क्लीबे च । वारं नारमित्युभयमक्लीबम् । अत्र सर्वत्र संसारावर्तः प्रमाणम् । नारं घनरसः पुमानिति शब्दार्णवः । घनर-समिति क्लीबमपि । घनरसमंबु क्षीरमिति रत्नकोशात् ।" कृपीटं कांडमस्त्री स्याज्जीवनीयं कुशं विषमित्यपि । आप्यं अम्मयं द्वे जलविकारस्य त्रिषु । "आप्या अम्मयी इत्यादि ।" भंगः तरंगः ऊर्मिः वीचिः चत्वारि लहर्याः । वा स्त्रिया-मिति ऊर्मिणा वीचिना च संबध्यते काकाक्षिवत् । ऊर्मिरेव स्त्रीपुंसयोः वीचिस्तु नित्यं स्त्रीत्येके ॥ ५ ॥ महत्सु ऊर्मिषु उल्लोलः कल्लोल इति द्वयम् । अंभसां भ्रमः मंडलाकारेण भ्रमणं आवर्तः स्यात् एकम् । भोंवरा इति लौकिकभाषायाम् । पृषंति बिंदवः पृषतः विप्रुषः चत्वारि जलबिंदूनाम् । तत्र पृषत् क्लीबे बिंदुपृषतौ पुंसि । विप्रुट् स्त्री ॥ ६ ॥ चक्राणि । "वक्राण्यपि । वक्रः शनैश्चरे पुंसि पुटभेदे

चक्राणि पुटभेदाः स्युर्भ्रमाश्च जलनिर्गमाः ॥
कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु ॥ ७ ॥
पारावारे परार्वाची तीरे पात्रं तदंतरम् ॥
द्वीपोऽस्त्रियामंतरीपं यदंतर्वारिणस्तटम् ॥ ८ ॥
तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम् ॥
निषद्वरस्तु जंबालः पंकोऽस्त्री शादकर्दमौ ॥ ९ ॥
जलोच्छ्वासाः परीवाहाः कूपकास्तु विदारकाः ॥

नपुंसकम्।" पुटभेदाः भ्रमाः जलनिर्गमाः चत्वारि यानि चक्राकारेण जलान्यधो यांति तेषाम्। "चक्रादिद्वयं चक्राकारेण जलानामधो यानस्य। भ्रमादि द्वयं जलनिःसरणजालकस्य। नद्यादौ अधःस्थजलस्योर्ध्वनिःसरणस्येति वा मतम्।" कूलं रोधः तीरं प्रतीरं तटं पंच तीरस्य । रोधः सांतम्। "अदंतोऽपि। रोधः प्रोक्तश्च रोधसीति संसारावर्तः।" तटं त्रिलिंगम् ॥७॥ परं च अर्वाक् च परार्वाची तीरे क्रमेण पारावारे उच्येते। नद्याः परतीरं पारं अवाक्तीरं आवारमित्यर्थः। एकैकम्। तयोः पारावारयोः अंतरं मध्यं पात्रमुच्यते। पात्रं तु कूलयोर्मध्ये पर्णे नृपतिमंत्रिणि। योग्यभाजनयोर्यज्ञभांडे नाट्यानुकर्तरीति हैमः। एकम्। वारिणोऽतर्मध्ये यत्तटं तत् द्वीप इति अंतरीपमिति चोच्यते। अस्त्रियामित्यु-भाभ्यां संबध्यते। द्वे। "द्विर्गता आपोऽत्र स द्वीपः। अपां अंतर्गतं अंतरीपम्। द्वीपांतरीपशब्दयोः समासांतोऽच्। उभयत्रापि द्व्यंतरुपेतीकारः। (बेट इति प्रसिद्धम्) ॥ ८ ॥ तोयोत्थितं तोयक्रमेणोत्थं तत्पुलिनमुच्यते एकम्। सैकतं सिकतामयं द्वे वालुकाप्रचुरस्थानस्य । निषद्वरः जंबालः पंकः शादः कर्दमः पंच कर्दमस्य। तत्र पंकः पुन्नपुंसकयोः ॥ ९ ॥ जलोच्छ्वासाः परीवाहाः "परिवाहाः।" द्वयं निर्गममार्गैः प्रवृद्धं जलं परिवहति तेषाम् । तथा च प्रयोगः। उपार्जितानां वित्तानां त्याग एव हि रक्षणम्। तडागोदरसंस्थानां परीवाहा इवांभसामिति। जलप्रवृद्धिरेव परीवाह इत्येके। कूपका विदारकाः द्वे शुष्कनद्यादौ हि जलार्थं गर्ताः क्रियंते तेषाम्। स्रोतोद्विधाकारिणः शिला-दयः कूपका इत्येके। नौतार्ये नावा तारितुमर्हे जलादौ नाव्यम्। एकम्। तत् त्रिषु। नौः तरणिः तरिः त्रयं नौकायाः। तरीरित्यपि लक्ष्मीवत्।

नाव्यं त्रिलिंगं नौतार्ये स्त्रियां नौस्तरणिस्तरिः॥१०॥
उडुपं तु प्लवः कोलः स्रोतोऽम्बुसरणं स्वतः ॥
आतरस्तरपण्यं स्याद्द्रोणी काष्ठांबुवाहिनी ॥ ११ ॥
सांयात्रिकः पोतवणिक्कर्णधारस्तु नाविकः ॥
नियामकाः पोतवाहाः कूपको गुणवृक्षकः ॥ १२ ॥
नौकादंडः क्षेपणी स्यादरित्रं केनिपातकः ॥
अभ्रिः स्त्री काष्ठकुद्दालः सेकपात्रं तु सेचनम्॥१३॥(१)

"कृदिकारादिति ङीषि तरणी तरी इत्यपि । तरणी तरीति हैमः" ॥ १० ॥ उडुपं प्लवः कोलः अयमल्पनौकायाः "होडी पडांव इति ख्यातायाः ।" स्वतो यदंबुसरणं जलगमनं तत्स्रोत उच्यते । सांतमेकम् । "तालव्यादिरपि ।" आतरः तरपण्यं द्वे नद्यादितरणे देयमूल्यस्य । काष्ठांबुवाहिनी काष्ठमयी जलवाहिनी सा द्रोणी उच्यते । "द्रुणिः द्रोणिः" काष्ठमुपलक्षणं पाषाणादेः। एकं डोणी इति ख्यातस्य ॥ ११ ॥ सांयात्रिकः । "समुदितानां गमनं द्वीपांतरगमनं वा संयात्रा सा प्रयोजनमस्यास्तीति । प्रयोजने ठक् इकादेशः ।" पोतवणिक् पोतेनोपलक्षितो वणिक् । मध्यमपदलोपी समासः । द्वे नौकया वाणिज्यकारिणः । कर्णधारः नाविकः द्वे अरित्रं धृत्वा यस्तारयति तस्य । नियामकाः पोतवाहाः द्वे पोतमध्यस्थितकाष्ठाग्रे दुष्टजंत्वादिज्ञानाय स्थित्वा ये नियंतुं शक्तास्तेषाम् । कूपकः गुणवृक्षकः गुणानां रज्जूनां वृक्षः द्वे रज्ज्वाद्याधारमध्यस्तंभस्य "कुवा, डोलकाठी" इति ख्यातस्य ॥ १२ ॥ नौकादंडः क्षेपणी "क्षेपणिः क्षिपणीरिति च" द्वे नौकावाहकदंडस्य "वल्हें" इति ख्यातस्य । अरित्रं केनिपातकः । के जले निपातो यस्य । हलदंतेति सप्तम्याः अलुक् । द्वे कर्णस्य "सुकाणूं इति ख्यातस्य" । अभ्रिः "अभ्री-रपि" काष्ठकुद्दालः "काष्ठकूद्दालः" द्वे पोतादेर्मलापनयनार्थं काष्ठकुद्दालस्य "कुदली इति ख्यातस्य" । सेकपात्रं सेचनं द्वे चर्मादिरचितस्य जलोत्सर्जनपात्रस्य "बालदी डोल इति ख्यातस्य ।" यानपात्रं तु पोतोऽब्धिभवे त्रिषु सामुद्रियम् । सामुद्रिको मनुष्योऽब्धिजाता सामुद्रिका च नौरिति क्वचित् ॥१३॥ नावोऽर्धे अर्धनावमित्येकम् । तत्क्लीबे । नावो द्विगोरर्धाच्चेति टच् । अतीतनौके

१ टीकास्थं यानपात्रं त्विति पद्यं तालपत्रपुस्तकेऽप्यैव (मूल एव) अस्ति ॥

क्लीबेऽर्धनावं नावोऽर्धेऽतीतनौकेऽतिनु त्रिषु ॥
त्रिष्वागाधात्प्रसन्नोऽच्छः कलुषोऽनच्छ आविलः ॥१४॥
निम्नं गभीरं गंभीरमुत्तानं तद्विपर्यये ॥
अगाधमतलस्पर्शे कैवर्ते दाशधीवरौ ॥ १५ ॥
आनायः पुंसि जालं स्याच्छणसूत्रं पवित्रकम् ॥
मत्स्याधानी कुवेणी स्याद्बडिशं मत्स्यवेधनम् ॥१६॥
पृथुरोमा झषो मत्स्यो मीनो वैसारिणोंऽडजः ॥
विसारः शकुली चाथ गडकः शकुलार्भकः ॥ १७ ॥
सहस्रदंष्ट्रः पाठीन उलूपी शिशुकः समौ ॥
नलमीनश्चिलिचिमः प्रोष्ठी तु शफरी द्वयोः ॥ १८ ॥

नौकामतीत्य वर्तमाने मनुष्यादौ अतिनु । अतीता नौर्येन । नपुंसकह्रस्वः । एकम् । त्रिलिंगम् । अतः परं अगाधात् अगाधशब्दमभिव्याप्य त्रिषु वाच्यलिंगा इत्यर्थः । प्रसन्नः अच्छः द्वे निर्मलस्य । कलुषः अनच्छः आविलः त्रयं मलमिश्रस्य ॥ १४ ॥ निम्नं गभीरं गंभीरं त्रीणि गंभीरस्य "खोल इति ख्यातस्य" । तद्विपर्यये गंभीरादितरस्मिन् उत्तानमित्येकम् । उद्गतस्तानो विस्तारो यस्मात् । अगाधं अतलस्पर्शं द्वे अत्यंतगंभीरस्य । कैवर्तः दाशः "दासः" धीवरः त्रयं कैवर्तस्य ॥ १५ ॥ आनायः । आनीयंते मत्स्या अनेन । जालमानायेति निपातनात् घञ् । जालं द्वे जालस्य । शणसूत्रं पवित्रकं द्वे शणसूत्रजालस्य । मत्स्याधानी कुवेणी द्वे मत्स्यबंधनकरंडिकायाः। बडिशं "बाडिशा बडिशी । त्रयोऽपि लमध्या वा" । मत्स्यवेधनं द्वे मत्स्यवेधनस्य गळ इति ख्यातस्य ॥ १६ ॥ पृथुरोमा झषः मत्स्यः मीनः वैसारिणः अंडजः विसारः शकुली अष्टौ मत्स्यस्य । गडकः "गंडकः" शकुलार्भकः द्वे मत्स्यविशेषस्य । गर इति प्रसिद्धस्य ॥ १७ ॥ सहस्रदंष्ट्रः पाठीनः द्वे बहुदंष्ट्रस्य मत्स्यविशेषस्य । उलूपी शिशुकः द्वे शिशुमाराकारमत्स्यस्य । नलमीनः "डलयोरभेदान्नडमीनोऽपि" । चिलिचिमः "चिलिचिमिः । नलमीनश्चिलिचिमिरिति बोपालितः" द्वे जलतृणचारिमत्स्यविशेषस्य वेगसा इति प्रसिद्धस्य । प्रोष्ठी शफरी द्वे सहरी इति ख्यातस्य शुभ्रमत्स्य-

क्षुद्राण्डमत्स्यसंघातः पोताधानमथो झषाः ॥
रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः ॥ १९ ॥
तिमिंगिलादयश्चाथ यादांसि जलजंतवः ॥
तद्भेदाः शिशुमारोद्रशंकवो मकरादयः ॥ २० ॥
स्यात्कुलीरः कर्कटकः कूर्मे कमठकच्छपौ ॥
ग्राहोऽवहारो नक्रस्तु कुंभीरोऽथ महीलता ॥ २१ ॥
गंडूपदः किंचुलको निहाका गोधिका समे ॥

विशेषस्य । पुंसि तु प्रोष्ठः शफरः ॥ १८ ॥ क्षुद्राश्च ते अंडमत्स्याश्च तेषां संघातः पोताधानमुच्यते एकम् । अथो झषा मत्स्यविशेषा वक्ष्यंते न तु पर्यायाः । रोहितः रोही इति प्रसिद्धस्य । मद्गुरः मंगरा इति प्रसिद्धः । शालः "सालोऽपि" चक्रांकितो मत्स्यः । राजीवः राया इति प्रसिद्धः । शकुलः "अतिवेगवान् सौरा इति प्रसिद्धः" । तिमिः ॥ १९ ॥ तिमिंगिलः । आदिशब्दान्नंद्यावर्तादयोऽन्ये । एकैकम् । यादांसि जलजंतवः द्वे जलचरमात्रस्य । तद्भेदाः जलजंतूनां विशेषाः । शिशुमारः शिरस इति ख्यातः । "शिशुमारोंऽबुसंभूतजंतौ तारात्मकेऽच्युत इति विश्वमेदिन्यौ ।" उद्रः हूद इति प्रसिद्धः । शंकुः । सफू इति प्रसिद्धः । मकरो मगर इति प्रसिद्धः । आदिशब्दाज्जलहस्त्यादयः ॥ २० ॥ कुलीरः "कुलिरः" कर्कटकः "करकटः कर्कटः कर्कडः । कर्कडः कुलिरे इति हैमः" द्वे कुरलें "खेंकडा" इति ख्यातस्य । कूर्मः कमठः कच्छपः "अन्यत्र कच्छपीत्यपि पाठः । कच्छपी वल्लकीभेदे तुलौ क्षुद्रगदांतरे । पुंसि निध्यंतरे कूर्मे मल्लबंधांतरेऽपि चेति विश्वमेदिन्यौ ।" त्रीणि कांसव इति प्रसिद्धस्य । ग्राहः अवहारः द्वे गोह "नाडेसावज" इति ख्यातस्य । अवह्रियतेऽनेनेति । अवहाराधारावाया-नामुपसंख्यानमिति घञ् । कर्तरि णो वा । "अत्र अवराह इति पर्यायांतरं दृश्यते तत् अवपूर्वकाद्रह त्याग इत्यस्मात् घञि बोध्यम् । अवहारस्तु युद्धादिविश्रांतौ ग्राहचोरयोरिति हैमः ।" नक्रः कुंभीरः द्वे नक्रस्य ग्राहविशेषस्य "सुसर इति ख्यातस्य ।" कुंभी हस्ती तमीरयाति कुंभीरः । महीलता ॥२१॥ गंडूपदः किंचुलकः "किंचिलिकः किंचुलुकः" त्रीणि जलचरभेदस्य केंचू "काडू, दानवार, गांडोळ" इति ख्यातस्य । गंडवो ग्रंथयः पदान्यस्य गंडू-

रक्तपा तु जलौकायां स्त्रियां भूम्नि जलौकसः ॥ २२ ॥
मुक्तास्फोटः स्त्रियां शुक्तिः शंखः स्यात्कंबुरस्त्रियौ ॥
क्षुद्रशंखाः शंखनखाः शंबूका जलशुक्तयः ॥ २३ ॥
भेके मंडूकवर्षाभूशालूरप्लवदर्दुराः ॥
शिली गंडूपदी भेकी वर्षाभ्वी कमठी डुलिः ॥ २४ ॥
मद्गुरस्य प्रिया शृंगी दुर्नामा दीर्घकोशिका ॥
जलाशया जलाधारास्तत्रागाधजलो ह्रदः ॥ २५ ॥
आहावस्तु निपानं स्यादुपकूपजलाशये ॥

पदः । निहाका गोधिका द्वे जलगोधिकायाः "पाण्यांतील घोरपड इति ख्यातायाः ।" रक्तपा जलौका जलौकसः त्रीणि जळू इति ख्यातस्य । तत्र जलौकसः स्त्रीत्वे बहुत्वे च नित्यम् । "ओक उचः क इति निपातितोऽदंत ओकशब्दः । जलौका तु जलौकाः स्याज्जलूका च जलौकसीति संसारावर्ताद्बहुवचनं प्रायिकम् । जलौकापि जलौकाः स्याज्जलूका जलजंतुकेति तारपालोऽपि" ॥ २२ ॥ मुक्तास्फोटः मुक्ताः मौक्तिकानि स्फुटंति यत्र । स्फुट विकसने । शुक्तिः द्वे शुक्तिकायाः । शंखः कंबुः द्वे शंखस्य । "पुन्नपुंसकौ ।" क्षुद्रशंखाः शंखनखाः "शंखनकाः" द्वे सूक्ष्मशंखानाम् । जलशुक्तयः जलमात्रजाः शुक्तयः शंबूका उच्यंते । "शंबुकः शांबुकः शंबुः" एकं क्षुद्रशुक्तिकानाम् । शंबूकः स्त्रीपुंसयोः । "शंबुका न नपुंसके इति मेदिनी । शंबूकः शंबुकः शंबुपूर्वः कांतस्तु सर्वदा । ककारेण विना शेषो दृश्यते ग्रंथविस्तर इत्युत्पलिनी" ॥ २३ ॥ भेकः मंडूकः वर्षाभूः शालूरः । "परिसरकृकलासस्वेदसालूर इत्यूष्मविवेकाद्दंत्यादिरपि ।" प्लवः दर्दुरः षट् भेकस्य । शिली गंडूपदी द्वे स्वल्पगंडूपदजातेः । भेकी वर्षाभ्वी "वर्षाभूः" द्वे क्षुद्रभेकजातेः । कमठी डुलिः द्वे कूर्म्याः ॥ २४ ॥ मद्गुराख्यस्य मत्स्यविशेषस्य प्रिया स्त्री शृंगीत्युच्यते एकम् । दुर्नामा "दुर्नाम्नी" दीर्घकोशिका द्वे जलूकाकारस्य जलचरविशेषस्य । जलाशयाः जलाधाराः द्वे तडागादीनाम् । तत्र जलाशयेष्वेव वक्ष्यमाणा विशेषाः । अगाधमतलस्पर्शं जलं यस्य स जलाशयो ह्रद उच्यते एकम् ॥ २५ ॥ उपकूपजलाशये कूपसमीपे यो जलाशयः कूपोद्धृतांबुस्थापनीयशिलादिरचितो गर्तः यत्रसं जलं सुखेन

पुंस्येवाऽंधुः प्रहिः कूप उदपानं तु पुंसि वा ॥ २६ ॥
नेमिस्त्रिकाऽस्य वीनाहो मुखबंधनमस्य यत् ॥
पुष्करिण्यां तु खातं स्यादखातं देवखातकम् ॥२७॥
पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः ॥
वेशंतः पल्वलं चाल्पसरो वापी तु दीर्घिका ॥ २८ ॥
खेयं तु परिखाधारस्त्वंभसां यत्र धारणम् ॥
स्यादालवालमावालमावापोऽथ नदी सरित् ॥ २९ ॥

गावः पिबंति तत्र आहावः निपानं इति द्वे । अंधुः प्रहिः कूपः उदपानं चत्वारि विहीर इति ख्यातस्य । तत्रोदपानं पुंसि वा ॥ २६ ॥ अस्य कूपस्य नेमिः अंते रज्ज्वादिधारणार्थं दारुयंत्रं सा त्रिका । त्रिका कूपस्य नेमौ स्यात्त्रिकं पृष्ठधरेऽस्त्रियामिति विश्वमेदिन्यौ । एकं "हातराहाट इति ख्यातस्य ।" अस्य कूपस्य पाषाणादिभिर्यन्मुखनिबंधनं नंदीपट इति ख्यातं स वीनाह उच्यते । "विनाहः" एकम् । पुष्करिणी खातं द्वे पुष्करिण्याः । अखातं देवखातकं "अखातो देवखातक इति पुंस्कांडेऽमरदत्तात्पुंस्यपि" द्वे अकृत्रिमखातस्य । "देवद्वारस्थजलाशयस्येत्यन्ये" ॥ २७ ॥ पद्माकरः तडागः कासारः सरसी सरः पंच तडागस्य । तत्र तडागे तटाक इति पाठः। स पुन्नपुंसकयोः । "तटाकतडागावपि । अत्र पद्मादि द्वे सपद्मागाधजलाशयस्य । कासारादित्रयं कृत्रिमपद्माकरस्येत्यपि मतम्" । सरसी स्त्री । सरः सांतम् । वेशंतः पल्वलं "पल्वलः" । वेशंतः पल्वलोऽस्त्रीति वाचस्पतिः । अल्पसरः त्रीणि स्वल्पसरसः । वापी "वापिः । वाप्यां वापिरपि स्मृतेति द्विरूपकोशः" । दीर्घिका द्वे दीर्घीति ख्यातायाः "अवरोहणवापिकायाः" ॥ २८ ॥ खेयं परिखा द्वे दुर्गाद्बहिर्यत्परितः खातं क्रियते तस्य चर इति प्रसिद्धस्य ( खंदक इत्यपि प्रसिद्धिः ) । यत्र अंभसां धारणं क्षेत्रादिसेकार्थं जलानां संग्रहणं स आधार उच्यते एकम् "धरण, बांद इति ख्यातस्य ।" यदुक्तम् । अपां धारणमाधारस्तदल्पं चालवालकमिति । आलवालं "अलवालं" आवालं आवापः त्रीणि वृक्षादिमूले समंततोऽंभसो धारणार्थं यद्वेष्टनं तस्य "अळें इति ख्यातस्य ।" नदी सरित ॥ २९ ॥ तरंगिणी शैवलिनी तटिनी ह्रादिनी "ह्रदिनी" धुनी स्रोतस्विनी "स्रोतस्वती" द्वीप-

तरंगिणी शैवलिनी तटिनी ह्रादिनी धुनी ॥
स्रोतस्विनी द्वीपवती स्रवंती निम्नगापगा ॥ ३० ॥
("कूलंकषा निर्झरिणी रोधोवक्रा सरस्वती" ॥
गंगा विष्णुपदी जह्नुतनया सुरनिम्नगा ॥) (१)
भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि ॥ ३१ ॥
कालिंदी सूर्यतनया यमुना शमनस्वसा ॥
रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका ॥ ३२ ॥
करतोया सदानीरा बाहुदा सैतवाहिनी ॥
शतद्रुस्तु शुतुद्रिः स्याद्विपाशा तु विपाट् स्त्रियाम् ॥३३॥

वती स्रवंती निम्नगा आपगा । अपां समूहो आपं तेन गच्छति । समूहे अण् । गमेर्डः "अपगेति ह्रस्वादिरपि । विद्यादगारमागारमपगामापगामपीति द्विरूपकोशः ।" द्वादश नद्याः ॥ ३० ॥ "कूलंकषादिसरस्वत्यंतानि चत्वार्यपि नद्याः" । गंगा विष्णुपदी जह्नुतनया सुरनिम्नगा भागीरथी त्रिपथगा त्रिस्रोताः भीष्मसूः अष्टौ भागीरथ्याः । त्रिस्रोताः सांता ॥ ३१ ॥ कालिंदी सूर्यतनया यमुना शमनस्वसा चत्वारि यमुनायाः । शमनस्वसा ऋदंता । रेवा नर्मदा सोमोद्भवा । सोमात् सोमवंशजात्पुरूरवस उद्भवति । अच् । तेनावतारितत्वात् । अथवा सोमाद्रुद्राद्भवति । मेकलकन्यका "मेखलकन्यका" चत्वारि नर्मदायाः । "मेकलो ऋषिरद्रिर्वा तस्य कन्यका" ॥३२॥ करतोया सदानीरा द्वे गौरीविवाहे कन्यादानोदकाज्जातायाः । "यदुक्तम् । प्रथमं कर्कटे देवी त्र्यहं गंगा रजस्वला । सर्वा रक्तवहा नद्यः करतोयांबुवाहिनीति ।" बाहुदा सैतवाहिनी द्वे कार्तवीर्यार्जुनेन याऽवतारिता तस्याः । "बाहुदस्य कार्तवीर्यस्येयं बाहुदा ।" शतद्रुः शुतुद्रिः । द्वे शतरुद्रेति देशभाषया प्रसिद्धायाः । शुतुद्रीत्यपि पाठः । शुतुद्रि (२) स्तोममिति श्रुतेः पाठात् । वसिष्ठशापभयाच्छतधा द्रुता शतद्रुः । विपाशा विपाट् द्वे पाशमोचिनीति ख्यातायाः । वसिष्ठं विपाशयतीति विपाट् शकारांता ॥ ३३ ॥ शोणः हिरण्यवाहः द्वे नदविशेषस्य "शोणानदीति प्रसिद्धस्य ।"

१ इदं पद्यमपि तालपत्रपुस्तके नास्ति ॥ २ हे शुतुद्रि--इति संबोधनमिदम् ॥

शोणो हिरण्यवाहः स्यात्कुल्याऽल्पा कृत्रिमा सरित् ॥
शरावती वेत्रवती चंद्रभागा सरस्वती ॥ ३४ ॥
कावेरी सरितोऽन्याश्च संभेदः सिंधुसंगमः ॥
द्वयोः प्रणाली पयसः पदव्यां त्रिषु तूत्तरौ ॥ ३५ ॥
देविकायां सरय्वां च भवे दाविकसारवौ ॥
सौगंधिकं तु कह्लारं हल्लकं रक्तसंध्यकम् ॥ ३६ ॥
स्यादुत्पलं कुवलयमथ नीलाबुजन्म च ॥
इंदीवरं च नीलेऽस्मिन्सिते कुमुदकैरवे ॥ ३७ ॥
शालूकमेषा कंदः स्याद्वारिपर्णी तु कुंभिका ॥
जलनीली तु शेवालं शैवलोऽथ कुमुद्वती ॥ ३८ ॥

याऽल्पा कृत्रिमा सरित्सा कुल्या । तालव्यांतम् । एकम् । "कुल्या नदी कुल्यमस्थि कुल्या वारिप्रणालिकेति धरणेर्नदमात्रेऽपि । शरावती वेत्रवती चंद्रभागा "चांद्रभागा चांद्रभागी चंद्रभागी । चंद्रभागा चांद्रभागा चांद्रभागी च सा मता । चंद्रभागी च सैवोक्तेति द्विरूपकोशः ।" सरस्वती ॥३४॥ कावेरी एते पंच सरिद्विशेषाः । एकैकम् । अन्याश्च सरितः कौशिकीगंडकीचर्मण्वतीगोदावेण्याद्याः संतीति शेषः । संभेदः सिंधुसंगमः । द्वे नदीमेलकस्य नदीसंगमस्य । "संभिद्यंते मिलंत्यत्र संभेदः ।" पयसो जलस्य पदव्यां निर्गमनमार्गे मकरमुखादिरूपा प्रणालीत्येकम् । तत् द्वयोः पुंसि तु प्रणालः ॥ ३५ ॥ उत्तरौ दाविकसारवौ त्रिषु । देविकायां नद्यां भवं दाविकम् । सरय्वां नद्यां भवं सारवम् । दांडिनायनेति निपातनात्सारवशब्दः साधुः । एकैकम् । स्त्रियां तु दाविकी सारवी । सौगंधिकं कह्लारं "कल्हारं" संध्याविकासिनः शुक्लसरोजस्य । हल्लकं रक्तसंध्यकं द्वे रक्तकह्लारस्य । रक्तान्संधीन् अकाति रक्तसंध्यकम् ॥ ३६ ॥ उत्पलं कुवलयं द्वे कुमुदस्य । "कमलसाधारणस्येत्यन्ये । कुवलं तूत्पलं कुवमिति त्रिकांडशेषः ।" नीलेऽस्मिन्नुत्पले नीलांबुजन्म इंदीवरं इति द्वे । "इंदिवरं इंदीवारं इत्यपि ।" सिते शुभ्रेऽस्मिन्नुत्पले कुमुदं कैरवं द्वे । "केरवस्य हंसस्येदं प्रियं कैरवम्" ॥ ३७ ॥ एषां उत्पलविशेषाणां कंदः शालूकं स्यात् एकम् । वारिपर्णी कुंभिका द्वे जलकुंभीति ख्यातायाः । जलनीली शेवालं शेवलः "शैवालः ।

कुमुदिन्या नलिन्यां तु बिसिनी पद्मिनीमुखाः ॥
वा पुंसि पद्मं नलिनमरविंदं महोत्पलम् ॥ ३९ ॥
सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ॥
पंकेरुहं तामरसं सारसं सरसीरुहम् ॥ ४० ॥
बिसप्रसूनराजीवपुष्करांभोरुहाणि च ॥
पुंडरीकं सितांभोजमथ रक्तसरोरुहे ॥ ४१ ॥
रक्तोत्पलं कोकनदं नालो नालमथास्त्रियाम् ॥
मृणालं बिसमब्जादिकदंबे खंडमस्त्रियाम् ॥ ४२ ॥
करहाटः शिफाकंदः किंजल्कः केसरोऽस्त्रियाम् ॥

शेवालश्चापि शैवालः शेवलो जलनीलिका ।" त्रयं शेवाळ इति ख्यातस्य । कुमुद्वती ॥ ३८ ॥ कुमुदिनी द्वे कुमुदिन्याः "कुमुदयुक्तदेशस्य च ।" नलिनी "नडिन्यपि । नडाः संत्यत्रेति नडिनी ।" बिसिनी पद्मिनी त्रयं कमलिन्याः । मुखशब्दात्सरोजिनीप्रभृतयः । पद्मं नलिनं अरविंदं महोत्पलम् ॥ ३९ ॥ सहस्रपत्रं कमलं शतपत्रं कुशेशयं पंकेरुहं तामरसं सारसं । सरसीरुहम् ॥ ४० ॥ बिसप्रसूनं राजीवं पुष्करं अंभोरुहं षोडश कमलस्य । वा पुंसीति षोडशभिरपि संबध्यते । तत्र पुंडरीकं सितांभोजं द्वे सितकमलस्य । रक्तसरोरुहम् ॥ ४१ ॥ रक्तोत्पलं कोकनदं त्रयं रक्तकमलस्य । कोकनदमिति रक्तकुंदेऽपि वर्तते । यदाहुः । रक्ताब्जे रक्तकुंदे च बुधैः कोकनदं स्मृतमिति । नालः नालम् । "नाला नाली च" द्वे पद्मादिदंडस्य । मृणालं बिसम् । "मृणाली मृणालः बिसम् । मृणालं नलदे क्लीबं पुन्नपुंसकयोर्बिश इति विश्वः ॥ मृणाले तु बिशं बिसमिति द्विरूपकोशः ।" द्वे मृणालस्य भिसें इति ख्यातस्य ॥ अस्त्रियां क्लीबपुंसोः । अब्जादिकदंबे कमलादीनां समूहे खंडमित्येकमस्त्रियाम् । "शंडः षंडः ।" तालव्यो मूर्द्धन्योऽब्जादिकदंबे षंडशब्दोऽयम् । मूर्द्धन्य एव वृषभे पूर्वाचार्यैर्विनिर्दिष्ट इत्यूष्मविवेकः ॥ ४२ ॥ करहाटः शिफाकंदः द्वे पद्ममूलस्य । "शिफा मूलतरुप्ररोहस्तत्सहितः कंदः । कंदो मूलमित्यर्थः । शिफेति च कंदमिति च पृथक् नामनी इत्येके । किंजल्कः केसरः "केशरः" द्वे केसरस्य । संवर्तिका नवदलं द्वे पद्मादीनां नवपत्रस्य । बीजकोशः वराटकः ।

संवर्तिका नवदलं बीजकोशो वराटकः ॥ ४३ ॥
इति वारिवर्गः ॥ १० ॥

---

उक्तं स्वर्व्योमदिक्कालधीशब्दादि सनाट्यकम् ॥
पातालभोगि नरकं वारि चैषां च संगतम् ॥ १ ॥
इत्यमरसिंहकृतौ नामलिंगानुशासने ॥
स्वरादिकाण्डः प्रथमः साग एव समर्थितः ॥ २ ॥

वराटकः पद्मबीजकोशे रज्जौ कपर्दके इति कोशांतरम् । द्वे बीजकोशस्य । बीजानां कमलाक्षाणां कोशः पात्रं अथवा आधारः बीजकोशः ॥ ४३ ॥ इति वारिवर्गः ॥ १० ॥ उक्तान् वर्गान्संग्रहेणोपसंहरति उक्तमिति । मया स्वर्व्योमादिकमुक्तम् । शब्दादीति । रसगंधादिग्रहणार्थमादिशब्दः । एषां स्वर्गादीनां संगतं संबंधवशात्प्राप्तं देवासुरमेघादिकं तच्चोक्तम् ॥ १ ॥ इतीति । एवममरसिंहस्य कृतौ नाम्नां लिंगानां चानुशासने स्वरादिशब्दानां काण्डः समूहः सांगः अंगोपांगसहितः प्रथमः समर्थितः कथितः ॥ २ ॥ श्रीमत्समरविवेके महेश्वरेण विरचिते एवं प्रथमः स्वरादिकाण्डः समाप्तः ॥ १॥

इति सटीकामरकोशस्य
प्रथमं काण्डं समाप्तम् ॥

## अमरकोशप्रथमकाण्डस्य वर्गानुक्रमेण श्लोकसंख्या.

| वर्गांकाः | वर्गनामानि. | मूलश्लोकाः | क्षेपकश्लोकाः | |
|---|---|---|---|---|
| | आदौ परिभाषायाः श्लोकाः ... | ५ | ० | |
| १ | स्वर्गवर्गस्य .............. | ६९॥ | ३॥ | |
| २ | व्योमवर्गस्य .............. | २ | ·॥· | मूलश्लोकाः, क्षेपकश्लोकाः, एवम् । २८२ १८ ३०० |
| ३ | दिग्वर्गस्य .............. | ३५ | ४॥ | |
| ४ | कालवर्गस्य .............. | ३१ | १॥ | |
| ५ | धीवर्गस्य.................. | १७ | २॥ | |
| ६ | शब्दादिवर्गस्य ........... | २५ | २ | |
| ७ | नाट्यवर्गस्य .............. | ३८ | १॥ | |
| ८ | पातालभोगिवर्गस्य ........ | ११ | १॥ | |
| ९ | नरकवर्गस्य .............. | ३॥ | ० | |
| १० | वारिवर्गस्य .............. | ४३ | ·॥· | |
| | अनुक्रमश्लोकौ ........... | २ | ० | |

अथ

# सटीकामरकोशस्य

## द्वितीयं काण्डम्.

---

वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः ॥
नृब्रह्मक्षत्रविट्शूद्रैः सांगोपांगैरिहोदिताः ॥ १ ॥
भूर्भूमिरचलाऽनंता रसा विश्वंभरा स्थिरा ॥
धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिः ॥२॥
सर्वंसहा वसुमती वसुधोर्वी वसुंधरा ॥
गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही ॥३॥
("विपुला गह्वरी धात्री गौरिला कुंभिनी क्षमा ॥
भूतधात्री रत्नगर्भा जगती सागरांबरा ॥१॥")(१)

श्रीगणेशाय नमः ॥ वर्गा इति । इह वक्ष्यमाणेऽस्मिन्काण्डे अंगैर्मृच्छाखानगरादिभिरुपांगैर्मृत्स्नावेशादिभिः सहितैः पृथ्वीपुरादिशब्दैर्वर्गा उदिताः । वक्तुमारब्धा इत्यर्थः । तत्र क्ष्माभृच्छैलः । मृगादिभिरित्यादिशब्देन पक्षिणां संग्रहः । "यद्वा मृगानत्ति पुनः पुनः स मृगादी सिंहः । अस्मिन्नर्थे ताच्छील्ये णिनिः" ॥ १ ॥ भूः भूमिः अचला न चलतीत्यचला । अथवा अचलाः पर्वताः संति अस्याम् । अर्शआद्यच् । अनंता रसा विश्वंभरा स्थिरा धरा धरित्री धरणिः क्षोणिः "क्षोणी क्षौणिः क्षौणी" ज्या काश्यपी क्षितिः ॥२॥ सर्वसहा वसुमती वसुधा उर्वी वसुंधरा गोत्रा कुः पृथिवी । "पृथवी । पृथवी पृथिवी पृथ्वीति शब्दार्णवः ।" पृथ्वी क्ष्मा अवनिः "अवनी" मेदिनी मही "महिः" इति सप्तविंशतिर्नामानि भूमेः । अत्र भूमी–धरणीत्यादयो ङीषंता अपि । कृदिकारादक्तिन इति गणसूत्रात् ॥ ३ ॥ "विपुलेत्येकादश भूमेश्च ।" ॥ १ ॥ मृत् मृत्तिका । मृदस्तिकन् । द्वे मृदः । मृत्सा मृत्स्ना ।

---

१ इदं पद्यं तालपत्रपुस्तकेऽपि नास्ति ।

मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका ॥
उर्वरा सर्वसस्याढ्या स्यादूषः क्षारमृत्तिका ॥ ४ ॥
ऊषवानूषरो द्वावप्यन्यलिंगौ स्थलं स्थली ॥
समानौ मरुधन्वानौ द्वे खिलाप्रहते समे ॥ ५ ॥
त्रिष्वथो जगती लोको विष्टपं भुवनं जगत् ॥
लोकोऽयं भारतं वर्षं शरावत्यास्तु योऽवधेः ॥ ६ ॥
देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः ॥

सत्नौ प्रशंसायाम् । द्वे प्रशस्तमृदः । प्रशस्ता मृत्तिका त्विसन्वयः । कृष्णभूमः कृष्णमृत्स्यादुदग्भूम उदङ्मृदि । पांडुभूमः पांडुमृच्चेत्यपि पठ्यते । सर्वैः सस्यैराढ्या मृत्तिका उर्वरेत्युच्यते एकम् । ऊषः क्षारमृत्तिका द्वे क्षारमृत्तिकायाः । ऊषोऽदंतः ॥ ४ ॥ ऊषवान् ऊषरः द्वयं क्षारमृद्विशिष्टस्य । द्वावप्यन्यलिंगौ । यथा ऊषवती ऊषरा वा स्थली । ऊषरं स्थलमित्यादि । स्थली अकृत्रिमस्थानस्य । "कृत्रिमा तु स्थला । स्थलमुभयसाधारणम् ।" मरुः धन्वा द्वे मरुदेशस्य । निर्जलोऽयम् । म्रियते पिपासया यस्मिन्मरुः । खिलं अप्रहतं द्वे अकृष्टस्य क्षेत्रादेः । न प्रहन्यते हलादिभिरप्रहतम् । "समे समानार्थे" त्रिषु लिंगेषु इत्यर्थः ॥५॥ जगती लोकः विष्टपं "पिष्टपम्" । जगत्स्यात्पिष्टपे क्लीबं वायौ ना जंगमे त्रिषु । जगती भुवने क्ष्मायां छंदोभेदे जनेऽपि च । लोकस्तु भुवने जने इति मेदिनी । "विष्टपः पुमानिति बोपालितः ।" भुवनं जगत् पंच भूतलस्य । "एकं महाभूतं पृथिवी । पंचमहाभूतविषयेंद्रियात्मकं जगदिति पृथ्वीजगतोर्भेदः ।" अयं जंबुद्वीपवर्ती दृश्यमानो लोकः भारतनामकं वर्षं ज्ञेयम् । "उक्तं च । उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । वर्षं तद्भारतं नाम भारती यत्र संततिरिति ।" भरतस्य राज्ञ इदं भारतम् । "वर्षशब्दः पुंलिंगोऽपि । पुन्नपुंसकयोर्वर्षं जंबुद्वीपाब्दवृष्टिष्विति रुद्रः । वर्षोऽस्त्री भारतादौ च जंबुद्वीपाब्दवृष्टिष्विति मेदिनी ।" एकम् । एवमिलावृतादीन्यष्टौ वर्षाण्यन्यान्यपि । शरावत्या अवधेः ॥ ६ ॥ यः प्राग्दक्षिणः प्राक्सहितो दक्षिणो देशः स प्राच्य इत्येकम् । शरावत्या अवधेर्यः पश्चिमोत्तरः पश्चिमसहित उत्तरो देशः स उदीच्य इत्येकम् ॥ प्रत्यंतः अंतं प्रतिगतः म्लेच्छदेशः द्वे शिष्टाचाररहितस्य कामरूपादेः । "यदुक्तम् । चातुर्वर्ण्यव्यवस्थानं

प्रत्यंतो म्लेच्छदेशः स्यान्मध्यदेशस्तु मध्यमः ॥७॥
आर्यावर्तः पुण्यभूमिर्मध्यं विंध्यहिमालयोः ॥
नीवृज्जनपदो देशविषयौ तूपवर्तनम् ॥ ८ ॥
त्रिष्वागोष्ठान्नडप्राये नड्वान्नड्वल इत्यपि ॥
कुमुद्वान्कुमुदप्राये वेतस्वान्बहुवेतसे ॥ ९ ॥
शाद्वलः शादहरिते सजंबाले तु पंकिलः ॥
जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः ॥ १० ॥

यस्मिन्देशे न विद्यते । तं म्लेच्छविषयं प्राहुरार्यावर्तमतः परमिति ।" मध्यदेशः मध्यमः द्वे । एतत्परिमाणं तु । हिमवद्विंध्ययोर्मध्यं यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तित इति ॥ विनशनं तीर्थभेदः । "कुरुक्षेत्रम्" ॥ ७ ॥ आर्यावर्तः पुण्यभूमिः द्वे विंध्यहिमाचलयोरंतरस्य । उक्तं च । आसमुद्राच्च वै पूर्वादासमुद्राच्च पश्चिमात् ॥ तयोरेवांतरं गिर्योरार्यावर्तं विदुर्बुधा इति । "हिमप्रधानोऽगः हिमागः । हिमेनाल्यते हिमालः । अल भूषणादौ घञ् । हिमागयोरित्यपि पाठः ।" नीवृत् जनपदः द्वे जनैर्वास्यमानराष्ट्रस्य मगधादेः । नीवृत्पुंसि साहचर्यात् । नियतं वर्ततेऽस्मिन्नीवृत् । नहिवृतीति दीर्घः । जनः पदं वस्तु यत्र । "जानपदोऽपि । भवेज्जनपदो जानपदोऽपि जनदेशयोरिति विश्वमेदिन्यौ ।" देशः विषयः उपवर्तनं त्रीणि ग्रामसमुदायलक्षणस्य देशमात्रस्य ॥ ८ ॥ अथ गोष्ठशब्दमभिव्याप्य वक्ष्यमाणाः त्रिषु । त्रिषु लिंगेषु इत्यर्थः । नड्वान् नड्वलः द्वे नडप्राये नडबहुले देशे । कुमुद्वानित्येकं कुमुदप्राये । वेतस्वानित्येकं बहुवेतसे । बहवो वेतसा वानीरा यत्र तस्मिन् देशे । तदस्मिन्नस्तीत्यर्थे कुमुदनडवेतसेभ्यो ड्मतुप् ॥९॥ शादैर्बालतृणैर्हरिते देशे शाद्वल इत्येकम् । शादाः संत्यस्मिन् शाद्वलः । एतौ मध्यटवर्गीयौ । वैडूर्यमणिशाड्वलाविति द्विरूपकोशात् । शाड्वल इत्यपि पाठः । सजंबाले कर्दमयुक्ते देशे पंकिल इत्येकम् । जलप्रायं अनूपं द्वे जलबहुलदेशस्य । अनुगता आपोऽत्र अनूपम् । अनूपदेशलक्षणम् । नानाद्रुमलतावीरुन्निर्झरप्रांतशीतलैः ॥ वनैर्व्याप्तमनूपं तत् सस्यैर्व्रीहियवादिभिः ॥ तथाविधः अनूपसदृशः कश्चिन्नद्यादेरुपांतदेशः कच्छ इत्युच्यते । एकम् । कच्छशब्दस्य पुंसीति विशेषस्त्रिष्विति पूर्वोक्तस्य बाधनार्थः । कच्छ इत्यनूपस्यैव

स्त्री शर्करा शर्करिलः शार्करः शर्करावति ॥
देश एवादिमावेवमुन्नेयाः सिकतावति ॥ ११ ॥
देशो नद्यंबुवृष्ट्यंबुसंपन्नव्रीहिपालितः ॥
स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥ १२ ॥
सुराज्ञि देशे राजन्वान् स्यात्ततोऽन्यत्र राजवान् ॥
गोष्ठं गोस्थानकं तत्तु गौष्ठीनं भूतपूर्वकम् ॥ १३ ॥
पर्यंतभूः परिसरः सेतुरालौ स्त्रिया पुमान् ॥
वामलूरश्च नाकुश्च वल्मीकं पुन्नपुंसकम् ॥ १४ ॥
अयनं वर्त्म मार्गाध्वपंथानः पदवी सृतिः ॥

पर्याय इति केचित्। "कच्छम् । कच्छमनूप इति बोपालितः" ॥ १० ॥ शर्करा शर्करिलः द्वे वालुकायुक्तदेशे । तत्र शर्करा स्त्री । शार्करः शर्करावान् द्वे वालुकायुक्तस्य देशादेः । आदिमौ शर्कराशर्करिलौ देशे एव, देशे लुबिलचौ चेति नियमात् । एवं सिकतावत्युन्नेया ऊहनीयाः । तथाहि । सिकताः सिकतिल इति द्वे सिकतायुक्तस्य देशस्य । सैकतः सिकतावान् द्वे वालुकायुक्तस्य देशादेः । तत्र सिकताः नित्यं स्त्रियां बहुत्वे च । "अत्र शर्करासिकताशब्दौ द्वावपि बहुवचनांताविति केचित्" ॥ ११ ॥ देश इति । नद्यंबुभिर्वृष्ट्यंबुभिश्च संपन्नैर्व्रीहिभिः पालितो देशः क्रमेण नदीमातृको देवमातृकश्च स्यात् । नद्यंबुजातसस्यर्द्धितो नदीमातृकः । वृष्ट्यंबुजातसस्यर्द्धितो देवमातृक इत्यर्थः । देवो मेघे सुरे राज्ञीति विश्वः । एकैकम् ॥ १२ ॥ धर्मशीलः शोभनो राजा यत्र स सुराजा तस्मिन्देशे राजन्वान् एकम् । राजन्वान्सौराज्ये इति निपातितो राजन्वान्शब्दः । ततोऽन्यत्र राजमात्रयुक्ते देशे राजवान् एकम् । गोष्ठं गोस्थानकं द्वे गवां स्थानस्य । तत् गोष्ठं भूतपूर्वकं चेत् गौष्ठीनमित्युच्यते। पूर्वं यत्र गाव आसन् तत्स्थानं गौष्ठीनमित्यर्थः । गोष्ठात्खञ् भूतपूर्वे इति खञ् । एकम् ॥ १३ ॥ पर्यंतभूः परिसरः द्वे नदीपर्वतादीनामुपांतभुवः । सेतुः आलिः "आली" द्वे सेतोः "पूल इति ख्यातस्य ।" स्त्रीलिंगायामालौ सेतुः पुमानित्यन्वयः । वामलूरः नाकुः वल्मीकं त्रीणि वल्मीकस्य ॥ १४ ॥ अयनम् । अयतेऽनेन । अय गतौ ।

सरणिः पद्धतिः पद्या वर्तन्येकपदीति च ॥ १५ ॥
अतिपंथाः सुपंथाश्च सत्पथश्चार्चितेऽध्वनि ॥
व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः ॥१६॥
अपंथास्त्वपथं तुल्ये शृंगाटकचतुष्पथे ॥
प्रांतरं दूरशून्योऽध्वा कांतारं वर्त्म दुर्गमम् ॥ १७ ॥
गव्यूतिः स्त्री क्रोशयुगं नल्वः किष्कुचतुःशतम् ॥
घंटापथः संसरणं तत्पुरस्योपनिष्करम् ॥ १८ ॥

अयनं पथि गेहेऽर्कस्योदग्दक्षिणतो गताविति हैमः । वर्त्म मार्गः अध्वा पंथाः "पथः । वाटः पथश्च मार्गश्चेति त्रिकाण्डशेषः ।" पदवी "पदविः ।" सृतिः सरणिः । "शरणिः पथि चावलाविति तालव्यादावजयात्तालव्यादिरपि । ङीषंतोऽपि" पद्धतिः "पद्धती" पद्या पादाय हिता पद्या । तस्मै हितमिति यत् । वर्तनी "वर्तनिः वर्त्मनिः । वर्त्मनिर्वर्त्मनी पथीति हैमः ।" एकपदी द्वादश मार्गस्य ॥ १५ ॥ अतिपंथाः सुपंथाः सत्पथः त्रयं अर्चितेऽध्वनि शोभने मार्गे । व्यध्वः दुरध्वः विपथः कदध्वा कापथः "कुपथोऽपि" पंच दुर्मार्गस्य । तत्र कदध्वा नांतः ॥ १६ ॥ अपंथाः अपथं द्वे अमार्गस्य । शृंगाटकं चतुष्पथं द्वे चव्हाटा इति ख्यातस्य । दूरश्चासौ शून्यश्च दूरशून्यः । छायाजलादिवर्जितो दूरस्थोऽध्वा मार्गः प्रांतरमित्युच्यते । एकम् । यद्दुर्गमं चोरकंटकाद्युपद्रवयुक्तं वर्त्म मार्गः कांतारमित्युच्यते । पुंसि कांतारः । कांतारोऽस्त्री महारण्ये बिले दुर्गमवर्त्मनीति मेदिनी ।एकम् ॥ १७ ॥ क्रोशयुगं गव्यूतिरित्युच्यते । "क्रोशो धनुःसहस्रे द्वे धनुर्हस्तचतुष्टयम् । द्वाभ्यां धनुःसहस्राभ्यां गव्यूतिः पुंसि भाषितमिति शब्दार्णवात्पुंस्यपि । क्लीबे तु गव्यूतम् । धन्वंतरसहस्रं तु क्रोशः क्रोशद्वयं पुनः । गव्यूतं स्त्री तु गव्यूतिर्गोरुतं गोमतं च तदिति वाचस्पतिः ।" किष्कूणां हस्तानां चतुःशतं "चतुःशती वा" नल्व इत्युच्यते । चतुःशतहस्तमितं स्थानं नल्वसंज्ञकमित्यर्थः । एकम् । घंटापथः संसरणं द्वे राजपथमात्रस्य । घंटोपलक्षितगजादीनां पंथाः घंटापथः । "दशधन्वंतरो राजमार्गो घंटापथः स्मृत इति चाणक्यः" । तत्संसरणं पुरस्य नगरस्य चेदुपनिष्करमित्येकम् । बुधैः संसरणं वर्त्म गजा-

("द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी ॥
दिवस्पृथिव्यौ गंजा तु रुमा स्याल्लवणाकरः॥१॥") (१)

इति भूमिवर्गः ॥ १ ॥

---

पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम् ॥
स्थानीयं निगमोऽन्यत्तु यन्मूलनगरात्पुरम् ॥ १ ॥
तच्छाखानगरं वेशो वेश्याजनसमाश्रयः ॥
आपणस्तु निषद्यायां विपणिः पण्यवीथिका ॥ २ ॥

दीनामसंकुलम् । पुरस्योपस्करं चोक्तमिति भुग्नः ॥ १८ ॥ "द्यावेत्यादीनि पंच द्विवचननामानि द्यावाभूम्योः । गंजेत्यादि त्रयं क्षारसमुद्रस्य । गंजा खनौ सुरागृहे । रुमा सुग्रीवदारेषु विशिष्टलवणाकर इति मेदिनी । गंजारुमे स्त्रियाम् ।" ॥ १ ॥ अंगोपांगापेक्षया भूमिरेवात्र प्रधानमिति भूमिवर्ग इति व्यपदेशः । एवमन्यत्रापि मंतव्यम् ॥ इति भूमिवर्गः ॥ १ ॥ पूः पुरी "पुरिः" नगरी पत्तनं "पट्टनं" पुटभेदनं स्थानीयं निगमः सप्तकं नगरस्य । पूः पुरौ। पुरीनगर्यौ वा स्त्रियौ । पक्षे पुरं नगरम् । केचिदत्र भेदं चक्रुर्यथा । यत्रानेकशिल्पिनोऽनेकवणिगादिव्यवहारस्तत्पुरादिसंज्ञम् । यत्र राजा तदनुचराश्च संति तत्पुरं पत्तनादिसंज्ञम् । यत्प्राकारादिवेष्टितं विस्तीर्णं पुरं तत्स्थानीयादिनामकमिति । यन्मूलनगरादन्यत्पुरं तच्छाखानगरमित्यन्वयः । एकम् । मूलनगरं राजधानी ॥ १ ॥ वेश्याजनस्य समाश्रयो निवेशस्थानं वेश इत्युच्यते । द्वे वेश्यानिवासस्य । "ताल्व्यांतम् । नेपथ्ये गृहमात्रे च वेशो वेश्यागृहेऽपि चेति ताल्व्यांते रभसः । गृहमात्रे गणिकायाः सद्मनि वेशो भवेत्तु ताल्व्यः । ताल्व्यो मूर्द्धन्योऽलंकरणे कथित आचार्यैरित्यूष्मविवेकः ।" आपणः निषद्या द्वे क्रय्यवस्तुशालायाः । हट्टवणिक्पथपण्याजिरादिकमपि । विपणिः "विपणी" पण्यवीथिका द्वे क्रय्यवस्तुशालापंक्तेः । चत्वार्यपि हट्टस्येत्यन्ये । विपणिः स्त्री । "आपणादि द्वयं हट्टस्य बाजार इति प्रसिद्धस्य । विपणीति द्वयं हट्टशून्यविक्रयस्थानस्येत्यपि मतम्" ॥ २ ॥ रथ्या । रथं वहतीति तद्वहति रथयुगेति यत् । प्रतोली विशिखा त्रीणि

---

१ इदं पद्यं तालपत्रपुस्तकेऽपि नास्ति ।

रथ्या प्रतोली विशिखा स्याच्चयो वप्रमस्त्रियाम् ॥
प्राकारो वरणः सालः प्राचीनं प्रांततो वृतिः ॥ ३ ॥
भित्तिः स्त्री कुड्यमेडूकं यदंतर्न्यस्तकीकसम् ॥
गृहं गेहोदवसितं वेश्म सद्म निकेतनम् ॥ ४ ॥
निशांतपस्त्यसदनं भवनागारमंदिरम् ॥
गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः ॥ ५ ॥
वासः कुटी द्वयोः शाला सभा संजवनं त्विदम् ॥
चतुःशालं मुनीनां तु पर्णशालोटजोऽस्त्रियाम् ॥ ६ ॥

ग्रामाभ्यंतरमार्गस्य। चयः वप्रं द्वे परिखोद्धृतमृत्तिकाकूटस्य। "प्राकाराधारस्य वा।" प्राकारः वरणः सालः "शालः। तालव्यो नृपमत्स्ययोः शालो वृक्षे वृतौ द्रुभेदे च। तालव्यदंत्य उक्तस्तथा स्त्रियां वृक्षशाखायामित्यूष्मविवेकः। सालो वरणसर्जयोरिति रभसः।" त्रयं यष्टिकाकंटकादिरचितवेष्टनस्य। नगरादेः प्रांतभागे या वृतिः वेष्टनं वेणुकंटकादीनां तत्प्राचीनमित्युच्यते। "प्राचीरमित्यपि।" एकम् ॥ ३ ॥ भित्तिः कुड्यं द्वे भित्तेः। तत्कुड्यं अंतर्न्यस्तकीकसं चेदेडूकसंज्ञम्। "एडुकं एडोकम्। भवेदेडोकमेडुकमिति द्विरूपकोशः।" एकम्। अंतर्न्यस्तानि कीकसानि अस्थीनि दार्ढ्यार्थं यत्र तत्। कीकसं कठिनद्रव्यस्योपलक्षणम्। गृहं गेहं उदवसितं वेश्म सद्म निकेतनम् ॥ ४ ॥ निशांतं पस्त्यं "वस्त्यं वसेस्तिः तत्र साधुरिति यत्।" सदनं "सादनम्।" सदनं सादनं सममिति द्विरूपकोशः। भवनं अगारम् "आगारम्। विद्यादगारमागारमपगामापगामपीति द्विरूपकोशः।" मंदिरं गृहाः निकाय्यः निलयः आलयः षोडश गृहस्य। तत्र गृहशब्दः बहुत्वे नित्यं पुंसि च। "क्लीबेऽपि।" ॥ ५ ॥ वासः कुटी शाला सभा चत्वारि सभागृहस्य। "तत्र कुटो द्वयोः स्त्रियां तु कुटी कुटिश्च। कुटः कोटे पुमानस्त्री घटे स्त्रीपुंसयोर्गृहे इति मेदिनी। गृहादिसभांतानि विंशतिर्नामानि गृहस्येत्यन्ये।" संजवनं चतुःशालम्। चतसृणां शालानां समाहारः द्वे अन्योन्याभिमुखशालाचतुष्कस्य "चौसोपी, चौपट, चौक इति प्रसिद्धस्य"। पर्णशाला उटजः द्वे मुनिगृहस्य। "उटजस्तृणपर्णादिरिति देशिकोशः" ॥ ६ ॥ चैत्यं आय-

चैत्यमायतनं तुल्ये वाजिशाला तु मंदुरा ॥
आवेशनं शिल्पिशाला प्रपा पानीयशालिका ॥ ७ ॥
मठश्छात्रादिनिलयो गंजा तु मदिरागृहम् ॥
गर्भागारं वासगृहमरिष्टं सूतिकागृहम् ॥ ८ ॥
("कुट्टिमोऽस्त्री निबद्धा भूश्चंद्रशाला शिरोगृहम्"॥)(१)
वातायनं गवाक्षोऽथ मंडपोऽस्त्री जनाश्रयः ॥
हर्म्यादि धनिनां वासः प्रासादो देवभूभुजाम् ॥ ९ ॥
सौधोऽस्त्री राजसदनमुपकार्योपकारिका ॥
स्वस्तिकः सर्वतोभद्रो नंद्यावर्तादयोऽपि च ॥ १० ॥

तनं द्वे यज्ञायतनभेदस्य । वाजिशाला मंदुरा द्वे अश्वशालायाः " पागा इति ख्यातायाः । आवेशनं शिल्पिशाला "शिल्पशालेत्यपि पाठः ।" तत्र शिल्पस्य शालेति ।" द्वे स्वर्णकारादीनां शालायाः । प्रपा पानीयशालिका द्वे जलशालायाः "पाणपोही इति प्रसिद्धायाः" ॥ ७ ॥ छात्रादिनिलयः शिष्यादीनां गृहं मठ इत्युच्यते । "छात्रोंऽतेवास्यादिर्येषां परिव्राजकक्षपणकादीनां तेषां निलय इति वा ।" आदिना कापालादिसंग्रहः । गंजादिद्वयं मद्यस्थानस्य । गर्भागारं वासगृहं द्वे गृहमध्यभागस्य माजघर इति प्रसिद्धस्य। अरिष्टं सूतिकागृहम् । "सूतकादीनामत्रविकल्पात्सूतकागृहम्" द्वे प्रसवस्थानस्य । "चत्वारोऽपि पर्याया इत्यन्ये । पाषाणादिनिबद्धा भूः स कुट्टिम इत्येकम् । फरसबंदी, भूमिगृह, तळघर इति प्रसिद्धस्य । चंद्रादिद्वयं गृहोपरितनगृहस्य उपरमाडी, अटाळी, गच्ची इत्यादिप्रसिद्धस्य ॥ ८ ॥ वातायनं गवाक्षः द्वे गवाक्षस्य "झरोका इति प्रसिद्धस्य" । मंडपः जनाश्रयः द्वे मंडपस्य । तत्र मंडपः क्लीबपुंसोः । धनिनां धनवतां वासः गृहं तत् हर्म्यादि । आदिना स्वस्तिकाट्टालिकादेर्ग्रहः । देवानां राज्ञां च गृहं प्रासाद इत्येकम ॥ ९ ॥ सौधः । सुधया लिप्तः । सुधा तु भित्यादिरंजनार्थं यत् श्वेतद्रव्यम् । राजसदनं उपकार्या उपकारिका चत्वारि राजगृहस्य । स्वस्तिकादय ईश्वरसद्मनां राजगृहाणां प्रभेदाः स्युः । तत्र चतुर्द्वारतोरणः स्वस्तिकः । उपर्युपरिगृहं सर्वतोभद्रः । वर्तुलाकृतिर्नंद्यावर्तः ॥ १० ॥ विस्तीर्णः सुंदरो विष्कं-

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

विच्छंदकः प्रभेदा हि भवंतीश्वरसद्मनाम् ॥
स्त्र्यगारं भूभुजामंतःपुरं स्यादवरोधनम् ॥ ११ ॥
शुद्धांतश्चावरोधश्च स्यादट्टः क्षौममस्त्रियाम् ॥
प्रघाणप्रघणालिंदा बहिर्द्वारप्रकोष्ठके ॥ १२ ॥
गृहावग्रहणी देहल्यंगणं चत्वराजिरे ॥
अधस्ताद्दारुणि शिला नासा दारूपरि स्थितम् ॥१३॥
प्रच्छन्नमंतर्द्वारं स्यात्पक्षद्वारं तु पक्षकम् ॥
वलीकनीध्रे पटलप्रांतेऽथ पटलं छदिः ॥ १४ ॥

दकः । "विच्छर्दकः" आदिना रुचकवर्द्धमानादिग्रहः । भूभुजां राज्ञां स्त्र्यगारं स्त्रीगृहं तत् अंतःपुरं अवरोधनम् ॥ ११ ॥ शुद्धांतः अवरोधः चत्वारि । अट्टः क्षौमं "क्षोमं" द्वे हर्म्यादिपृष्ठस्य "उपरिगृहस्य माडी इत्या-दिख्यातस्य ।" गृहविशेषस्येत्येके । प्रघाणः प्रघणः । प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यते स प्रघणः प्राघाणश्च । हन्धातुः । अलिंदः "आलिंदः । गृहैकदेशे आलिंदः प्रघाणः प्रघणस्तथेत्यमरमाला ।" त्रीणि द्वाराद्बहिर्यः प्रकोष्ठकस्तत्र ओटा इति प्रसिद्धस्य । "द्वारप्रकोष्ठाद्बहिर्द्वाराग्रवर्तिचतुष्क-स्येति वा पाहिरी इति ख्यातस्य"॥ १२॥ गृहावग्रहणी देहली द्वे गृहद्वारा-धोभागस्य उंबरा इति प्रसिद्धस्य । "देहं गोमयाद्युपलेपं लातीति विगृही-तत्वाद्गृहद्वाराधोभागस्य उंबरओठा उंबरठा इति ख्यातस्य ।" अंगणं "अंग-नम् । अंगनं प्रांगणे याने कामिन्यामंगना मतेति नांतवर्गे विश्वः" चत्वरं अजिरं त्रीणि प्रांगणस्य । शिलेत्येकं द्वारस्तंभाधःस्थित काष्ठस्य । "शिली । तलदारु शिल्यधोऽपि नासा दारूर्ध्वमस्य यदिति बोपालितात् ।" नासे-त्येकं "दंत्यांतम्" द्वारस्तंभोपरि स्थितस्य दारुणः "मस्तकपट्टी गणेशपट्टी इति प्रसिद्धस्य" ॥ १३ ॥ प्रच्छन्नं अंतर्द्वारं द्वे गुप्तद्वारस्य खिडकीसंज्ञस्य । पक्षद्वारं पक्षकं द्वे पार्श्वद्वारस्य । मागिलदार इति लोकप्रसिद्धिः । "प्रच्छ-न्नमंतर्द्वारं स्यात्पक्षद्वारं तदुच्यत इति कात्यात् पक्षद्वारं पूर्वान्वयीत्यन्ये ।" वलीकम् । "वलीकः पटलं प्रांत इति बोपालितात्पुंस्त्वमपि" । नीध्रं द्वे पट-लप्रांते गृहच्छादनस्य "भित्तिबहिर्भागीयस्य वळचण पडवी इति ख्यातस्य"। पटलं छदिः द्वे छादनस्य "शाकार इति ख्यातस्य ।" छदिः सांतं स्त्रियाम् ।

गोपानसी तु वलभी छादने वक्रदारुणि ॥
कपोतपालिकायां तु विटंकं पुन्नपुंसकम् ॥ १५ ॥
स्त्री द्वार्द्वारं प्रतीहारः स्याद्वितर्दिस्तु वेदिका ॥
तोरणोऽस्त्री बहिर्द्वारं पुरद्वारं तु गोपुरम् ॥ १६ ॥
कूटं पूर्द्वारि यद्धस्तिनखस्तस्मिन्नथ त्रिषु ॥
कपाटमररं तुल्ये तद्विष्कंभोऽर्गलं न ना ॥ १७ ॥
आरोहणं स्यात्सोपानं निश्रेणिस्त्वधिरोहिणी ॥
संमार्जनी शोधनी स्यात्संकरोऽवकरस्तथा ॥ १८ ॥

छदिषौ ॥ १४ ॥ गोपानसी वलभी "वलभिः" । वडभीति मूर्द्धन्यमध्योऽपि । शुद्धांते वडभीचंद्रशाले सौधोर्ध्ववेश्मनीति रभसः "ओको गृहं पिटं चालो वडभी चंद्रशालिकेति त्रिकांडशेषः" द्वे छादनार्थं यद्वक्रदारु तत्र । पटलाधारभूतवक्रकाष्ठे इत्यर्थः । "पटलाधारवंशपंजरस्य ओमण कडणी वांसा इति प्रसिद्धस्य । सज्जा इत्यपि मतम् ।" कपोतपालिका विटंकं द्वे सौधादौ काष्ठादिरचितपक्षिगृहस्य ॥ १५ ॥ द्वाः द्वारं प्रतीहारः "प्रतिहारः" त्रयं द्वारस्य । तत्र द्वाः स्त्रियां रेफांतः । वितर्दिः "वितर्दी" वेदिका द्वे वेद्याः । "अंगणादिषु कृतस्योपवेशस्थानस्येति वा ।" वितर्दिः स्त्री । तोरणः बहिर्द्वारं द्वे तोरणस्य "द्वारबाह्यभागस्य ।" पुरद्वारं गोपुरं द्वे नगरद्वारस्य ॥ १६ ॥ पूर्द्वारि नगरद्वारे सुखेनावतारणार्थं "क्रमनिम्नं" यन्मृत्कूटं क्रियते तत्र हस्तिनख इत्येकम् । कपाटं "कवाटम्" । "कवाटश्च कपाटश्च त्रिषु स्यादररं न नेति वाचस्पतिः । कवाटश्चाररमिति त्रिकांडशेषः ।" अररं द्वे कवाड इति ख्यातस्य । ते त्रिषु । तत्र स्त्रियां कपाटी अररी । तद्विष्कंभः तस्य कपाटस्यावष्टंभकं यन्मुसलं तदर्गलमित्युच्यते । अडसर इति लौकिकप्रसिद्धिः । तत्स्त्रीनपुंसकयोः । स्त्रियां त्वर्गला । "तद्विष्कंभ्यर्गलमिति पाठः" ॥ १७ ॥ आरोहणं सोपानं द्वे सोपानस्य । पायरी इति ख्यातस्य ।" निश्रेणिः । "निश्रेणी इत्यपि । नियता श्रेणिः पंक्तिरत्रेति निश्रेणिः ।" अधिरोहिणी द्वयं निसणी "शिडी" इति ख्यातस्य । संमार्जनी शोधनी द्वे "सारणी" केरसुणी इति ख्यातस्य । संमार्जन्या निक्षिप्ते निरस्ते केर इति ख्याते संकरः। "संकार इति पाठे कर्मणि घञ् ।" अवकरः इति द्वयम् ॥ १८ ॥ मुखं निःस-

क्षिप्ते मुखं निःसरणं संनिवेशो निकर्षणम् ॥
समौ संवसथग्रामौ वेश्मभूर्वास्तुरस्त्रियाम् ॥ १९ ॥
ग्रामांते उपशल्यं स्यात्सीमसीमे स्त्रियामुभे ॥
घोष आभीरपल्ली स्यात्पक्कणः शबरालयः ॥ २० ॥

इति पुरवर्गः ॥ २ ॥

---

महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः ॥
अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः ॥ १ ॥
लोकालोकश्चक्रवालस्त्रिकूटस्त्रिककुत्समौ ॥
अस्तस्तु चरमक्ष्माभृदुदयः पूर्वपर्वतः ॥ २ ॥

रणं द्वे गृहादेर्मुखभूतस्य द्वारप्रदेशस्य "उसदार, पुढीलदार इति ख्यातस्य। निःसरंत्यनेन निःसरणम्" संनिवेशः निकर्षणं द्वे समीचीनवासस्थानस्य। "पुरादौ गृहादिरचनापरिच्छिन्नदेशस्येत्यर्थः। संवसथः ग्रामः द्वे ग्रामस्य। वेश्मभूर्गृहभूमिः वास्तुरित्युच्यते द्वे "गृहरचनावाच्छिन्नभूमेः" ॥ १९ ॥ ग्रामांते ग्रामस्य समीपप्रदेशे उपशल्यमित्येकम्। ग्रामांतमुपशल्यमित्यपि पाठः। "तत्र ग्रामस्यांतं समीपम्"। सीमा सीमा द्वे ग्रामादेर्मर्यादायाम्। नामन् सीमन्नित्यादि निपातनात् पूर्वो नकारांतः। "उभे द्वे स्त्रियाम्"। घोषः आभीरपल्ली "आभीरपल्लिः" द्वे गोपालग्रामस्य तद्गृहस्य वा। कुटीकुग्रामयोः पल्लिरिति शाश्वतः। शबरस्यालयः पक्कण इत्युच्यते द्वे "भिल्लग्रामस्य।" शबरो वनचांडालः ॥ २० ॥ इति पुरवर्गः ॥ २ ॥ महीध्रः शिखरी क्ष्माभृत् अहार्यः धरः पर्वतः अद्रिः गोत्रः गिरिः ग्रावा अचलः शैलः शिलोच्चयः त्रयोदश पर्वतसामान्यस्य ॥ १ ॥ लोकालोकः। लोकालोकौ प्रकाशांधकारावत्र स्तः। लोकृ दर्शने। चक्रवालः "चक्रवाडः" द्वे सप्तद्वीपवत्या भूमेः प्राकारभूते गिरौ। त्रिकूटः त्रिककुत् द्वे त्रिकूटाचलस्य। त्रिकूटं सिंधुलवणे त्रिकूटः पर्वतांतर इति हैमः। दांतः त्रिककुत्। अस्तः चरमक्ष्माभृत् द्वे अस्ताचलस्य। "अस्तं क्षिप्तेऽप्यवसिते त्रिषु ना पश्चिमाचले इति विश्वमेदिन्यौ।" उदयः पूर्वपर्वतः द्वे उदयाचलस्य ॥ २ ॥ हिमवानित्यादयः सप्त

हिमवान्निषधो विंध्यो माल्यवान्पारियात्रिकः ॥
गंधमादनमन्ये च हेमकूटादयो नगाः ॥ ३ ॥
पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत् ॥
कूटोऽस्त्री शिखरं शृंगं प्रपातस्त्वतटो भृगुः ॥ ४ ॥
कटकोऽस्त्री नितंबोऽद्रेः स्नुः प्रस्थः सानुरस्त्रियाम् ॥
उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः ॥ ५ ॥
दरी तु कंदरो वा स्त्री देवखातबिले गुहा ॥

पर्वतविशेषाः । आदिना मलयचित्रकूटमंदरादयः । रजताद्रिस्तु कैलास इंद्रकीलस्तु मंदरः । अपि किष्किधकिष्किंध्यौ वानराणां गिरौ द्वयमित्यपि ज्ञेयाः ॥ १ ॥ एकैकम् । पारियात्रिकः । ठक् । “पारियात्रक इत्यपि पाठः । गंधमादन इति पुंलिंगोऽप्यन्यत्र । स्याद्गंधमादनो भृंगे गंधके वानरांतरे । स्त्री सुराधां नगे न स्त्रीति मेदिनी” ॥ ३ ॥ पाषाणः प्रस्तरः ग्रावा उपलः अश्मा शिला दृषत् सप्त पाषाणस्य । शिलादृषदौ स्त्रियाम् । कूटः शिखरं शृंगं त्रयमपि पुन्नपुंसकलिंगं पर्वताग्रस्य । “अस्त्रीति पूर्वोत्तराभ्यां संबध्यते । शिखरवाची शृंगशब्दः क्लीब एव दृश्यते ।” प्रपातः अतटः भृगुः त्रयं पर्वतात्पतनस्थानस्य । प्रपतत्यस्मिन्प्रपातः । न विद्यते तटोऽत्रेत्यतटः । “प्रपातस्तु तटो भृगुरित्यपि पाठः । तत्र प्रपत्यते यतस्तटात् स तटो भृगुरिति” ॥ ४ ॥ अद्रेर्नितंबो मध्यभागः कटक इत्युच्यते एकम् । स्नुः प्रस्थः सानुः त्रीणि पुन्नपुंसकलिंगानि समभूभागे पर्वतैकदेशे । तत्र स्नुः पुमानेवेति सर्वधरः । स्नौति प्रस्रवत्यंभः स्नुः । प्रतिष्ठंतेऽस्मिन्प्रस्थः । सनोति ददाति सुखं सानुः । “सानुरस्त्रियौ इत्यपि पाठांतरम् ।” उत्सः प्रस्रवणं द्वे यत्र पानीयं निपत्य बहुलीभवति तस्य स्थानस्य । प्रस्रवत्यस्मिन्प्रस्रवणम् । वारिप्रवाहः निर्झरः झरः “झृषो दैवादिकात् षित्वादङि झरा । अच इः झरिः । ङीषि झरी च” त्रीणि झरा इति ख्यातस्य । पंचापि पर्याया इत्यन्ये ॥ ५ ॥ दरी कंदरः द्वे पर्वतस्य गृहाकारकृत्रिमविवरस्य । पक्षे कंदरा । गुहा गह्वरं द्वे देवखाते अकृत्रिमे बिले बिलविषये । केचिद्देवखातादि पर्यायचतुष्टयमाहुः । यत्कात्यः । देवखाते बिलं गुहेति । गह्वरं बिलदंभयोरिति च । केचित्तु

गह्वरं गंडशैलास्तु च्युताः स्थूलोपला गिरेः ॥ ६ ॥
("दंतकास्तु बहिस्तिर्यक्प्रदेशान्निर्गता गिरेः ॥")(१)
खनिः स्त्रियामाकरः स्यात्पादाः प्रत्यंतपर्वताः ॥
उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका ॥ ७ ॥
धातुर्मनःशिलाद्यद्रेर्गैरिकं तु विशेषतः ॥
निकुंजकुंजौ वा क्लीबे लतादिपिहितोदरे ॥ ८ ॥
इति शैलवर्गः ॥ ३ ॥

---

अटव्यरण्यं विपिनं गहनं काननं वनम् ॥
महारण्यमरण्यानी गृहारामास्तु निष्कुटाः ॥ १ ॥

सूक्ष्मस्थूलभेदेन द्वाभ्यां द्वाभ्यां भेदमाहुः । गिरेः सकशाच्च्युताः पतिता ये स्थूलपाषाणास्ते गंडशैला इत्युच्यंते । "गिरेस्तिर्यक्प्रदेशाद्बहिर्निर्गताः शूलाकारपाषाणास्ते दंतका इत्येकम्" ॥ ६ ॥ खनिः "खानी खानिः । खनिरेव मता खानिरिति द्विरूपकोशः ।" आकरः द्वे रत्नाद्युत्पत्तिस्थानस्य खाण इति ख्यातस्य । पादाः प्रत्यंतपर्वताः द्वे पर्वतसमीपस्थाल्पपर्वतानाम् । अद्रेरधः सन्निहिता भूमिरुपत्यकेत्युच्यते एकम् । अद्रेरूर्ध्वा या भूमिः साऽधित्यका एकम् । उपाधिभ्यां त्यकन्नासन्नारूढयोरिति पाणिनिसूत्रेण सिद्धावेतौ शब्दौ ॥ ७ ॥ अद्रेर्यन्मनःशिलादि स धातुरित्युच्यते । आदिना हरितालस्वर्णताम्रादिग्रहः । "तदुक्तम् । सुवर्णरौप्यताम्राणि हरितालं मनःशिला । गैरिकांजनकासीसलोहवङ्गाः सहिंगुलाः । गंधकोऽभ्रक इत्याद्या धातवो गिरिसंभवा इति ।" गैरिकं विशेषतो धातुः विशेषेण धातुरित्येव प्रसिद्धिरित्यर्थः । एकं मेरू "काव" इति ख्यातस्य । निकुंजः कुंजः द्वे लतादिपिहितोदरे लताद्याच्छादितगर्भे स्थाने । "विकल्पेन द्वे क्लीबे अपि"। आदिना तृणादिग्रहः ॥ ८ ॥ इति शैलवर्गः ॥ ३ ॥ अटवी अरण्यं विपिनं गहनं काननं वनं षट्कमरण्यस्य । तत्राटवी स्त्रियाम् । "कृदिकारादिति ङीष्वा । तेनान्यत्राटविरित्यपि ।" महारण्यं अरण्यानी । हिमारण्ययोर्महत्त्वे एव आनुगाममः ङीष् च । द्वे महतो वनस्य । अरण्यानी स्त्रियाम् । गृहारामाः

---

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

आरामः स्यादुपवनं कृत्रिमं वनमेव यत् ॥
अमात्यगणिकागेहोपवने वृक्षवाटिका ॥ २ ॥
पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम् ॥
स्यादेतदेव प्रमदवनमंतःपुरोचितम् ॥ ३ ॥
वीथ्यालिरावलिः पंक्तिः श्रेणी लेखास्तु राजयः ॥
वन्या वनसमूहे स्यादंकुरोऽभिनवोद्भिदि ॥ ४ ॥
वृक्षो महीरुहः शाखी विटपी पादपस्तरुः ॥
अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः ॥ ५ ॥
वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः ॥

निष्कुटाः द्वे गृहसमीपकृत्रिमवनेषु । "कुटाद्गृहान्निष्क्रांता निष्कुटाः" ॥ १ ॥ यत्कृत्रिमं कृत्या निर्वृत्तं वनं तत्र आरामः उपवनं इति द्वे । वृक्षवाटिकेत्येकम् अमात्यानां वेश्यानां च यद्गृहोपवनं तत्र ॥ २ ॥ यद्राज्ञः साधारणं प्रमदाभिरन्यैर्वा सह क्रीडाद्यर्थं वनं तत्र आक्रीडः उद्यानमिति द्वे । "क्लीबमाक्रीडमुद्यानमित्यमरमालायामाक्रीडस्यापि क्लीबत्वमुक्तम् ।" अत उद्यानं अंतःपुरोचितं राज्ञीनामेव क्रीडायामुचितं चेत्प्रमदवनं स्यात् । ङ्यापोः संज्ञाछंदसोरिति ह्रस्वः । एकम् ॥ ३ ॥ वीथी "ङीषो विकल्पादन्यत्र वीथिरित्यपि ।" आलिः आवलिः पंक्तिः श्रेणी पंचकं पंक्तेः । "आल्यादित्रीणि ङीषि दीर्घांतान्यपि । श्रेणी ह्रस्वांतोऽपि ।" लेखाः "रेखाः" राजयः द्वे लेखानाम् । "सांतरा पंक्तिः । निरंतरा लेखा । यथा विप्रपंक्तिः भस्मलेखा ।" वनानां समूहे वन्येत्येकम् । अभिनवोद्भिदि नूतनप्ररोहे अंकुर इत्येकम् । "अंकूरः । अंकूरश्चांकुर प्रोक्त इति हलायुधः" ॥ ४ ॥ वृक्षः महीरुहः शाखी विटपी पादपः तरुः अनोकहः कुटः शालः "सालः । सालः सर्जतरौ वृक्षमात्रप्राकारयोरपीति । सालः पादपमात्रे स्यात्प्राकार इति मेदिनीविश्वकोशौ" । पलाशी द्रुः द्रुमः अगमः त्रयोदश वृक्षस्य ॥ ५ ॥ पुष्पाज्जातैः फलैरुपलक्षितो वृक्षो वानस्पत्यः । एकं आम्रादेः । अपुष्पात्पुष्पं विना जातैः फलैरुपलक्षितो वृक्षो वनस्पतिः एकं पनसोदुंबरादेः । द्रुममात्रेऽपि वनस्पतिः । वनस्पतिर्ना द्रुमात्रे विना पुष्पं फलिद्रुम इति मेदिनीकोशात् ।" फलपाक एवांतो यासां ताः ओषध्यः स्युः । एकं व्रीहियवादेः । "ओषधिः फलपाकांता स्यादिति वा पाठः । ङीषि ओषधी ।" अवंध्यः

ओषध्यः फलपाकांताः स्युरवंध्यः फलेग्रहिः ॥ ६ ॥
वंध्योऽफलोऽवकेशी च फलवान्फलिनः फली ॥
प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः ॥ ७ ॥
फुल्लश्चैते विकसिते स्युरवंध्यादयस्त्रिषु ॥
स्थाणुर्वा ना ध्रुवः शंकुर्ह्रस्वशाखाशिफः क्षुपः ॥ ८ ॥
अप्रकाण्डे स्तंबगुल्मौ वल्ली तु व्रततिर्लता ॥
लता प्रतानिनी वीरुद्गुल्मिन्युलप इत्यपि ॥ ९ ॥
नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः ॥

"अबंध्यः" फलेग्रहिः फलानि गृह्णातीति फलेग्रहिः । फलेग्रहिरात्मंभरिश्चेति सूत्रेणोपपदस्यैत्वं ग्रहेरिन्प्रत्ययश्च निपात्यते । द्वे यथाकालं फलधरस्य ॥ ६ ॥ वंध्यः । "बंध्यः । बंधे साधुः यत्" अफलः अवकेशी त्रयं ऋतावपि फलरहितस्य । फलवान् फलिनः फली त्रीणि सफलस्य । फलिनोऽदंतः । प्रफुल्लः उत्फुल्लः संफुल्लः व्याकोशः "मूर्द्धन्यांतो वा" विकचः स्फुटः ॥ ७ ॥ फुल्लः एतेऽष्टौ विकसिते पुष्पिते स्युः । अवंध्यादयः अवंध्योऽफल इत्यादयो विकसितांताः त्रिषु त्रिलिंग्यां स्युः । स्थाणुः ध्रुवः शंकुः त्रीणि छिन्नविटपस्य प्रकाण्डे वा ना स्थाणुशब्दो विकल्पेन पुंसीत्यर्थः । "रूपभेदात्क्लीबत्वम् । स्थाणुरस्त्रीति वा पाठः । स्थाणुः कीले हरे पुमान् । अस्त्री ध्रुव इति मेदिनी ।" शाखा प्रसिद्धा । शिफा वृक्षमूलम् । ह्रस्वे शाखाशिफे यस्य स क्षुप इत्युच्यते एकम् ॥ ८ ॥ न विद्यते प्रकाण्डो यस्य तस्मिन् स्तंबः गुल्मः इति द्वयम् । वल्ली "सर्वधातुभ्य इन् । वल्लिः वेल्लिः । वल्ली तु वेल्लीः सरण इति वाचस्पतिः" । व्रततिः "प्रततिः व्रतती । प्रततिर्व्रततिस्तथेति हलायुधः ।" लता त्रयं लतायाः । वीरुत् गुल्मिनी उलपः इति त्रयं या प्रतानिनी शाखादिभिर्विस्तृता लता तत्रेत्यर्थः । तत्र वीरुच्छब्दो धांतः स्त्रियाम् ॥ ९ ॥ नगाद्यारोहो वृक्षादीनामुच्चत्वं तत्र उच्छ्रायः उत्सेधः उच्छ्रयः इति त्रयम् । "आरोहो दैर्घ्येऽपि । आरोहो दैर्घ्य उच्छ्राये स्त्रीकट्यां मानभिद्यपि । आरोहणे गजारोह इति हैमः । नगाद्यारोह इत्यादिना गिरिदेवालयादिग्रहः । उत्सेधमित्यपि । उत्सेधस्तूच्छ्रये न स्त्री क्लीबं संहननेऽपि चेति मेदिनी ।" प्रकाण्डः

अस्त्री प्रकाण्डः स्कंधः स्यान्मूलाच्छाखावधिस्तरोः॥१०॥
समे शाखालते स्कंधशाखाशाले शिफाजटे ॥
शाखाशिफाऽवरोहः स्यान्मूलाच्चाग्रं गता लता ॥ ११ ॥
शिरोऽग्रं शिखरं वा ना मूलं बुध्नोंऽघ्रिनामकः ॥
सारो मज्जा नरि त्वक् स्त्री वल्कं वल्कलमस्त्रियाम् ॥१२॥
काष्ठं दार्विंधनं त्वेध इध्ममेधः समित्स्त्रियाम् ॥
निष्कुहः कोटरं वा ना वल्लरिर्मंजरिः स्त्रियौ ॥ १३ ॥

स्कंधः इति द्वे तरोर्मूलमारभ्य शाखापर्यंतो यो भागस्तत्र । मूलाच्छाखावधे-स्तरोरित्यपि पाठः । "तरोर्मूलस्कंधयोरंतरं प्रकाण्डः" ॥ १० ॥ शाखा लता द्वे शाखायाः । स्कंधशाखा शाला द्वे प्रधानशाखायाः । स्कंधात्प्रथमोत्पन्न-शाखाया इत्यर्थः । शिफा जटा द्वे तरुमूलस्य "पाळ इति प्रसिद्धस्य ।" शाखायाः शिफा मूलं अवरोह इत्युच्यते एकं "पारोगा पारंबी इति प्रसि-द्धस्य ।" मूलाद्वृक्षमूलमारभ्याग्रपर्यंतं गता लता गुडूच्यादिरप्यवरोह इत्यु-च्यते एकम् । "मूलादूर्ध्वं गता शिफा लता स्यादित्यपि" ॥ ११ ॥ शिर-सोऽग्रं शिरोऽग्रं तत् शिखरमित्युच्यते । शिरआदयस्त्रयोऽपि पर्याया इति केचित् । शिखरं वा ना पक्षे पुंसीत्यर्थः । मूलं बुध्नः ( ब्रध्न इत्यपि ) अंघ्रि-नामकः पादमूलपर्यायसंज्ञकः त्रीणि वृक्षादेर्मूलस्य । सारः मज्जा द्वयं वृक्षादेः स्थिरांशे "गाभा, नार इति ख्याते ।" तत्र मज्जा नांतः । नरि पुंसि । क्वचिट्टाबंतोऽपि दृश्यते । "सारो मज्जा समौ त्वक् स्त्रीति पाठः । समौ समानलिंगौ ।" त्वक् वल्कं वल्कलं त्रयं त्वचः । तत्र वल्कादिद्वयं क्लीबपुंसोः ॥ १२ ॥ काष्ठं दारु । "दारुरित्यन्यत्र । पुन्नपुंसकयोर्दारुरित्युक्तेः" द्वे काष्ठमात्रस्य । इंधनं एधः इध्मं एधः समित् पंचकं शुष्कस्य तृणकाष्ठादेः । "आद्यत्रयं अग्निसंदीपनतृणकाष्ठादेः जळण इति प्रसिद्धस्य । अंत्यद्वयं यागादौ हूयमानसमिधादेरिति मतम् ।" तत्र आद्य एधःशब्दः सांतः क्लीबे । अन्य-स्त्वदंतः पुंसि । समिद्धांतः । निष्कुहः कोटरं द्वे वृक्षगतविवरस्य । कोटरं वा ना पक्षे पुमान् । वल्लरिः मंजरिः कृदिकारादक्तिन इति गणसूत्रात् वल्लरी मंजरी इत्यपि । द्वे तुलस्यादेरभिनवोद्भिदि "केंसर इति ख्यातस्य" ॥ १३ ॥ पत्रं पलाशं छदनं दलं पर्णं छदः षट्कं पत्रस्य । तत्र छदोऽदंतः पुंसि । "पर्णेऽस्त्रिपत्रे

पत्रं पलाशं छदनं दलं पर्णं छदः पुमान् ॥
पल्लवोऽस्त्री किसलयं विस्तारो विटपोऽस्त्रियाम् ॥१४॥
वृक्षादीनां फलं सस्यं वृंतं प्रसवबंधनम् ॥
आमे फले शलाटुः स्याच्छुष्के वानमुभे त्रिषु ॥ १५ ॥
क्षारको जालकं क्लीबे कलिका कोरकः पुमान् ॥
स्याद्गुच्छकस्तु स्तबकः कुड्मलो मुकुलोऽस्त्रियाम्॥१६॥
स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं समम् ॥

पर्णं तु पत्रे इति हैमः" । पल्लवः किसलयं "किशलयमपि" द्वे पत्रादियुक्ते शाखायाः पर्वणि । तत्र किसलयं पुंसि क्लीबे च । "पुंसि क्लीबे च पल्लव इति तु व्याडिः ।" विस्तारः शाखापल्लवसमुदायलक्षण आभोगः विटप उच्यते एकम् । "विटपो न स्त्रियां स्तंबशाखाविस्तारपल्लव इति मेदिनीकोशात् । शाखायां पल्लवे स्तंबे विस्तारे विटपोऽस्त्रियामिति रभसाच्च । पल्लवादिचतुष्टयमेकार्थकं वा । अत्र यदुक्तं कात्येन । स्कंधादूर्ध्वं तरोः शाखा कटको विटपो मत इति" ॥ १४ ॥ वृक्षादीनामिति पूर्वेणापि संबध्यते । वृक्षादीनां फलं सस्यमित्युच्यते । "तालव्याद्यपि" एकम् । प्रसवः पुष्पादिः बध्यते येन तत् वृंतमुच्यते एकम् । देंठ, "डेंख" इति ख्यातस्य । बंधनं पुष्पयोर्वृतमाह कात्यः । आमे अपक्के फले शलाटुरित्येकम् । शुष्के फले वानमित्येकम् । उभे शलाटुर्वानं च त्रिषु त्रिलिंग्याम् ॥ १५ ॥ क्षारकः जालकं द्वे नूतनकलिकायाः । तद्वृंतस्येत्येके । तत्र जालकं क्लीबे एव । कलिका कोरकः द्वे अस्फुटितपुष्पस्य कळी इति ख्यातस्य । गुच्छकः स्तबकः द्वे कलिकादिभिराकीर्णस्य पल्लवग्रंथेः । "विकासोन्मुखकलिकाया इति केचित् ।" स्तबके हारभेदे च गुत्सः स्तंबेऽपि कीर्तित इति दंत्यांते रुद्रः । पुष्पादिस्तबके गुच्छ इति तालव्यांते रंतिदेवः । कुड्मलः मुकुलः द्वे ईषद्विकसितकलिकायाम् ॥ १६ ॥ सुमनसः पुष्पं प्रसूनं कुसुमं समम् । "सर्वसाधुसमानेषु समं स्यादाभिधेयवदिति मेदिनी ।" चत्वारि पुष्पस्य । "कुसुमं सुममित्यपि पाठः । तत्र पुष्पस्य पंच नामानि ।" भूम्नि स्त्रियां सुमनस इति रत्नकोशः । सुमनाः पुष्पमालत्योः स्त्रियामिति मेदिनीकोशः । मकरंदः पुष्परसः द्वे पुष्पमधुनि । परागः सुमनोरजः द्वे पुष्परेणोः । परागः कौसुमे रेणौ

मकरंदः पुष्परसः परागः सुमनोरजः ॥ १७ ॥
द्विहीनं प्रसवे सर्वं हरीतक्यादयः स्त्रियाम् ॥
आश्वत्थवैणवप्लाक्षनैयग्रोधैंगुदं फले ॥ १८ ॥
बार्हतं च फले जंब्वा जंबूः स्त्री जंबु जांबवम् ॥
पुष्पे जातीप्रभृतयः स्वलिंगा व्रीहयः फले ॥ १९ ॥
विदार्याद्यास्तु मूलेऽपि पुष्पे क्लीबेऽपि पाटला ॥
बोधिद्रुमश्चलदलः पिप्पलः कुंजराशनः ॥ २० ॥
अश्वत्थेऽथ कपित्थे स्युर्दधित्थग्राहिमन्मथाः ॥

धूलिम्लानीययोरपि ॥ गिरिप्रभेदे विख्यातावुपरागे च चंदने इति कोशांतरम् ॥ १७ ॥ सर्वं वक्ष्यमाणं वृक्षलतौषधिजातीयं स्त्रीपुंलिंगमपि । अश्वत्थकपित्थादीनामभिधानं प्रसवे पुष्पे फले मूले च वर्तमानं तद्विहीनं ज्ञेयम् । द्वाभ्यां स्त्रीपुंसाभ्यां हीनं नपुंसकलिंगमित्यर्थः । यथा चंपकं आम्रं सूरणमित्यादि । तत्र विशेषमाह । हरीतक्याः फलं हरीतकी । आदिना कोशातकी कर्कटी द्राक्षेत्यादि । अश्वत्थस्य फलं आश्वत्थम् । वेणोः फलं वैणवम् । प्लक्षस्य फलं प्लाक्षम् । न्यग्रोधस्य फलं नैयग्रोधम् । इंगुद्याः फलं ऐंगुदम् । बृहत्याः फलं बार्हतम् । एकैकम् । प्लक्षादिभ्योऽणिति पुनरण्विधानात् । अश्वत्थादिशब्देभ्यः फले लुङ् नास्तीत्यर्थः ॥१८॥ जंबूः जंबु जांबवं त्रीणि जंब्वाः फले । जातीयूथिकामल्लिकेत्यादयः पुष्पे वर्तमानाः स्वलिंगा एव स्युर्न तु क्लीबे । तथा जात्याः पुष्पं जाती स्त्री । व्रीहयः फले स्वलिंगाः । यथा व्रीहीणां फलानि व्रीहयः पुंसि । एवं माषमुद्गयवादयोऽपि ज्ञेयाः । यथा माषाणां फलं माषाः ॥१९॥ विदारी बृहत्यंशुमतीत्याद्या मूलेऽपि स्वलिंगाः । यथा विदार्या मूलं विदारी । अपिशब्दात्पुष्पेऽपि स्वलिंगा । पाटला पुष्पे वर्तमाना क्लीबे । यथा पाटलायाः पुष्पं पाटलम् । अपिशब्दात्स्वलिंगा । "पाटलः कुसुमे वर्णेऽप्याशुव्रीहिश्च पाटल इति शाश्वतात्पुंलिंगोऽपि ।" बोधिद्रुमः चलदलः पिप्पलः कुंजराशनः । कुंजरेण अश्यते । अश भोजने । कर्मणि ल्युट् ॥२०॥ अश्वत्थः पंच पिप्पलवृक्षस्य । कपित्थः "अमरमालायां पवर्गतृतीयमध्योऽपि ।" दधित्थः ग्राही मन्मथः दधिफलः पुष्पफलः दंतशठः सप्तकं

तस्मिन्दधिफलः पुष्पफलदंतशठावपि ॥ २१ ॥
उदुंबरो जंतुफलो यज्ञांगो हेमदुग्धकः ॥
कोविदारे चमरिकः कुद्दालो युगपत्रकः ॥ २२ ॥
सप्तपर्णो विशालत्वक् शारदो विषमच्छदः ॥
आरग्वधे राजवृक्षशंम्याकचतुरंगुलाः ॥ २३ ॥
आरेवतव्याधिघातकृतमालसुवर्णकाः ॥
स्युर्जंबीरे दंतशठजंभजंभीरजंभलाः ॥ २४ ॥
वरुणो वरणः सेतुस्तिक्तशाखः कुमारकः ॥
पुन्नागे पुरुषस्तुंगः केसरो देववल्लभः ॥ २५ ॥

कपित्थस्य "कवठ इति प्रसिद्धस्य" ॥ २१ ॥ उदुंबरः "मेदिन्यां टवर्गतृतीयमध्यः । त्रिकाण्डशेषेऽप्येवमेव" । जंतुफलः यज्ञांगः हेमदुग्धकः चत्वारि उदुंबरस्य उंबर इति ख्यातस्य । उदुंबरे जंतुफल इति सप्तम्यंतपाठोऽपि । कोविदारः चमरिकः कुद्दालः युगपत्रकः चत्वारि कांचन इति ख्यातस्य ॥ २२ ॥ सप्तपर्णः काण्डे काण्डे सप्त पर्णानि अस्य । विशालत्वक् शारदः "रूयंतोऽपि । शारदी तोयपिप्पल्यां सप्तपर्णे चेति दंसांतेषु रुद्रः । शारदोऽब्दे स्त्रियां तोयपिप्पलीसप्तपर्णयोरिति मेदिनी ।" विषमच्छदः चत्वारि सांतवण इति ख्यातस्य । दुरधिगमवस्तुनः प्राकृतसंज्ञयापि व्याख्याने न दोषः । यदुक्तम् । प्रयोजनार्था वचनप्रवृत्तिर्यतस्ततः प्राकृतमिस्रदोष इति । किंच । रसवीर्यविपाकेभ्यो मूलात्पुष्पात्फलाद्दलात् । आकारादेशकालादेर्भेषज्यर्थमुन्नयेदिति । आरग्वधः "अरग्वधः अर्ग्वधः । अरग्वधोऽथ शंपाकः कृतमालस्तथाऽर्ग्वध इति रत्नकोशः ।" राजवृक्षः वृक्षाणां राजा राजवृक्षः राजदंतादिवत् परनिपातः । शम्याकः "संपाकः शंपाकश्च । संपाकस्तर्कके धृष्टे त्रिषु ना चतुरंगुल इति मेदिनी ।" चतुरंगुलः ॥ २३ ॥ आरेवतः व्याधिघातः कृतमालः सुवर्णकः "सुपर्णकः" अष्टौ बाहवा इति ख्यातस्य । जंबीरः "जंबिरः" दंतशठः जंभः जंभीरः जंभलः "जंभरः" पंचकं जांबेर "लघु इडनिंबू" इति ख्यातस्य ॥ २४ ॥ वरुणः वरणः सेतुः तिक्तशाखः कुमारकः पंच वायवर्णा इति ख्यातस्य । पुन्नागः पुरुषः तुंगः केसरः "केशरः"

पारिभद्रे निंबतरुर्मंदारः पारिजातकः ॥
तिनिशे स्यंदनो नेमी रथद्रुरतिमुक्तकः ॥ २६ ॥
वंजुलश्चित्रकृच्चाथ द्वौ पीतनकपीतनौ ॥
आम्रातके मधूके तु गुडपुष्पमधुद्रुमौ ॥ २७ ॥
वानप्रस्थमधुष्ठीलौ जलजेऽत्र मधूलकः ॥
पीलौ गुडफलः स्रंसी तस्मिंस्तु गिरिसंभवे ॥ २८ ॥
अक्षोटकंदरालौ द्वावंकोटे तु निकोचकः ॥
पलाशे किंशुकः पर्णो वातपोथोऽथ वेतसे ॥ २९ ॥
रथाभ्रपुष्पविदुरशीतवानीरवंजुलाः ॥

देववल्लभः पंचकं उंडी "उंडणी, उंडली" इति ख्यातस्य ॥ २५ ॥ पारिभद्रः निंबतरुः मंदारः पारिजातकः चत्वारि निंबतरोः "कडूनिंब इति ख्यातस्य"। तिनिशः स्यंदनः नेमी "नेमिः। पुंलिंगस्तिनिशे नेमिश्चक्रप्रांते स्त्रियामपीति रुद्रः।" रथद्रुः अतिमुक्तकः ॥ २६ ॥ वंजुलः चित्रकृत् सप्त तिवस इति ख्यातस्य। अयं खदिरसदृशः कंटकरहितः। पीतनः कपीतनः आम्रातकः "अम्रातकः। कपिचूतोऽम्रातकोऽस्य फले पशुहरीतकीति त्रिकाण्डशेषः।" अयं अंबाडा इति ख्यातस्य। मधूकः "मधुकः मधूलः मधुलः" गुडपुष्पः मधुद्रुमः ॥ २७ ॥ वानप्रस्थः मधुष्ठीलः पंचकं मोहा इति ख्याते। जलजेऽत्र मधूके मधूलक इत्येकम्। अयं पूर्वस्माद्दीर्घपत्रः। "गिरिजेऽत्र मधूलक इत्यपि पाठः। गौरशाको मधूकोऽन्यो गिरिजः सोऽल्पपत्रक इति माधवः। मधूकोऽन्यो मधूलस्तु जलजो दीर्घपत्रक इति स्वामी।" पीलुः गुडफलः स्रंसी त्रीणि पीलुवृक्षस्य "अक्रोड इति प्रसिद्धस्य।" अयं गुर्जरदेशे प्रसिद्धः। गिरिसंभवे तस्मिन्पीलौ ॥ २८ ॥ अक्षोटः "अक्षोडः आक्षोडः आक्षोटः आखोटः" कंदरालः "कर्परालः" इति द्वयं पर्वतपीलोः "डोंगरी आक्रोड इति ख्यातस्य।" अंकोटः "अंखोटः अंकोलः" निकोचकः "निकोटकः" द्वे अंकोटस्य "पिस्ते इति ख्यातस्य।" पलाशः किंशुकः। किंचित् शुक इव शुकतुंडाभपुष्पत्वात्। पर्णः वातपोथः चत्वारि पलाशस्य। वेतसः ॥ २९ ॥ रथः अभ्रपुष्पः विदुरः शीतः "शीतम्। शीतं तुषारवानीरबहु-

द्वौ परिव्याधविदुलौ नादेयी चांबुवेतसे ॥ ३० ॥
सोभांजने शिग्रुतीक्ष्णगंधकाक्षीवमोचकाः ॥
रक्तोऽसौ मधुशिग्रुः स्यादरिष्टः फेनिलः समौ ॥३१॥
बिल्वे शांडिल्यशैलूषौ मालूरश्रीफलावपि ॥
प्लक्षो जटी पर्कटी स्यान्न्यग्रोधो बहुपाद्वटः ॥ ३२ ॥
गालवः शाबरो लोध्रस्तिरीटस्तिल्वमार्जनौ ॥
आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः ॥ ३३ ॥
कुंभोलूखलकं क्लीबे कौशिको गुग्गुलुः पुरः ॥

वारद्रुमेषु चैत्यजयात्"। वानीरः वंजुलः सप्तकं वेतसस्य "वेत इति ख्यातस्य।" परिव्याधः विदुलः नादेयी अंबुवेतसः चत्वारि जलवेतसस्य। नादेयी स्त्री ॥ ३० ॥ सोभांजनः "सौभांजनः शोभांजनः शौभांजनः" शिग्रुः तीक्ष्णगंधकः अक्षीवः "आक्षीवः" मोचकः पंचकं शेगूल "शेवगा, शेगट" इति ख्यातस्य। असौ सोभांजनो रक्तो रक्तपुष्पश्चेन्मधुशिग्रुरित्युच्यते एकम्। अरिष्टः फेनिलः द्वे रिठा इति ख्यातस्य। "अन्यत्र रिष्टमित्यपि। रिष्टं क्षेम शुभाभावे पुंसि खड्गे च फेनिल इति मेदिनी" ॥ ३१ ॥ बिल्वः शांडिल्यः शैलूषः मालूरः श्रीफलः पंचकं बिल्वस्य। प्लक्षः जटी "जटिः" पर्कटी "पर्कटिः" त्रयं पिंपरी इति ख्यातस्य। अयं गोमांतकभाषया केळा इति ख्यातः। तत्र जटीपर्कटिनाविन्नंतौ। पर्कटी ङीषंतेति कश्चित्। न्यग्रोधः बहुपात् वटः त्रयं वटस्य ॥ ३२ ॥ गालवः शाबरः "साबरः" लोध्रः तिरीटः तिल्वः मार्जनः षट्कं लोध्रस्य। "तत्राद्यौ श्वेतलोध्रे शेषा रक्तलोध्रे इत्येके।" आम्रः चूतः रसालः त्रयं आम्रस्य। असौ आम्रोऽतिसौरभश्चेत्सहकार इत्येकम् ॥ ३३ ॥ कुंभः उलूखलकम्। कंभेति संघातविगृहीतम्। कुंभमिति क्लीबमपि। कार्मुके वारनार्यां च कुंभं क्लीबं तु गुग्गुलाविति रभसः। कुंभं त्रिवृत्तिगुग्गुलाविति विश्वप्रकाशः। उदूखलमित्यपि। उदूखलं गुग्गुलौ स्यादुलूखलेऽपि न द्वयोरिति मेदिनी। उलूखले गुग्गुलौ च क्लीबमुक्तमुदूखलमिति रुद्रः। अत्र पक्षे कुंभं चोदूखलमिति पाठः कर्त्तव्यः। कुंभोलूः खलकम्। कुंभोलूखलकम्। कुंभोलूखलाकाराद्वृक्षकोशान्निर्यातम्। कुंभोलूखलकं कुंभं कुंभोलूखलकं वरमिति वाचस्पतिः। कौशिकः गुग्गुलुः "गुग्गुलः" पुरः पंच गुग्गुलवृक्षस्य। पुरोऽदंतः। शेलुः "सेलुः"

शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः ॥ ३४ ॥
राजादनं प्रियालः स्यात्सन्नकद्रुर्धनुःपटः ॥
गंभारी सर्वतोभद्रा काश्मरी मधुपर्णिका ॥ ३५ ॥
श्रीपर्णी भद्रपर्णी च काश्मर्यश्चाप्यथ द्वयोः ॥
कर्कंधूर्बदरी कोलिः कोलं कुवलफेनिले ॥ ३६ ॥
सौवीरं बदरं घोंटाऽप्यथ स्यात्स्वादुकंटकः ॥
विकंकतः स्रुवावृक्षो ग्रंथिलो व्याघ्रपादपि ॥ ३७ ॥
ऐरावतो नागरंगो नादेयी भूमिजंबुका ॥
तिंदुकः स्फूर्जकः कालस्कंधश्च शितिसारके ॥ ३८ ॥

श्लेष्मातकः शीतः उद्दालः बहुवारकः पंच शेलट "भोंकरी" इति ख्यातस्य ॥ ३४ ॥ राजादनं "राजातनः राजादनः । राजादनं प्रसरको राजातन इति वाचस्पतिः" ॥ प्रियालः "प्रियालश्च प्रियालक इति माधवः ।" सन्नकद्रुः धनुःपटः चत्वारि चार इति ख्यातस्य । धनुः पट इति व्यस्तमपि । धनुः प्रियाले ना न स्त्री राशिभेदे शराशन इति मेदिनी । पटः प्रियालवृक्षे ना सुचेले पुन्नपुंसकमिति रभसः । गंभारी "कंभारी" सर्वतोभद्रा काश्मरी मधुपर्णिका ॥ ३५ ॥ श्रीपर्णी भद्रपर्णी काश्मर्यः सप्त शिवणी इति ख्यातस्य । काश्मर्योऽदंतः पुंसि । कर्कंधूः "कर्कंधुः" बदरी कोलिः "कोली केला" त्रीणि बोर इति ख्यातस्य । तत्र कर्कंधूर्द्वयोः स्त्रीपुंसयोः । कोलं कुवलं फेनिलम् ॥ ३६ ॥ सौवीरम् । "याम्ने सौवीर्यम् ।" बदरं घोंटा षट्कं बदरीफलस्य । घोंटाशब्दो बदरीसदृशे वृक्षभेदेऽपि वर्तते । बदरीसदृशाकारो वृक्षः सूक्ष्मफलो भवेत् । अटव्यामेव सा घोंटा गोपघंटेति चोच्यत इति सुभूत्युक्तेः" स्वादुकंटकः विकंकतः "वैकंकतः" स्रुवावृक्षः स्रुवायाः वृक्षः स्रुवा नाम होमपात्रभेदः । ग्रंथिलः व्याघ्रपात् पंच विकंकतस्य "वेहळी इति ख्यातस्य ।" अयं यज्ञियवृक्षभेदः करनाटकभाषया हलुमाणिका इति ख्यातः ॥ ३७ ॥ ऐरावतः नागरंगः नादेयी भूमिजंबुका चत्वारि नागरंगस्य नारिंग इति ख्यातस्य । "अत्र पूर्वद्वयं नागरंग्याः अपरद्वयं भूमिजंब्वा इत्यपि मतम् ।" तिंदुकः "तिंदुकी" स्फूर्जकः कालस्कंधः शितिसारकः चत्वारि तेंदू टेंभुरणी इति ख्यातस्य ॥ ३८ ॥ काकेंदुः

काकेंदुः कुलकः काकतिंदुकः काकपीलुके ॥
गोलीढो झाटलो घंटापाटलिर्मोक्षमुष्ककौ ॥ ३९ ॥
तिलकः क्षुरकः श्रीमान्समौ पिचुलझावुकौ ॥
श्रीपर्णिका कुमुदिका कुंभी कैडर्यकट्फलौ ॥ ४० ॥
क्रमुकः पट्टिकाख्यः स्यात्पट्टी लाक्षाप्रसादनः ॥
तूंदस्तु यूपः क्रमुको ब्रह्मण्यो ब्रह्मदारु च ॥ ४१ ॥
तूलं च नीपप्रियककदंबास्तु हरिप्रियः ॥
वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु ॥ ४२ ॥
गर्दभांडे कंदरालकपीतनसुपार्श्वकाः ॥

कुलकः काकतिंदुकः काकपीलुकः चत्वारि काकतेंदू "काकटेंभुरणी कडुटेंभुरणी इति, कुचला, काजरा" इति ख्यातस्य । गोलीढः झाटलः घंटापाटलिः मोक्षः मुष्ककः पंच घंटापाटलेः "मोरवा इति प्रसिद्धस्य ।" घंटा पाटलिरिति नामद्वयं वा ॥ ३९ ॥ तिलकः क्षुरकः श्रीमान् । श्रीमान् तिलकवृक्षे स्यान्मनोज्ञे धनिके त्रिषु इति कोशांतरम् । त्रयं तिळवा "तिलकपुष्प" इति ख्यातस्य । पिचुलः झावुकः द्वे झावुकस्य । तिलकभेदोऽयम् । "कोबी इति ख्यातेयमिति केचित् ।" श्रीपर्णिका कुमुदिका कुंभी कैडर्यः कट्फलः पंच कुंभल "कुंभ्या इति, कायफल" इति ख्यातस्य । कुंभी स्त्री ॥ ४० ॥ क्रमुकः पट्टिकाख्यः पट्टी लाक्षाप्रसादनः । लाक्षा प्रसीदति अनेन । करणे ल्युट् । लोध्रचूर्णेन लाक्षारंगोऽतितरां रज्यत इत्यनुभवसिद्धम् । चत्वारि लोहितलोध्रस्य । पट्टिका आख्या यस्य सः । पट्टोऽस्यास्तीति पट्टी । इन्नंतः । "ङीषंतो वा ॥" तूदः "नूदः" यूपः क्रमुकः ब्रह्मण्यः ब्रह्मदारु ॥ ४१ ॥ तूलं "तूलोऽपि" षट्कं अश्वत्थाकारे वृक्षभेदे । "पारसा पिंपळ इति ख्यातस्य ।" नीपः प्रियकः कदंबः हरिप्रियः । हलिप्रिय इत्यपि पाठः । हलिनः प्रियः । सुराया अधिवासनात् । चत्वारि कळंब इति ख्यातस्य । वीरवृक्षः अरुष्करः अग्निमुखी भल्लातकी चत्वारि "बिबवा, भिलावा इति ख्यातस्य" ॥ ४२ ॥ गर्दभाण्डः कंदरालः कपीतनः सुपार्श्वकः प्लक्षः पंच गजहंड "लाखी पिंपरी" इति ख्यातस्य । तिंतिडी "तिंतिली । आम्लिका

प्लक्षश्च तिंतिडी चिंचाऽम्लिकाऽथो पीतसारके ॥ ४३ ॥
सर्जकासनबंधूकपुष्पप्रियकजीवकाः ॥
साले तु सर्जकार्श्याश्वकर्णकाः सस्यसंबरः ॥ ४४ ॥
नदीसर्जो वीरतरुरिंद्रद्रुः ककुभोऽर्जुनः ॥
राजादनः फलाध्यक्षः क्षीरिकायामथ द्वयोः ॥ ४५ ॥
इंगुदी तापसतरुर्भूर्जे चर्मिमृदुत्वचौ ॥
पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः ॥ ४६ ॥
पिच्छा तु शाल्मलीवेष्टे रोचनः कूटशाल्मलिः ॥

चाम्लिका चिंचा तिंतिडीका च तिंतिलीति चंद्रः ।" चिंचा आम्लिका "आम्लीका आम्लिका । तिंतिडी त्वाम्लिका चिंचा तिंतिडीका कपिप्रियेति वाचस्पतिः ।" त्रयं चिंचायाः । पीतसारकः ॥ ४३ ॥ सर्जकः असनः "आसनः । पीठेभस्कंधयोः क्लीबमासनं ना तु जीवक इति रुद्ररभसौ ।" बंधूकपुष्पः प्रियकः जीवकः षट्कं असणा इति ख्यातस्य । "तत्र कांटेअसण, पालेअसण इति द्वौ भेदौ ख्यातौ ।" सालः "श्यालः" सर्जः कार्श्यः "कार्ष्यः" अश्वकर्णकः अश्वस्य कर्ण इव पत्रमस्य । सस्यसंबरः "शस्यसंवरः" पंच शालवृक्षस्य सालई इति प्रसिद्धस्य ॥ ४४ ॥ नदीसर्जः वीरतरुः इंद्रद्रुः ककुभः अर्जुनः पंचकं अर्जुनवृक्षस्य । "अर्जुनसादडा इत्यपि वदंति ।" राजादनः "राजादनम् । राजादनं क्षीरिकायां प्रियाले किंशुकेऽपि चेति मेदिनी ।" फलाध्यक्षः क्षीरिका त्रयं खिरणी इति ख्यातस्य ॥ ४५ ॥ इंगुदी तापसतरुः । तापसस्य तरुः । तपस्विन उपयुक्ततरुत्वात् ॥ द्वे इंगुद्याः "हिंगणबेट इति ख्यातायाः ।" द्वयोरित्युक्तत्वात्पुंसि तु इंगुदः ॥ भूर्जः चर्मी मृदुत्वक् त्रीणि भूर्जवृक्षस्य । पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिः "शाल्मली शाल्मलः" पंच सांवरी इति ख्यातस्य । द्वयोः स्त्रीपुंसयोः । "स्थिरमायुर्यस्याः स्थिरायुः । षष्टिवर्षसहस्राणि वने जीवति शाल्मलिरिति वचनात्" ॥ ४६ ॥ शाल्मल्या वेष्टे निर्यासे पिच्छेत्येकम् "सांवरीचा डीक इति ख्यातस्य । क्वाथः कषायो निर्यूषो निर्यासो वेष्टकस्तथेति रभसः ।" रोचनः कूटशाल्मलिः द्वे काळी सांवरी इति ख्यातस्य । चिरिबिल्वः "चिरबिल्वः" नक्तमालः "रक्तमालः" करजः करंजकः चत्वारि

चिरिबिल्वो नक्तमालः करजश्च करंजके ॥ ४७ ॥
प्रकीर्यः पूतिकरंजः पूतिकः कलिमारकः ॥
करंजभेदाः षड्ग्रंथो मर्कट्यंगारवल्लरी ॥ ४८ ॥
रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः ॥
गायत्री बालतनयः खदिरो दंतधावनः ॥ ४९ ॥
अरिमेदो विट्खदिरे कदरः खदिरे सिते ॥
सोमवल्कोऽप्यथ व्याघ्रपुच्छगंधर्वहस्तकौ ॥ ५० ॥
एरंड उरुबूकश्च रुचकश्चित्रकश्च सः ॥
चंचुः पंचांगुलो मंडवर्धमानव्यडंबकाः ॥ ५१ ॥

करंजवृक्षस्य ॥ ४७ ॥ प्रकीर्यः पूतिकरजः "पूतीकरजः पूतीकरंजः । पूतीकरंजः सुमनास्तथा कलहनाशन इति रुद्रः ।" पूतिकः "पूतीकः" कलिमारकः "कलिकारक इत्यपि पाठः ।" चत्वारि कांटेकरंज "घाणेरा करंज" इति ख्यातस्य। षड्ग्रंथः मर्कटी अंगारवल्लरी एते त्रयः करंजभेदाः। "अंगारवर्णपर्णा वल्लरी अंगारवल्लरी" ॥ ४८ ॥ रोही रोहितकः प्लीहशत्रुः दाडिमपुष्पकः चत्वारि रक्तरोहिडा इति ख्यातस्य । गायत्री "वह्निगायत्रिणा तथेति वैद्यकादिमतोऽपि" । बालतनयः खादिरः दंतधावनः चत्वारि खादिरस्य । "गायत्री स्त्रियाम् । गायत्री खदिरे स्त्री स्यादिति रभसः । बालपत्रश्चेति प्राचां पाठः। यदाह । खादिरो रक्तसारश्च गायत्री दंतधावनः। कंटकी बालपत्रश्च जिह्मशल्यः क्षतिः क्षय इति त्रिकाण्डशेषेऽप्येवमेव पाठः ॥ ४९ ॥ अरिमेदः विट्खदिरः द्वे दुर्गंधिखदिरस्य । विट्गंधिः खादिरो विट्खदिरः । सिते शुक्लसारे खदिरे कदरः सोमवल्कः इति द्वयम् । व्याघ्रपुच्छः गंधर्वहस्तकः ॥५०॥ एरंडः उरुबूकः "ऊरुबुकः रुबूकः रुबुकः" रुचकः चित्रकः चंचुः पंचांगुलः मंडः वर्धमानः व्यडंबकः "व्यडंबनोऽपि" एकादश एरंडस्य । मंडयतीति मंडः कश्चिदमंड इति पदमाह । "आमंड इत्यपि । गंधर्वहस्तको मंड आमंडो व्याघ्रपुच्छक इति तारपालः" ॥ ५१ ॥ याऽल्पा स्वल्पाकारा शमी स शमीर इत्येकम् । कुटीशमीशुंडाभ्योर इति सूत्रेण अल्पार्थे शमीशब्दात् रप्रत्ययः । शमी सक्तुफला "सक्तुफली" शिवा त्रयं

अल्पा शमी शमीरः स्याच्छमी सक्तुफला शिवा ॥
पिंडीतको मरुबकः श्वसनः करहाटकः ॥ ५२ ॥
शल्यश्च मदने शक्रपादपः पारिभद्रकः ॥
भद्रदारु द्रुकिलिमं पीतदारु च दारु च ॥ ५३ ॥
पूतिकाष्ठं च सप्त स्युर्देवदारुण्यथ द्वयोः ॥
पाटलिः पाटला मोघा काचस्थाली फलेरुहा ॥ ५४ ॥
कृष्णवृंता कुबेराक्षी श्यामा तु महिलाह्वया ॥
लता गोवंदिनी गुंद्रा प्रियंगुः फलिनी फली ॥ ५५ ॥
विष्वक्सेना गंधफली कारंभा प्रियकश्च सा ॥
मंडूकपर्णपत्रोर्णनटकट्वंगटुंटुकाः ॥ ५६ ॥
स्योनाकशुकनासर्क्षदीर्घवृंतकुटंनटाः ॥

शम्याः । पिंडीतकः मरुबकः श्वसनः करहाटकः ॥ ५२ ॥ शल्यः मदनः षट्कं गोळा इति ख्यातस्य । शक्रपादपः पारिभद्रकः । "पारिभद्रस्तु निंबद्रौ मंदारे देवदारुणि ।" भद्रदारु द्रुकिलिमं पीतदारु दारु ॥ ५३ ॥ पूतिकाष्ठं एतानि सप्त देवदारुणि । पाटलिः "पाटली" पाटला मोघा "अमोघा । अलिप्रिया विशालाग्राऽप्यमोघा पाटलिर्द्वयोरिति वाचस्पतिः ।" काच-स्थाली । "काला स्थाली फलेरुहेत्यपि पाठस्तत्र काला स्थाली इति पदद्वयम् । काला तु कृष्णवृंताख्या मंजिष्ठा नीलिकासु चेति मेदिनी । स्थाली स्यात्पाटलोखयोरिति मेदिनीविश्वप्रकाशौ ।" फलेरुहा ॥ ५४ ॥ कृष्णवृंता कुबेराक्षी सप्त पाटलायाः "पाडळी इति ख्यातायाः ।" तत्र पाटलिर्द्वयोः । श्यामा महिलाह्वया लता गोवंदिनी गुंद्रा प्रियंगुः फलिनी फली ॥ ५५ ॥ विष्वक्सेना गंधफली कारंभा प्रियकः द्वादश प्रियंगुवृक्षे "घाघांटी इति ख्याते ।" महिलायाः स्त्रियाः आह्वय इव आह्वयो यस्याः सा । महिलायाः समग्रनामभिरभिधीयत इत्यर्थः । तत्र प्रियकः पुंसि । शेषं स्त्रियाम् । मंडूकपर्णः पत्रोर्णः नटः कट्वंगः टुंटुकः ॥ ५६ ॥ स्योनाकः "श्योनाकः शोणाकः" शुकनासः ऋक्षः दीर्घवृंतः कुटंनटः शोणकः "शोनकः" अरलुः "अरदुः"

शोणकश्चारलौ तिष्यफला त्वामलकी त्रिषु॥ ५७॥
अमृता च वयस्था च त्रिलिंगस्तु विभीतकः॥
नाक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः॥ ५८॥
अभया त्वव्यथा पथ्या कायस्था पूतनाऽमृता॥
हरीतकी हैमवती चेतकी श्रेयसी शिवा॥ ५९॥
पीतद्रुः सरलः पूतिकाष्ठं चाथ द्रुमोत्पलः॥
कर्णिकारः परिव्याधो लकुचो लिकुचो डहुः॥ ६०॥
पनसः कंटकिफलो निचुलो हिज्जलोऽम्बुजः॥
काकोदुंबरिका फल्गुर्मलयूर्जघनेफला॥ ६१॥

द्वादश दंडिका "दिंडा" इति ख्यातस्य। क्वचिदयं टेंटू इति ख्यातः। तिष्यफला आमलकी॥ ५७॥ अमृता वयस्था चत्वारि आमलक्याः। त्रिष्वित्युक्तेः आमलकः आमलकम्। विभीतकः अक्षः तुषः कर्षफलः भूतावासः कलिद्रुमः षट्कं धाटिंग इति ख्यातस्य। क्वचिदयं बेहडा इति ख्यातः। त्रिलिंगत्वाद्विभीतकी विभीतकमिति च॥ ५८॥ अभया अव्यथा पथ्या कायस्था "अत्र वयस्थेत्यपि पाठः" पूतना। यस्याः सेवनेनाभ्यंतरस्थमलनाशे मनुष्यः पूतो भवति। अमृता हरीतकी हैमवती चेतकी श्रेयसी शिवा एकादश हिरडा इति ख्यातायां हरीतक्याम्॥ ५९॥ पीतद्रुः सरलः पूतिकाष्ठं त्रयं सरलस्य "देवदार इति ख्यातस्य।" द्रुमोत्पलः कर्णिकारः परिव्याधः त्रयं कर्णिकारस्य "पांगारा इति च ख्यातस्य।" लकुचः लिकुचः डहुः "डहू" त्रयं ओंट इति ख्यातस्य। "क्षुद्रपनसस्येत्यपि मतम्"॥ ६०॥ पनसः "फलसः" कंटकिफलः "कंटकफलः" द्वे पनस इति प्रसिद्धस्य। निचुलः हिज्जलः "इज्जलः। निचुलेज्जलहिज्जला इति रभसः।" अंबुजः त्रीणि इजर इति ख्यातस्य जलवेतसभेदस्य। "स्थलवेतसस्येत्यपि क्वचित्। निचूलः स्थलवेतस इति शब्दार्णवात्। समुद्रफलस्येत्यपि मतम्।" काकोदुंबरिका फल्गुः मलयूः "मलपूः मलात्पापात्पुनाति। मलापूरित्यपि। मलधारणे बाहुलकादापूः" जघनेफला चत्वारि काळा उंबर "बोखाडा, खर्वत" इति ख्यातस्य। जघने बुध्ने फलान्यस्या जघनेफला। पूर्वोत्तरसाहचर्यात्फ-

**अरिष्टः सर्वतोभद्रहिंगुनिर्यासमालकाः ॥**
**पिचुमंदश्च निंबोऽथ पिच्छिलाऽगुरुशिंशपा ॥ ६२ ॥**
**कपिला भस्मगर्भा सा शिरीषस्तु कपीतनः ॥**
**भंडिलोऽप्यथ चांपेयश्चंपको हेमपुष्पकः ॥ ६३ ॥**
**एतस्य कलिका गंधफली स्यादथ केसरे ॥**
**बकुलो वंजुलोऽशोके समौ करकदाडिमौ ॥ ६४ ॥**
**चांपेयः केसरो नागकेसरः काचनाह्वयः ॥**
**जया जयंती तर्कारी नादेयी वैजयंतिका ॥ ६५ ॥**

ल्गुरपि स्त्री । मलयूरिति तालव्यांतम् ॥ ६१ ॥ अरिष्टः सर्वतोभद्रः हिंगुनिर्यासः मालकः पिचुमंदः "पिचुमर्दः" निंबः षट्कं निंबस्य । हिंगुगंधिनिर्यासोऽयम् । "हिंगुनिर्यास इंलेष निंबे हिंगुरसेऽपि चेति मेदिनी ।" पिच्छिला अगुरुशिंशपा ॥ ६२ ॥ कपिला भस्मगर्भा चत्वारि शिसवा इति ख्यातस्य । अगुरु इति पृथक्पदं वा । "तत्पुन्नपुंसकम् । अगुरु क्लीबे शिंशपायामिति रुद्रः । अगुरुः स्याच्छिंशपायामिति विश्वप्रकाशः । शिंशपांतं त्रयं शिसवा इति ख्यातस्य । या कपिला कृष्णवर्णपुष्पा सा भस्मगर्भेत्येकमित्यन्ये । काळा शिसवा इति प्रसिद्धस्य ।" शिरीषः कपीतनः भंडिलः "भंडिरः भंडीलः । भंडीलो भंडिरो नेति वाचस्पतिः ।" त्रयं शिरस इति ख्यातस्य । चांपेयः चंपकः हेमपुष्पकः त्रयं कुडचांपा "सोनचांपा" इति ख्यातस्य ॥ ६३ ॥ एतस्य चंपकस्य कलिका गंधफलीत्येकम् । तथा च प्रयोगः । न षट्पदो गंधफलीमजिघ्रदिति । केसरः "तालव्यमध्योऽपि" बकुलः द्वे ओंवळ "बकूळ" इति ख्यातस्य । वंजुलः अशोकः द्वे अशोकस्य । करकः दाडिमः "दाडिंबः दालिमः डालिमः । दाडिमसारपिंडीरस्वाद्वम्लशुकवल्लभा इति रभसः । त्रिकाण्डशेषोऽप्येवम् ।" द्वे दाडिमस्य दाळिंब इति ख्यातस्य ॥ ६४ ॥ चांपेयः केशरः नागकेशरः । "स्वर्णभसर्पाख्यो नागकेशरः षट्पदप्रिय इति रभसः ।" कांचनाह्वयः चत्वारि नागचांपा इति ख्यातस्य । कांचनाह्वयः स्वर्णपर्यायनामक इत्यर्थः । जया जयंती तर्कारी नादेयी वैजयंतिका पंच टाहाकळ "थोर ऐराण" इति ख्याताया: ॥ ६५ ॥ श्रीपर्णी

श्रीपर्णमग्निमंथः स्यात्कणिका गणिकारिका ॥
जयोऽथ कुटजः शक्रो वत्सको गिरिमल्लिका ॥ ६६ ॥
एतस्यैव कलिंगेंद्रयवभद्रयवं फले ॥
कृष्णपाकफलाविग्नसुषेणाः करमर्दके ॥ ६७ ॥
कालस्कंधस्तमालः स्यात्तापिच्छोऽप्यथ सिंदुके ॥
सिंदुवारेंद्रसुरसौ निर्गुंडींद्राणिकेत्यपि ॥ ६८ ॥
वेणी गॅरा गॅरी देवताडो जीमूत इत्यपि ॥
श्रीहस्तिनी तु भूरुंडी तृणशून्यं तु मल्लिका ॥ ६९ ॥

अग्निमंथः कणिका गणिकारिका जयः पंच नरवेल इति ख्यातस्य । द्वयाद्येकस्य पर्याया इत्येके । कुटजः शक्रः वत्सकः गिरिमल्लिका चत्वारि कुडा इति प्रसिद्धस्य ॥ ६६ ॥ एतस्यैव कुटजस्य फले कलिंगं इंद्रयवं भद्रयवमिति त्रीणि । "कलिंगः इंद्रयवः । कलिंगेंद्रयवः पुमानित्यमरमाला । कलिंगा । तत्रैव स्त्रीकांडे पाठात् ।" कृष्णपाकफलः अविग्नः "आविग्नः" सुषेणः करमर्दकः चत्वारि करमर्दकस्य "करवंद" इति ख्यातस्य । कृष्ण पाकं फलमस्य कृष्णपाकफलः ॥ ६७ ॥ कालस्कंधः तमालः तापिच्छः "तापिंजः" त्रयं तमालस्य । सिंदुकः "सिंधुकः" सिंदुवारः इंद्रसुरसः "इंद्रसुरिसः" निर्गुंडी "निर्मुंठी" इंद्राणिका पंच सिंधुवारस्य सिंधुआरी, निगडी, निर्गुंडी इति ख्यातस्य ॥ ६८ ॥ वेणी गरा गरी "खरेत्यपि अमरीत्यपि । देवताडे खरा तीक्ष्णे त्रिषु स्याद्गर्दभे पुमानिति रभसः । खरागरीति समस्तमपि । मूषिकाविषघ्नत्वाद्गरमागिरतीति गरागरीत्येकं पदमपि । तदुक्तम् । जीमूतको देवताडो वृत्तकेशो गरागरीति ।" देवताडः जीमूतः पंच देवतालस्य देवताली "देवडंगरी" इति ख्यातस्य । श्रीहस्तिनी भूरुंडी द्वे हस्तिकर्णाभपत्रस्य शाकभेदस्य सिरिहस्तिनी "थोर कुरडू" इति ख्यातस्य । तृणशून्यं "तृणशूने गुल्मे साधु । तत्र साधुरिति यत् । मल्लिको हंसभेदे स्यात्तृणशून्येऽपि मल्लिकेति रुद्रः ।" मल्लिका ॥ ६९ ॥ भूपदी शीतभीरुः "शतभीरुः । मल्लिका शतभीरुश्च गवाक्षी भद्रमल्लिका । शीतभीरुर्मदायंती भूपदी तृणशून्यकमिति

भूपदी शीतभीरुश्च सैवास्फोटा वनोद्भवा ॥
शेफालिका तु सुवहा निर्गुंडी नीलिका च सा ॥७०॥
सिताऽसौ श्वेतसुरसा भूतवेश्यथ मागधी ॥
गणिका यूथिकाऽम्बष्ठा सा पीता हेमपुष्पिका ॥७१॥
अतिमुक्तः पुंड्रकः स्याद्वासंती माधवी लता ॥
सुमना मालती जातिः सप्तला नवमालिका ॥ ७२ ॥
माघ्यं कुंदं रक्तकस्तु बंधूको बंधुजीवकः ॥

वाचस्पतिः ।" चत्वारि मल्लिकायाः "मोगरी इति ख्यातायाः ।" सैव मल्लिका वनोद्भवा आस्फोटेत्युच्यते । एकं रानमोगरी इति ख्यातस्य । आस्फोतेत्यपि । "आस्फोता गिरिकर्ण्यां च वनमल्ल्यां च योषितीति मेदिनी ।" शेफालिका "शीफालिका" सुवहा निर्गुंडी नीलिका चत्वारि कृष्णपुष्पायाः निर्गुंड्याः "राननिर्गुंडी इति ख्यातायाः । इयं श्वेतपुष्पा" ॥७०॥ असौ निर्गुंडी सिता श्वेतसुरसा भूतवेशी इति चोच्यते । "इयं कातरी निर्गुंडी इति ख्याता ।" मागधी गणिका यूथिका अंबष्ठा चत्वारि यूथिकायाः जुई इति ख्यातायाः । सा यूथिका पीता पीतपुष्पा चेत् हेमपुष्पिका स्यात् एकम् ॥ ७१ ॥ अतिमुक्तः पुंड्रकः । वासंती वसंते पुष्प्यति कालादित्वण् । एवं माधवीत्यपि ज्ञेयम् । माधवी लता पंच कुंदभेदस्य कुसरी इति "कस्तुर-मोगरा, मधुमाधवी इति च ख्यातस्य ।" अतिमुक्तादिद्वयं मल्लिकाभेदस्ये-त्येके । "माधवीलतेत्येकं पदमपि ।" सुमनाः मालती जातिः "जाती । जाती फले च मालत्यामिति मेदिनी । त्रीणि जातेः जाई "चमेली" मोठी श्वेतजाई, पीतवर्ण जाई" इति ख्यातायाः । तत्र सुमनाः सांतः । "टांब-तोऽपि । सुमनायाश्च पत्रेणेति सुश्रुते दर्शनात् ।" सप्तला नवमालिका "नवमल्लिका" द्वे नेवाळी "थोर मोगरा, बटमोगरा बेलमोगरा" इति ख्यातायाः ॥७२॥ माघ्यं कुंदं "कुंदः । कुंदो माघ्येऽस्त्री मुकुंदभ्रमिनिध्यंतरेषु चेति मेदिनी ।" द्वे कुंदस्य । रक्तकः बंधूकः "बंधुक" बंधुजीवकः त्रीणि बंधुकस्य "दुपारी इति ख्यातस्य ।" सहा कुमारी तरणिः । द्युमण्मौ तरणिः पुंसि कुमारी नौकयोः स्त्रियामिति रत्नः । त्रीणि कुमारी इति "कांटेशेंवती, लघुरानशेंवती, शेंवतीगुलाब" इति ख्यातायाः कुमार्याः ।

सहा कुमारी तरणिरम्लानस्तु महासहा ॥ ७३ ॥
तत्र शोणे कुरबकस्तत्र पीते कुरंटकः ॥
नीली झिंटी द्वयोर्बाणा दासी चार्तगलश्च सा ॥ ७४ ॥
सैरेयकस्तु झिंटी स्यात्तस्मिन्कुरबकोऽरुणे ॥
पीता कुरंटको झिंटी तस्मिन्सहचरी द्वयोः ॥ ७५ ॥
ओड्रपुष्पं जपापुष्पं वज्रपुष्पं तिलस्य यत् ॥
प्रतिहासशतप्रासचंडातहयमारकाः ॥ ७६ ॥
करवीरे करीरे तु क्रकरग्रंथिलावुभौ ॥

अम्लानः महासहा द्वे आबोली इति ख्याताया: । "तत्राम्लान इत्येकं कुरंटकमात्रस्य । कांटेशेंवती, थोर रानशेंवती, इत्याख्याताया इति केचित्" ॥ ७३ ॥ तत्राम्लाने शोणे रक्ते कुरवक इत्येकम् । "कुरुवक इत्यपि ।" तत्राम्लाने पीतपर्णे कुरंटक इत्येकम् । "कुरंडक इत्यपि" । नीली नीलवर्णा या झिंटी तत्र बाणा दासी आर्तगलः "अंतर्गलः" इति त्रयम् । द्वयोरित्युक्तेर्बाण इत्यपि । "नीला झिंठी नीलझिंटी चेत्यपि पाठः" ॥ ७४ ॥ सैरेयकः "सैरीयकः । सैरीयकः सहचरः सैरेयश्च सहाचरः ॥ पीतो रक्तोऽथ नीलश्च कुसुमैस्तं विभावयेत् ॥ पीतः कुरंटको ज्ञेयो रक्तः कुरबकः स्मृतः ॥ नील आर्तगलो दासी बाण औदनपाक्यपीत्युक्तम्" । झिंटी द्वयं झिंटीमात्रस्य कोरांटी इति ख्यातस्य । तस्मिन्सैरेयकेऽरुणे रक्तवर्णे कुरबक इत्येकम् । या पीतपुष्पा झिंटी सा कुरंटक इत्युच्यते । तस्मिन्कुरंटके सहचरीत्यपि । द्वयोरित्युक्तेः । सहचर इत्यपि ॥ ७५ ॥ ओड्रपुष्पं जपापुष्पं द्वे जास्वंद इति ख्याते । जवेत्यपि । जवायां तु जपा स्त्रियामिति धर्मदासः । औड्रपुष्पेऽपि वृक्षेऽपि जवाशब्दः प्रकीर्तित इति त्रिकाण्डशेषात् ओड्रपुष्पस्य वृक्षस्यापि च जवेत्यभिधानम् । ओड्रपुष्पं जवापुष्पं वज्रपुष्पमिति पाठांतरम् । यत्तिलस्य पुष्पं तद्वज्रपुष्पसंज्ञकं एकम् । प्रतिहासः "प्रतीहासः" शतप्रासः चंडातः हयमारकः ॥ ७६ ॥ करवीरः पंचकं करवीरस्य कण्हेर इति ख्यातस्य । करीरः क्रकरः ग्रंथिलः त्रीणि करीरस्य कारवी "नेवती" इति ख्यातस्य । उन्मत्तः कितवः धूर्तः धत्तूरः "धुस्तूरः धुस्तुरः धूस्तूरः धुतूरः । धुस्तूरस्तु

उन्मत्तः कितवो धूर्तो धत्तूरः कनकाह्वयः ॥ ७७ ॥
मातुलो मदनश्चास्य फले मातुलपुत्रकः ॥
फलपूरो बीजपूरो रुचको मातुलुंगके ॥ ७८ ॥
समीरणो मरुबकः प्रस्थपुष्पः फणिज्जकः ॥
जंबीरोऽप्यथ पर्णासे कठिंजरकुठेरकौ ॥ ७९ ॥
सितेऽर्जकोऽत्र पाठी तु चित्रको वह्निसंज्ञकः ॥
अर्काह्ववसुकाऽऽस्फोटगणरूपविकीरणाः ॥ ८० ॥
मंदारश्चार्कपर्णोऽत्र शुक्लेऽलर्कप्रतापसौ ॥
शिवमल्ली पाशुपत एकाष्ठीलो बुको वसुः ॥ ८१ ॥

पुंडरीशो धुस्तुरः कनकाह्वय इति शब्दार्णवः । उन्मत्त उन्मादवति धुतूरमुचुकुंदयोरिति विश्वप्रकाशः । मदनः स्मरवसंतद्रुभिद्धूस्तूरसिक्थक इति मेदिनी । " कनकाह्वयः ॥ ७७ ॥ मातुलः मदनः सप्तकं धत्तूरस्य धोतरा इति ख्यातस्य । कनकाह्वयः स्वर्णपर्यायनामकः । अस्य धत्तूरस्य फले मातुलपुत्रक इत्येकम् । फलपूरः बीजपूरः रुचकः मातुलुंगकः चत्वारि मातुलिंगस्य महालुंग इति ख्यातस्य ॥ ७८ ॥ समीरणः मरुबकः प्रस्थपुष्पः फणिज्जकः जंबीरः " जंभीरः " पंच देशांतरे जंबीर इति ख्यातस्य । स्वल्पपर्णस्य पर्णासभेदस्य " श्वेतमरवा इति च ख्यातस्य । " पर्णासः कठिंजरः कुठेरकः त्रीणि पर्णासस्य । " आजवलेति बावरी इति च ख्यातस्य " ॥ ७९ ॥ अत्र पर्णासे सिते काण्डपुष्पाभ्यां श्वेते अर्जक इत्येकम् । पाठी चित्रकः वह्निसंज्ञकः । त्रयं चित्रकस्य चिता इति ख्यातस्य । तत्र पाठी इत्यंतः । वह्निसंज्ञको वह्निपर्यायनामकः । अर्काह्वः वसुकः " वसूकः " आस्फोटः " आस्फोतः । आस्फोतस्तु पुमानर्के पर्णे स्यात्कोविदारक इति मेदिनी । " गणरूपः गणाः बहूनि रूपाणि यस्य । नानात्वात् । विकीरणः " विकिरणः " ॥ ८० ॥ मंदारः अर्कपर्णः सप्तकं अर्कस्य रुई इति ख्यातस्य । अर्काह्वयः सूर्यपर्यायनामकः । अत्रार्के शुक्ले अलर्कः प्रतापसः इति द्वे । शिवमल्ली पाशुपतः एकाष्ठीलः बुकः " बकः । बकस्तु बकपुष्पे स्यात्कह्वे श्रीदे च रक्षसीति विश्वप्रकाशः । " वसुः पंच बुकस्य " रुईमंदार

वंदा वृक्षादनी वृक्षरुहा जीवंतिकेत्यपि ॥
वत्सादनी छिन्नरुहा गुडूची तंत्रिकाऽमृता ॥ ८२ ॥
जीवंतिका सोमवल्ली विशल्या मधुपर्ण्यपि ॥
मूर्वा देवी मधुरसा मोरटा तेजनी स्रवा ॥ ८३ ॥
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ॥
पाठाऽम्बष्ठा विद्धकर्णी स्थापनी श्रेयसी रसा ॥ ८४ ॥
एकाष्ठीला पापचेली प्राचीना वनतिक्तिका ॥
कटुः कटंभराऽशोकरोहिणी कटुरोहिणी ॥ ८५ ॥
मत्स्यपित्ता कृष्णभेदी चक्रांगी शकुलादनी ॥
आत्मगुप्ताऽजहाऽव्यंडा कंडुरा प्रावृषायणी ॥ ८६ ॥

इति ख्यातस्य । थोर बकुळी इति ख्यातस्येत्यपि मतम् " ॥ ८१ ॥ वंदा वृक्षादनी वृक्षरुहा जीवंतिका चत्वारि वृक्षोपरि जातलताविशेषस्य वेदर्ले "वेटागुळी, बांधें" इति ख्यातस्य । बांडगुळ इत्यपि लौकिकभाषायाम् । वत्सादनी छिन्नरुहा गुडूची "गुडुची" तंत्रिका अमृता ॥ ८२ ॥ जीवंतिका सोमवल्ली विशल्या मधुपर्णी नव गुडूच्याः "गुळवेल" इति ख्यातायाः । मूर्वा "मूर्वी" देवी मधुरसा मोरटा तेजनी स्रवा "स्रुवा" ॥ ८३ ॥ मधूलिका मधुश्रेणी गोकर्णी पीलुपर्णी दश मूर्वायाः मूर इति ख्यातायाः । इयं धनुर्गुणोपयोगिनी । इयं मोरवेल इति प्रसिद्धेत्येके । पाठा अंबष्ठा विद्धकर्णी "अविद्धकर्ण्यपि" स्थापनी श्रेयसी रसा ॥ ८४ ॥ एकाष्ठीला पापचेली प्राचीना वनतिक्तिका दश पाठायाः पाडळी "पाहाडमूळ" इति ख्यातायाः । कटुः कटंभरा "कटंबरा" अशोकरोहिणी "व्यस्तमपीदं नाम । अशोका कटुरोहिण्यामशोको वंजुलद्रुम इति रभसः । रोहिणी कटुरोहिण्यामिति रुद्रः ।" कटुरोहिणी ॥ ८५ ॥ मत्स्यपित्ता कृष्णभेदी "कृष्णभेदा" कृष्णभेदा चंडरुहेति निघंटुः । चक्रांगी शकुलादनी अष्टौ केदारकुटकी इति ख्यातायाः । आत्मगुप्ता अजहा "जहा" अव्यंडा कंडुरा "कंडूरा । कपिकच्छूश्च कंडुरेतींदुः ।" प्रावृषायणी ॥ ८६ ॥ ऋष्यप्रोक्ता शूकशिंबिः । "शश्वच्छशांकशिशिराणि च शूकशिंबिरित्यूष्मविवे-

ऋष्यप्रोक्ता शूकशिंबिः कपिकच्छुश्च मर्कटी ॥
चित्रोपचित्रा न्यग्रोधी द्रवंती शंबरी वृषा ॥ ८७ ॥
प्रत्यक्श्रेणी सुतश्रेणी रंडा मूषिकपर्ण्यपि ॥
अपामार्गः शैखरिको धामार्गवमयूरकौ ॥ ८८ ॥
प्रत्यक्पर्णी केशपर्णी किणिही खरमंजरी ॥
हंजिका ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका ॥ ८९ ॥
अंगारवल्ली बालेयशाकबर्बरवर्धकाः ॥
मंजिष्ठा विकसा जिंगी समंगा कालमेषिका ॥ ९० ॥
मंडूकपर्णी मंडीरी भंडी योजनवल्ल्यपि ॥
यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः ॥ ९१ ॥
रोदनी कच्छुराऽनंता समुद्रांता दुरालभा ॥

काङ्क्षितालव्या । शूकशिंबापि । मर्कटी शूकशिंबा चेति वाचस्पतिः ।" कपिकच्छुः "कपिकच्छूः" मर्कटी नव कुवली "कुहिरी" इति ख्यातायाम् । मर्कटतुल्यलोमयुक्तत्वान्मर्कटी । यत्स्पर्शेन कंडूरुत्पद्यतेऽतः कंडूरा । चित्रा उपचित्रा न्यग्रोधी द्रवंती शंबरी वृषा ॥ ८७ ॥ प्रत्यक्श्रेणी सुतश्रेणी रंडा "चंडा । प्रत्यक्श्रेणी वृषा चंडा पुत्रश्रेण्याखुपर्णिकेति निघंटुः ।" मूषिकपर्णी दश मूषिकपर्ण्याः उंदीरकानी इति ख्यातायाः । अपामार्गः शैखरिकः धामार्गवः "अधामार्गवः । अधामार्गवोऽपामार्गः कोशातकी चेति द्व्यर्थे ।" मयूरकः ॥ ८८ ॥ प्रत्यक्पर्णी केशपर्णी "कीशपर्णी । कपिलोमतुल्यानि लोमशानि पर्णान्यस्याः ।" किणिही खरमंजरी अष्टकं अपामार्गस्य आघाडा इति ख्यातस्य । हंजिका "फंजिका" ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका ॥ ८९ ॥ अंगारवल्ली बालेयशाकः बर्बरः वर्धकः नवकं भार्ग्याः "भारंग इति ख्यातायाः ।" मंजिष्ठा विकसा "विकषा" जिंगी समंगा कालमेषिका "कालमेशिका" ॥ ९० ॥ मंडूकपर्णी मंडीरी "मंडिरी । रक्ता मंडिरिका चेतींदुः" भंडी योजनवल्ली नवकं मंजिष्ठायाः । "योजनपर्ण्यपीति पाठः ।" यासः यवासः दुःस्पर्शः धन्वयासः "धनुर्यासः" कुनाशकः ॥ ९१ ॥ रोदनी "चोदनी कच्छुरा अनंता समुद्रांता दुरालभा दशकं

पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यंघ्रिवल्लिका ॥ ९२ ॥
क्रोष्टुविन्ना सिंहपुच्छी कलशी धावनी गुहा ॥
निदिग्धिका स्पृशी व्याघ्री बृहती कंटकारिका ॥ ९३ ॥
प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिकेत्यपि ॥
नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ॥ ९४ ॥
रंजनी श्रीफली तुत्था द्रोणी दोला च नीलिनी ॥
अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका ॥ ९५ ॥
कालमेषी कृष्णफला बाकुची पूतिफल्यपि ॥
कृष्णोपकुल्या वैदेही मागधी चपला कणा ॥ ९६ ॥
उषणा पिप्पली शौंडी कोलाऽथ करिपिप्पली ॥
कपिवल्ली कोलवल्ली श्रेयसी वशिरः पुमान् ॥ ९७ ॥

धन्वयासस्य धमासा इति ख्यातस्य । पृश्निपर्णी पृथक्पर्णी चित्रपर्णी अंघ्रिवल्लिका "अंघ्रिपर्णिकेति पाठः" ॥ ९२ ॥ क्रोष्टुविन्ना सिंहपुच्छी कलशी "कलशिः" धावनी "धावनिः" गुहा नवकं सिंहपुच्छयाः डवला "पिठवण" इति ख्यातायाः । निदिग्धिका स्पृशी व्याघ्री बृहती कंटकारिका ॥ ९३ ॥ प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिका दशकं कंटकारिकायाः रिंगणी इति ख्यातायाः । नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ॥ ९४ ॥ रंजनी श्रीफली तुत्था द्रोणी "तूणी । तूणी नील्यां निषंगे नेति मेदिनी । तूणी तु नील्यां तूणा निषंगक इति विश्वप्रकाशः ।" दोला "मेला । तुत्था श्रीफलिका मेला सारवाही च रंजनीति निघंटुः" नीलिनी एकादश नील्याः । इयं वस्त्रादिरंजनकारिणी कृष्णवर्णा । अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका ॥ ९५ ॥ कालमेषी "कालमेशी" कृष्णफला बाकुची "वागुजी" पूतिफली अष्टकं बाकुंची, बावंची इति ख्यातायाः । "सोमराजीशब्दः ङीषंत इबंतश्च ।" कृष्णा उपकुल्या वैदेही मागधी चपला कणा ॥ ९६ ॥ उषणा "ऊषणा" पिप्पली "पिप्पलिः" शौंडी कोला दशकं पिप्पल्याः । करिपिप्पली कपिवल्ली कोलवल्ली श्रेयसी वशिरः । "दंत्यमध्योऽपि" पंच गजपिप्पल्याः ॥ ९७ ॥ चव्यं "चव्या ।

चव्यं तु चविका काकचिंचीगुंजे तु कृष्णला ॥
पलंकषा त्विक्षुगंधा श्वदंष्ट्रा स्वादुकंटकः ॥ ९८ ॥
गोकंटको गोक्षुरको वनशृंगाट इत्यपि ॥
विश्वा विषा प्रतिविषाऽतिविषोपविषाऽरुणा ॥ ९९ ॥
शृंगी महौषधं चाथ क्षीरावी दुग्धिका समे ॥
शतमूली बहुसुताऽभीरुरिंदीवरी वरी ॥ १०० ॥
ऋष्यप्रोक्ताऽभीरुपत्रीनारायण्यः शतावरी ॥
अहेरुरथ पीतद्रुकालीयकहरिद्रवः ॥ १०१ ॥
दार्वी पचंपचा दारुहरिद्रा पर्जनीत्यपि ॥
वचोग्रगंधा षड्ग्रंथा गोलोमी शतपर्विका ॥ १०२ ॥
शुक्ला हैमवती वैद्यमातृसिंह्यौ तु वाशिका ॥

चव्या कोला च चविकेति हेमचंद्रः ।" चविका "चविक इति पुंलिंगोऽपि।" द्वे चव्यस्य चवक इति ख्यातस्य । "केचित् चव्यादिद्वयं पूर्वान्वयीत्याहुः । अत्र पक्षे तुस्थाने चः पाठ्यः ।" काकचिंची "काकचिंचिः । काकचिंचा । गुंजा तु काकचिंचायां पटहे च कलध्वनाविति मेदिनी ।" गुंजा कृष्णला त्रीणि गुंजायाः । पलंकषा इक्षुगंधा श्वदंष्ट्रा स्वादुकंटकः ॥ ९८ ॥ गोकंटकः गोक्षुरकः वनशृंगाटः सप्तकं गोक्षुरस्य सरांटा इति ख्यातस्य । विश्वा विषा प्रतिविषा अतिविषा उपविषा अरुणा ॥ ९९ ॥ शृंगी महौषधं अष्टकं अतिविषायाः "अतिविख इति ख्यातायाः ।" क्षीरावी दुग्धिका द्वे दुग्धी इति ख्यातायाः । शतमूली बहुसुता अभीरुः इंदीवरी वरी ॥ १०० ॥ ऋष्यप्रोक्ता अभीरुपत्री नारायणी शतावरी अहेरुः दशकमपि स्त्रीलिंगं सहस्रमूल्याः "शतावरीति ख्यातायाः ।" पीतद्रुः कालीयकः "कालेयकः" हरिद्रुः ॥ १०१ ॥ दार्वी पचंपचा "पचंवचेत्यपि" दारुहरिद्रा पर्जनी सप्तकं दारुहळद इति ख्यातस्य । वचा उग्रगंधा षड्ग्रंथा गोलोमी शतपर्विका पंचकं वचायाः वेखंड इति ख्यातायाः ॥ १०२ ॥ या शुक्ला वचा सा हैमवतीत्येकम् । वैद्यमाता सिंही वाशिका "दंत्यमध्यापि" वृषः अटरूषः "अटरुषः"

वृषोऽटरूषः सिंहास्यो वासको वाजिदंतकः ॥ १०३ ॥
आस्फोटा गिरिकर्णी स्याद्विष्णुक्रांताऽपराजिता ॥
इक्षुगंधा तु काण्डेक्षुकोकिलाक्षेक्षुरक्षुराः ॥ १०४ ॥
शालेयः स्याच्छीतशिवश्छत्रा मधुरिका मिसिः ॥
मिश्रेयाप्यथ सीहुंडो वज्रः स्नुक् स्त्री स्नुही गुडा ॥ १०५ ॥
समंतदुग्धाऽथो वेल्लममोघा चित्रतंडुला ॥
तंडुलश्च कृमिघ्नश्च विडंगं पुंनपुंसकम् ॥ १०६ ॥
बला वाट्यालका घंटारवा तु शणपुष्पिका ॥
मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च ॥ १०७ ॥

सिंहास्यः वासकः वाजिदंतकः अष्टकं अटरूषस्य अडुळसा इति ख्यातस्य ॥ १०३ ॥ आस्फोटा "आस्फोता । आस्फोता गिरिकर्ण्यां च वनमल्ल्यां च योषितीति मेदिनी" गिरिकर्णी विष्णुक्रांता अपराजिता चत्वारि विष्णुक्रांतायाः । इक्षुगंधा काण्डेक्षुः कोकिलाक्षः इक्षुरः क्षुरः पंच कोकिलाक्षस्य कोळसुंदा "तालिमखान्याचें बीं कोलिस्ता" इति ख्यातस्य ॥१०४॥ शालेयः शीतशिवः छत्रा मधुरिका मिसिः । "मिसी मिशिः मिशी । मिश्री मिशिरिति तालव्यांत आह सोमनंदी ।" मिश्रेया षट्कं मधुरिकायाः "बडिशेप" इति ख्यातायाः । सीहुंडः । "वज्रद्रुमः सिहुंडोऽथेति रभसात् ह्रस्वादिरपि ।" शीहुंड इति तालव्यादिरपि । वज्रः स्नुक् स्नुही "स्नुहिः स्नुहा । स्नुही स्नुहा स्नुगित्यमरदत्तः ।" गुडा "गुडी । गुडो गोलेक्षुविकृती स्नुहीगुडिकयोर्गुडेति रुद्रः" ॥ १०५ ॥ समंतदुग्धा षट् वज्रद्रुमस्य "शेरनिवडुंग" इति ख्यातस्य । तत्र स्नुक् हकारांतः स्त्री । "वज्रद्रुः स्नुक् स्नुही गुडेति पाठः ।" वेल्ल अमोघा "मोघापि । कृमिघ्नं तंडुलं मोघेति वाचस्पतिः ।" चित्रतंडुला तंडुलः "तंतुलः । तंतुं कृमिसूत्रं लाति ।" कृमिघ्नः विडंगं षट्कं विडंगस्य वावडिंग इति ख्यातस्य ॥ १०६ ॥ बला वाट्यालका द्वे तुपकडी "चिकणा" इति ख्यातस्य । घंटारवा शणपुष्पिका द्वे शणपुष्पिकायाः । "लघुताग इति घागरी इति चेत्येके" मृद्वीका गोस्तनी "गोस्तना" द्राक्षा स्वाद्वी मधुरसा पंच द्राक्षायाः ॥ १०७ ॥ सर्वानुभूतिः

सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत् ॥
त्रिभंडी रेचनी श्यामापालिंद्यौ तु सुषेणिका ॥१०८॥
काला मसूरविदलाऽर्धचंद्रा कालमेषिका ॥
मधुकं क्लीतकं यष्टिमधुकं मधुयष्टिका ॥ १०९ ॥
विदारी क्षीरशुक्लेक्षुगंधा क्रोष्ट्री तु या सिता ॥
अन्या क्षीरविदारी स्यान्महाश्वेतर्क्षगंधिका ॥ ११० ॥
लांगली शारदी तोयपिप्पली शकुलादनी ॥
खराश्वा कारवी दीप्यो मयूरो लोचमस्तकः ॥ १११ ॥

"सरला सरणा" त्रिपुटा "त्रिपुटी । सर्वानुभूतिः सरणा त्रिपुटा रोचनी सरा । त्रिपुटी महती श्यामेति वाचस्पतिः ।" त्रिवृता त्रिवृत् त्रिभंडी रोचनी "रेचनी त्रिवृतादंत्योरिति मेदिनी ।" सप्त त्रिवृतायाः "तेंडू, श्वेतनिशोत्तर इति च ख्यातायाः ।" श्यामा पालिंदी "पालिंधी" सुषेणिका ॥१०८॥ काला मसूरविदला अर्धचंद्रा कालमेषिका सप्त कृष्णवर्णायास्त्रिवृतायाः "काळा तेंडू, निशोत्तर, निगडी, तिधारें इति ख्यातायाः ।" मधुकं क्लीतकं यष्टिमधुकं "यष्टीमधुकं" मधुयष्टिका चत्वारि यष्टिमधुकस्य गोडें कोष्ट "ज्येष्ठमध" इति ख्यातस्य ॥ १०९ ॥ विदारी क्षीरशुक्ला इक्षुगंधा क्रोष्ट्री चत्वारि शुक्लभूमिकोहोळें इति ख्यातस्य । या सिता शुक्ला विदारीत्यन्वयः । क्षीरविदारी महाश्वेता ऋक्षगंधिका । ऋक्षान् गंधयति । गंध अर्दने । यद्वा ऋक्षस्येव गंधो यस्याः । त्रीणि कृष्णभूमिकूष्मांडस्य । अन्येति सितायाः अन्या कृष्णेत्यर्थः । "क्रोष्ट्री शृगालिका कृष्णविदारी लांगलीषु चेति मेदिन्यां कृष्णविदारीत्युक्तत्वात् । या सितेत्यत्रासितेति पदच्छेदे मेदिन्यविरोधेन पूर्वं नामचतुष्कं कृष्णभूकूष्मांडस्य । क्षीरेति त्रयं शुक्लभूकूष्मांडस्येति वा । असिताया अन्या शुक्लेत्यर्थः" ॥ ११० ॥ लांगली शारदी तोयपिप्पली शकुलादनी चत्वारि शाकभेदस्य मोगुड "जळपिंपळी" इतिख्यातस्य । खराश्वा कारवी दीप्यः मयूरः लोचमस्तकः "लोचमर्कटः" पंच मयूरशिखायाः मोरशेंडा इति ख्यातायाः । "अजमोदा इत्यपि मतम्" ॥ १११ ॥ गोपी "अजादित्वाट्टाप् । गोपा । गोपी श्यामा गोपवल्ली गोपा गोपालिका च सेति वाचस्पतिः" । श्यामा शारिवा "सारिवा"

गोपी श्यामा शारिवा स्यादनंतोत्पलशारिवा ॥
योग्यमृद्धिः सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वया इमे ॥ ११२ ॥
कदली वारणबुसा रंभा मोचांशुमत्फला ॥
काष्ठीला मुद्गपर्णी तु काकमुद्गा सहेत्यपि ॥ ११३ ॥
वार्ताकी हिंगुली सिंही भंटाकी दुष्प्रधर्षिणी ॥
नाकुली सुरसा रास्ना सुगंधा गंधनाकुली ॥ ११४ ॥
नकुलेष्टा भुजंगाक्षी छत्राकी सुवहा च सा ॥
विदारिगंधांऽशुमती सालपर्णी स्थिरा ध्रुवा ॥ ११५ ॥
तुंडिकेरी समुद्रांता कार्पासी बदरेति च ॥

अनंता उत्पलशारिवा पंच उत्पलशारिवायाः उपरसाळ "उपलसरी" इति ख्यातायाः । योग्यं ऋद्धिः सिद्धिः लक्ष्मीः चत्वारि ऋद्धिनामकस्य औषधिविशेषस्य "केवणी, मुरुडशेंग इति च ख्यातस्य ।" इमे योग्यादयश्चत्वारो वृद्धेर्वृद्धिनामकौषधेरप्याह्वयाः स्युः ॥ ११२ ॥ कदली "अजादित्वाट्टापि कदला । कदलोऽपि । कदलश्च कदल्यसाविति व्याडिः ।" वारणबुसा "वारणबुषा" रंभा मोचा अंशुमत्फला काष्ठीला षट् कदल्याः । मुद्गपर्णी काकमुद्गा सहा त्रयं काकमूग "रानमूग" इति ख्यातायाः काकमुद्गायाः ॥ ११३ ॥ वार्ताकी । "पुंस्यपि वार्ताक इति । वार्ता वार्ताकुः । वार्तिगणस्तु वार्तागो वार्ताकः शाकबिल्वक इति रभसः । वार्ता वार्तिगणे वृत्ताविति विश्वः । वर्ताकुरेषा गुणसप्तयुक्तेति वैद्यकाच्च ।" हिंगुली सिंही भंटाकी दुष्प्रधर्षिणी पंच वार्ताक्याः रानवांगी "डोरली" इति ख्यातायाः । नाकुली सुरसा रास्ना सुगंधा गंधनाकुली ॥ ११४ ॥ नकुलेष्टा भुजंगाक्षी छत्राकी सुवहा नव रास्नायाः मुंगसी "मुंगसवेल" इति ख्यातायाः । "रास्नासुगंधयोः स्थाने नागसुगंधेति पाठः ।" विदारिगंधा (१) "विदारीगंधा" अंशुमती सालपर्णी "शालपर्णी" स्थिरा ध्रुवा पंच सालपर्ण्याः डाब "डवला, सालवण" इति ख्यातायाः ॥ ११५ ॥ तुंडिकेरी समुद्रांता कार्पासी "कर्पासी" बदरा चत्वारि कार्पास्याः । सा कार्पासी वन्या वने भवा चेद्भारद्वाजीत्युच्यते एकम् । शृंगी ऋषभः वृषः त्रयं ऋषभाख्यौषधि-

१ विदार्याः गन्धः विदारिगन्धः । "ङ्यापोः संज्ञाछन्दसोर्बहुलम्"—इति ह्रस्वः । सोऽस्त्यस्याः ।

14

भारद्वाजी तु सा वन्या शृंगी तु ऋषभो वृषः॥११६॥
गांगेरुकी नागबला झषा ह्रस्वगवेधुका ॥
धामार्गवो घोषकः स्यान्महाजाली स पीतकः ॥११७॥
जोत्स्नी पटोलिका जाली नादेयी भूमिजंबुका ॥
स्याल्लांगलिक्यग्निशिखा काकांगी काकनासिका११८
गोधापदी तु सुवहा मुसली तालमूलिका ॥
अजशृंगी विषाणी स्याद्गोजिह्वादार्विके समे ॥११९॥
तांबूलवल्ली ताबूली नागवल्ल्यप्यथ द्विजा ॥
हरेणू रेणुका कौंती कपिला भस्मगंधिनी ॥ १२० ॥

विशेषस्य "बैलघांटी इति ख्यातस्य" । शृंगीशब्द इन्नंतः ॥ ११६ ॥ गांगेरुकी नागबला झषा ह्रस्वगवेधुका चत्वारि बलाविशेषस्य "ह्रस्वचिकणा इति च ख्यातस्य।" धामार्गवः घोषकः द्वे घोषवल्ल्याः "घोंसाळी, दोडकी इति च ख्यातायाः।" सः घोषकः पीतकः पीतपुष्पश्चेत् महाजालीत्युच्यते एकम् । स्त्रीलिंगम् ॥ ११७ ॥ जोत्स्नी "ज्योत्स्ना।" जोत्स्नी पटोली ज्योत्स्नेति हैमः । पटोलिका जाली त्रयं पटोलिकायाः "पडवळी इति ख्यातायाः ।" नादेयी भूमिजंबुका द्वे भूजंब्वाः "भुइजांभळी इति ख्यातायाः । नादेयी नागरंगे स्याज्जयायां जलवेतसे । भूमिजंब्वां जवायां च व्यंगुष्ठेऽपि च योषितीति मेदिनी ।" लांगलिकी अग्निशिखा द्वे लांगल्याः वागचबका "कळलावी" इति च ख्यातायाः । काकांगी काकनासिका द्वे काकजंघाख्यौषधिविशेषस्य "कावळी इति ख्यातस्य" ॥ ११८ ॥ गोधापदी सुवहा द्वे हंसपादिकायाः "रक्तलाजाळूं इति ख्यातायाः ।" मुसली तालमूलिका द्वे मुसळ्याकंद, मुसलकंद इति ख्यातायाः । अजशृंगी विषाणी द्वे मेढशिंगी इति ख्यातायाः ओषधेः । इयं त्वजशृंगाकारफला बहुक्षीरा सकंटका नेत्रौषधिरिति सुभूतिराह । गोजिह्वा दार्विका "दर्विका" द्वे दवली "पाथरी" इति ख्यातस्य क्षेत्रजन्यशाकभेदस्य ॥११९॥ तांबूलवल्ली तांबूली नागवल्ली त्रीणि नागवल्ल्याः "पानवेल इति ख्यातायाः" । द्विजा हरेणुः रेणुका कौंती कपिला भस्मगंधिनी षट्कं रेणुकाख्यगंधद्रव्यस्य "रेणूकबीज इति प्रसिद्धस्य" ॥१२०॥ एलावालुकं ऐलेयं सुगंधि हरिवालुकं वालुकं पंच

एलावालुकमैलेयं सुगंधि हरिवालुकम् ॥
वालुकं चाथ पालंक्या मुकुंदः कुंदकुंदुरू ॥ १२१ ॥
बालं ह्रीबेरबर्हिष्ठोदीच्यं केशांबुनाम च ॥
कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु ॥ १२२ ॥
शैलेयं तालपर्णी तु दैत्या गंधकुटी मुरा ॥
गंधिनी गजभक्ष्या तु सुवहा सुरभी रसा ॥ १२३ ॥
महेरुणा कुंदुरुकी सल्लकी ह्लादिनीति च ॥
अग्निज्वालासुभिक्षे तु धातकी धातुपुष्पिका ॥ १२४ ॥

वालुकाख्यगंधद्रव्यस्य । "वालूक, कांकडी इति ख्यातस्येत्यपि मतम् । पालंकी मुकुंदः कुंदः कुंदुरुः "मुकुंदः कुंदुः कुंदरः" चत्वारि पालकी "पोईशाक वस्तुकाकारा पालख" इति च ख्यातस्य ॥ १२१ ॥ बालं ह्रीबेरं बर्हिष्ठं उदीच्यं केशांबुनाम पंच वाळा इति ख्यातस्य । "बालः । बालो ना कुंतलेऽश्वस्य गजस्यापि च वालधौ ॥ वाच्यलिंगोऽर्भके मूर्खे ह्रीबेरे पुन्नपुंसकमिति मेदिनी ।" केशश्चांबु च तयोर्नाम यस्य तत्केशांबुनाम । यावत्केशस्यांबुनश्च नामानि तानि सर्वाणि बालस्यापीत्यर्थः । कालानुसार्यं वृद्धं अश्मपुष्पं शीतशिवम् ॥ १२२ ॥ शैलेयं पंच शैलैयस्य फूल "शिलाजित" इति ख्यातस्य । तालपर्णी दैत्या गंधकुटी मुरा गंधिनी पंच मुरायाः तालिसपत्र "मोरमांशी" इति ख्यातायाः । गजभक्ष्या "गजभक्षा" सुवहा सुरभी "सुरभीः । सुरभिः सल्लकीमातृभिन्मुरागोषु योषितीति मेदिनी । सुरभीरसेत्येकमपि पदम् ।" रसा ॥ १२३ ॥ महेरुणा "महेरणा" कुंदुरुकी सल्लकी "शल्लकी सिल्लकी । श्वाविद्द्रुभेदौ शल्लक्याविति तालव्यादौ रभसः । सल्लकी सिल्लकी ह्लादेति रुद्रः ।" ह्लादिनी "ह्लादिनी" अष्ट सालई इति ख्यातायाः । अग्निज्वाला "अग्नेर्ज्वालेव, रक्तपुष्पत्वात् ।" सुभिक्षा धातकी धातुपुष्पिका "धातृपुष्पिका" चत्वारि धातक्याः धायफूल "धायटी" इति ख्यातायाः ॥ १२४ ॥ पृथ्वीका चंद्रवाला एला निष्कुटिः "निष्कुटी" बहुला पंचकं एलायाः । सा एला सूक्ष्मा सूक्ष्मपरिमाणा चेत् उपकुंचिका तुत्था

पृथ्वीका चंद्रवालैला निष्कुटिर्बहुलाऽथ सा ॥
सूक्ष्मोपकुंचिका तुत्था कोरंगी त्रिपुटा त्रुटिः ॥१२५॥
व्याधिः कुष्टं पारिभाव्यं वाप्यं पाकलमुत्पलम् ॥
शंखिनी चोरपुष्पी स्यात्केशिन्यथ वितुन्नकः ॥१२६॥
झटामलाऽज्झटा ताली शिवा तामलकीति च ॥
प्रपौंडरीकं पौंडर्यमथ तुन्नः कुबेरकः ॥ १२७ ॥
कुणिः कच्छः कांतलको नंदिवृक्षोऽथ राक्षसी ॥
चंडा धनहरी क्षेमदुष्पत्रगणहासकाः ॥ १२८ ॥
व्याडायुधं व्याघ्रनखं करजं चक्रकारकम् ॥
सुषिरा विद्रुमलता कपोतांघ्रिर्नटी नली ॥ १२९ ॥

कोरंगी त्रिपुटा त्रुटिः "त्रुटी" इति पंच नामानि ॥ १२५ ॥ व्याधिः कुष्टं पारिभाव्यं वाप्यं "व्याप्यं आप्यं" पाकलं उत्पलं षट्कं कडू कोष्ठ "गोडें कोष्ठ" इति ख्यातस्य । शंखिनी चोरपुष्पी केशिनी त्रयं चोरवल्ल्याः "चोर शंखाहुली, सांखवेल" इति ख्यातायाः । वितुन्नकः ॥१२६॥ झटामला अज्झटा ताली शिवा तामलकी षट्कं भूम्यामलक्याः । झटामलेत्यत्र झटेति पृथक् पदं वा । अमलेति छेदः । आह च । तामलक्यामला तालीति । झटा तामलकीति चेति । प्रपौंडरीकं पौंडर्यं "पुंडर्यं" द्वे पौंडर्यस्य । इदं शालपर्णीतुल्यपत्रं ज्ञेयम् । स्थलपद्ममिति गौडाः । तुन्नः कुबेरकः ॥ १२७ ॥ कुणिः "तुणिः" कच्छः कांतलकः नंदिवृक्षः "नंदीवृक्षः" षट्कं नंदिवृक्षस्य "नांदरुखी इति ख्यातस्य ।" अयमश्वत्थाकारपत्रः । राक्षसी चंडा धनहरी क्षेमः दुष्पत्रः गणहासकः षट्कं चोराख्यगंधद्रव्यस्य "चोरओंवा, किरमाणी ओंवा, गठोना, गाठीवनमूळ इति ख्यातस्य । गण इत्यप्यस्य नाम" ॥१२८॥ व्याडायुधं "व्यालायुधं" व्याघ्रनखं करजं चक्रकारकं चत्वारि व्याघ्रनखनामकगंधद्रव्यस्य "लघुनखला, वाघनख इति ख्यातस्य ।" सुषिरा विद्रुमलता कपोतांघ्रिः नटी नली ॥ १२९ ॥ धमनी अंजनकेशी सप्त नलीनामकगंधद्रव्यस्य "पवारीति लोके प्रसिद्धस्य । इयं उत्तरपथे प्रसिद्धा ।"

धमन्यंजनकेशी च हनुर्हट्टविलासिनी ॥
शुक्तिः शंखः खुरः कोलदलं नखमथाढकी ॥१३०॥
काक्षी मृत्स्ना तुंवरिका मृत्तालकसुराष्ट्रजे ॥
कुटन्नटं दाशपुरं वानेयं परिपेलवम् ॥ १३१ ॥
प्लवगोपुरगोनर्दकैवर्तीमुस्तकानि च ॥
ग्रंथिपर्णं शुकं बर्हपुष्पं स्थौणेयकुक्कुरे ॥ १३२ ॥
मरुन्माला तु पिशुना स्पृक्का देवी लता लघुः ॥
समुद्रांता वधूः कोटिवर्षा लंकोपिकेत्यपि ॥ १३३ ॥

हनुः हट्टविलासिनी शुक्तिः शंखः खुरः कोलदलं नखं "नखी" सप्त नवाख्यगंधद्रव्यस्य "नखला" इति ख्यातस्य । अत्र हनुरुदंतः स्त्री, साहचर्यात् । बदरीतुल्यपत्रत्वात्कोलदलम् । आढकी ॥ १३० ॥ काक्षी मृत्स्ना तुवरिका । "वार्षिका मूलिका तूवर्याढकी कुच्छुरा शटीति बोपालितात् तूवरिका ।" मृत्तालकं "मृतालकं" सुराष्ट्रजं षट् तुवरिकायाः तूर इति ख्यातायाः । कुटन्नटं दाशपुरम् । "दशपुरमिति दशपूरमिति दाशपूरमिति च । दशपूरं दशपुरं प्लवनं जीविताह्वयमिति वाचस्पतिः ।" वानेयं परिपेलवम् ॥ १३१ ॥ प्लवं गोपुरं गोनर्दं कैवर्तीमुस्तकं "कैवर्तिमुस्तकं कैवर्तमुस्तकं" अष्टकं कैवर्तीमुस्तकस्य केवडी, "जलमुस्ता, क्षुद्रमोक्षा, मोथा" इति ख्यातस्य । ग्रंथिपर्णं शुकम् । शुको व्याससुते कीरे रावणस्य च मंत्रिणि । शिरीषपादपे पुंसि ग्रंथिपर्णे नपुंसकम् । बर्हपुष्पम् "शुकबर्हमित्येकमपि नाम । बर्हिपुष्पं बर्हिः पुष्पं बर्ह पुष्पं चेति पृथगपि ।" स्थौणेयं कुक्कुरं पंच गंठीवन "भटोरा" इति ख्यातस्य ॥ १३२ ॥ मरुन्माला पिशुना स्पृक्का "पृषोदरादित्वात्सलोपे पृक्कापि" देवी लता लघुः समुद्रांता वधूः कोटिवर्षा लंकोपिका दशकं पिडकेति ख्यातायाः स्पृक्कायाः । अत्र मरुन्मालेति संघातविग्रहीतम् । यदाह वाचस्पतिः । स्पृक्का तु ब्राह्मणी देवी मरुन्माला लता लघुः । समुद्रांता वधूः कोटिवर्षा लंकोपिका मरुत् । मुनिर्माल्यवती माला मोहना कुटिला लतेति ॥ १३३ ॥ तपस्विनी जटामांसी जटिला लोमशा मिशी "मिसिः मिषिः मिषी मसिः मषिः मषी मसी" पंच जटामांस्याः ।

तपस्विनी जटामांसी जटिला लोमशा मिंशी ॥
त्वक्पत्रमुत्कटं भृंगं त्वचं चोचं वरांगकम् ॥ १३४ ॥
कर्चूरको द्राविडकः काल्पको वेधमुख्यकः ॥
ओषध्यो जातिमात्रे स्युरजातौ सर्वमौषधम् ॥१३५॥
शाकाख्यं पत्रपुष्पादि तंडुलीयोऽल्पमारिषः ॥
विशल्याग्निशिखानंता फलिनी शक्रपुष्पिका ॥१३६॥
स्यादृक्षगंधा छगलांत्र्यावेगी वृद्धदारकः ॥

जटेति पृथक्पदं वा । यदाह । मांसी कृष्णजटा हिंस्रा नलदा जटिला मिसिः । जटा च पिशिनी पेशी क्रव्यादी च तपस्विनीति । त्वक्पत्रं उत्कटं भृंगं त्वचं चोचं वरांगकं षट् त्वक्पत्रस्य "दालचिनी" तज इति ख्यातस्य । त्वकृत्वचचोचशब्दाः स्युर्वल्के चर्मणि पत्रक इति धराणिः ॥ १३४ ॥ कर्चूरकः "कर्बूरकः" द्राविडकः द्रविडदेशे जातः । तत्र जात इत्यण् । स्वार्थेकः । काल्पकः वेधमुख्यकः चत्वारि कचर इति ख्यातस्य हरिद्राभस्य । कल्पे भवः काल्पकः ओष्ठ्यमध्यः । "तालव्यमध्योऽपि ।" ओषध्य इति फलपाकांतानां व्रीह्यादीनां जातावेव ओषध्यः स्युः । ओषधिशब्दप्रयोगः स्यादित्यर्थः । बहुत्वाविवक्षायां बहुवचनं न तु नित्यम् । यदा तु ओषधेः रोगहारित्वमात्रं प्रतीयते न त्वन्यत् तदा औषधशब्दप्रयोगः । ओषधेरजाताविचण् । न केवलमोषधिरेवौषधशब्दवाच्या किंतु रोगहरत्वेन घृतक्षौद्रत्रिफलाकल्कादि चौषधमिति सर्वमिति विशेषणाज्ज्ञेयम् ॥ १३५ ॥ ॥ यत्पत्रपुष्पादि तच्छाकसंज्ञकं एकं भोजनसाधनस्य पुष्पादेः । आदिना मूलादिग्रहः । उक्तं च । मूलपत्रकरीराग्रफलकाण्डाधिरूढकम् ॥ त्वक् पुष्पं कवचं चैव शाकं दशविधं स्मृतमिति । तत्र करीरं वंशांकुरः । काण्डमिक्षुदण्डादि । अधिरूढकं बीजांकुरः । कवचं छत्राकम् । शेषं स्पष्टम् । तंडुलीयः अल्पमारिषः द्वे तांदळी "तांदुळजा" इति ख्यातस्य । विशल्या अग्निशिखा अनंता फलिनी शक्रपुष्पिका पंचकमग्निशिखायाः "कळलावी इति ख्यातायाः" । शक्रोऽर्जुनतरुः तत्पुष्पमिव पुष्पं अस्याः शक्रपुष्पी ॥ १३६ ॥ ऋक्षगंधा "ऋष्यगंधा" छगलांत्री "छगलांघ्री छगलांडी छगलेति पृथक्पदं वा । छागे तु छगलश्छागी वृद्धादारकयोः स्त्रियामित्यनेकार्थकोशः ।" आवेगी

जुंगो ब्राह्मी तु मत्स्याक्षी वयस्था सोमवल्लरी ॥ १३७ ॥
पटुपर्णी हैमवती स्वर्णक्षीरी हिमावती ॥
हयपुच्छी तु कांबोजी माषपर्णी महासहा ॥ १३८ ॥
तुंडिकेरी रक्तफला बिंबिका पीलुपर्ण्यपि ॥
बर्बरा कबरी तुंगी खरपुष्पाऽजगंधिका ॥ १३९ ॥
एलापर्णी तु सुवहा रास्ना युक्तरसा च सा ॥
चागेरी चुक्रिका दंतशठांबष्ठाम्ललोणिका ॥ १४० ॥
सहस्रवेधी चुक्रोऽम्लवेतसः शतवेध्यपि ॥
नमस्कारी गंडकारी समंगा खदिरेत्यपि ॥ १४१ ॥

वृद्धदारकः । वृद्धो दारकोऽस्मात् । वृद्धत्वं दारयति वा वृद्धदारकः । वृद्धेति भावप्रधानम् । जुंगः पंच वृद्धदारकस्य "वरधारा, जीर्णफंजी इति ख्यातस्य ।" ब्राह्मी मत्स्याक्षी वयस्था सोमवल्लरी "सोमवल्लरिः" चत्वारि सोमलतायाः। "यस्याः शुक्लपक्षे पर्णान्युद्भवंति कृष्णे च पतंति सा सोमवल्ली। सैव सोमवल्लरी" ॥ १३७ ॥ पटुपर्णी हैमवती स्वर्णक्षीरी हिमावती चत्वारि स्वर्णक्षीर्याः "पिसोळा इति ख्यातायाः" । हयपुच्छी कांबोजी माषपर्णी महासहा चत्वारि माषपर्ण्याः रानउडीद इति ख्यातायाः ॥ १३८ ॥ तुंडिकेरी "तुंडिकेशी" रक्तफला बिंबिका पीलुपर्णी चत्वारि तुंडिकेर्याः तोंडली इति ख्यातायाः । बर्बरा "वर्बरा वर्वरी । वर्वरः पामरे केशे चक्रले नीवृदंतरे । फंजिकायां पुमान् शाकभेदपुष्पभिदोः स्त्रियामिति मेदिनी ।" कबरी "कवरी" तुंगी खरपुष्पा अजगंधिका "अजगंधेत्यन्यत्र ।" पंच वर्बरी "तिळवणी कानफोडी" इति ख्यातस्य शाकभेदस्य ॥ १३९ ॥ एलापर्णी सुवहा रास्ना युक्तरसा चत्वारि एलापर्ण्याः कोळिंदण इति ख्यातायाः । चांगेरी चुक्रिका दंतशठा अंबष्ठा अम्ललोणिका "अम्ललोलिका" पंच अम्ललोणिकायाः चुका इति ख्यातायाः ॥ १४० ॥ सहस्रवेधी चुक्रः अम्लवेतसः शतवेधी चतुष्कमम्लवेतसस्य । "चांगेर्यादयो नव पर्याया इत्यपि मतम् ।" नमस्कारी गंडकारी "गंडकाली" समंगा खदिरा चत्वारि लज्जालु "लाजाळू" इति प्रसिद्धायाः ओषधेः ॥ १४१ ॥ जीवंती

जीवंती जीवनी जीवा जीवनीया मधुस्रवा ॥
कूर्चशीर्षो मधुरकः शृंगह्रस्वांगजीवकाः ॥ १४२ ॥
किराततिक्तो भूनिंबोऽनार्यतिक्तोऽथ सप्तला ॥
विमला शातला भूरिफेना चर्मकषेत्यपि ॥ १४३ ॥
वायसोली स्वादुरसा वयस्थाऽथ मकूलकः ॥
निकुंभो दंतिका प्रत्यक्श्रेण्युदुंबरपर्ण्यपि ॥१४४॥
अजमोदा तूग्रगंधा ब्रह्मदर्भा यवानिका ॥
मूले पुष्करकाश्मीरपद्मपत्राणि पौष्करे ॥ १४५ ॥
अव्यथाऽतिचरा पद्मा चारटी पद्मचारिणी ॥

जीवनी जीवा जीवनीया मधुस्रवा "मधुः स्रवेति पदद्वयमपि ।" मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे । वसंतदैत्यभिच्चैत्रे स्याज्जीवंत्यां तु योषितीति मेदिनी । विश्वप्रकाशोऽप्येवम् । पंच जीवंत्याः "हरणवेल, हरणदोडी इति ख्यातायाः ।" कूर्चशीर्षः मधुरकः शृंगः ह्रस्वांगः जीवकः पंच जीवकस्य ॥ १४२ ॥ किराततिक्तः "चिरतिक्तश्चिरातिक्तश्च । किरातश्चिरतिक्तश्च भूनिंबहिमकावपीति रभसः ।" भूनिंबः अनार्यतिक्तः अयं किराईत इति ख्यातस्य । सप्तला विमला शातला "सातला । विमला सातलायां स्यादिति विश्वप्रकाशः ।" भूरिफेना चर्मकषा पंच सप्तलायाः "शिकेकाई इति प्रसिद्धायाः" ॥ १४३ ॥ वायसोली स्वादुरसा वयस्था अयं लहानकावळी, काकोली इति च ख्यातस्य । मकूलकः "पृषोदरादित्वादुत्वे मुकूलकोऽपि" । निकुंभः दंतिका "दंतिजा" प्रत्यक्श्रेणी उदुंबरपर्णी "ऊदुंबरपर्णी ऊदुंबरपर्णी" पंच दंत्याः "दांती इति ख्यातायाः ।" यस्याः बीजं जेपाळ इति ख्यातम् ॥ १४४ ॥ अजमोदा उग्रगंधा ब्रह्मदर्भा यवानिका "यमानिका" द्वे यवान्याः ओंवा इति ख्यातायाः । "यवानीद्वयस्य द्वे द्वे नामनी इत्यपि मतम् ।" पुष्करं काश्मीरं पद्मपत्रं पद्मपर्णमिति पाठः ।" त्रीणि पौष्करमूले पुष्करमोषधिविशेषस्तस्य मूले इत्यर्थः ॥ १४५ ॥ अव्यथा अतिचरा पद्मा चारटी पद्मचारिणी पंच उत्तरदेशे प्रसिद्धायाः पद्मचारिण्याः "स्थलकमलिनी इति

कापिल्यः कर्कशश्चंद्रो रक्तांगो रोचनीत्यपि ॥१४६॥
प्रपुन्नाडस्त्वेडगजो दद्रुघ्नश्चक्रमर्दकः ॥
पद्माट उरणाख्यश्च पलाण्डुस्तु सुकंदकः ॥ १४७ ॥
लतार्कदुद्रुमौ तत्र हरितेऽथ महौषधम् ॥
लशुनं गृंजनारिष्टमहाकंदरसोनकाः ॥ १४८ ॥
पुनर्नवा तु शोथघ्नी वितुन्नं सुनिषण्णकम् ॥
स्याद्वातकः शीतलोऽपराजिता शणपर्ण्यपि ॥१४९॥
पारावतांघ्रिः कटभी पण्या ज्योतिष्मती लता ॥
वार्षिकं त्रायमाणा स्यात्त्रायंती बलभद्रिका ॥१५०॥

ख्यातायाः ।" कांपिल्यः "कांपिल्लः । चंद्रः कर्पूरकांपिल्लसुधांशुस्वर्णवारिष्विति मेदिनी ।" कर्कशः चंद्रः रक्तांगः रोचनी "रेचनी" पंच शुण्डारोचनीति ख्यातायाः रोचन्याः ॥ १४६ ॥ प्रपुन्नाडः "प्रपुन्नालः प्रपुनालः प्रपुनाडः प्रपुन्नडः" एडगजः "एलगजः" दद्रुघ्नः "दद्रूघ्नः" चक्रमर्दकः पद्माटः उरणाख्यः "उरणाक्षः" षट्कं टाकळा इति ख्यातस्य । पलाण्डुः सुकंदः द्वे पलाण्डोः "कांदा इति प्रसिद्धस्य" ॥१४७॥ हरिते हरिद्वर्णे तत्र पलाण्डौ लतार्कः दुद्रुमः इति द्वे । महौषधं लशुनं "लशूनं" गृंजनं अरिष्टः महाकंदः रसोनकः षट् लशुनस्य । रसे आस्वादने ऊन्यते प्रातकहेतुत्वात् रसोनकः । ऊन परिहाणे एरच् घञ् वा । णिलोपः । स्वार्थे कन् । लशुनगृंजनयोराकृतिभेदेऽपि रसैक्यात् अभेद इति बहवो मन्यंते ॥ १४८ ॥ पुनर्नवा शोथघ्नी द्वे पुनर्नवायाः "घेटुळी इति देशे प्रसिद्धायाः ।" वितुन्नं सुनिषण्णकं द्वे सुषुन "कुरडु" इति ख्यातस्य शाकभेदस्य । वातकः शीतलः अपराजिता शणपर्णी "सनपर्णी असनपर्णी आसनपर्णी । भवेदसनपर्ण्यां च शीतलः शिशिरेऽन्यवदिति विश्वप्रकाशः । शीतलं पुष्पकासीसे शैलजे मलयोद्भवे । पुमानासनपर्ण्यां स्याच्छिशिरे वाच्यलिंगकमिति मेदिनी ।" चत्वारि शणपर्ण्याः गोकर्णी इति ख्यातायाः । "शीतलवातक इत्येकं पदमिति धन्वंतरिराह" ॥ १४९ ॥ पारावतांघ्रिः "पारावतांघ्री" कटभी पण्या ज्योतिष्मती लता पंच ज्योतिष्मत्याः माळकांगोणी इति ख्यातायाः । पारावतांघ्रिः स्त्री । वार्षिकं त्रायमाणा त्रायंती बलभद्रिका चतुष्कं त्रायमाणायाः ॥ १५० ॥

विष्वक्सेनप्रिया गृष्टिर्वाराही बदरेत्यपि ॥
मार्कवो भृंगराजः स्यात्काकमाची तु वायसी॥१५१॥
शतपुष्पा सितच्छत्राऽतिच्छत्रा मधुरा मिसिः ॥
अवाक्पुष्पी कारवी च सरणा तु प्रसारिणी ॥१५२॥
तस्यां कटंभरा राजबला भद्रबलेत्यपि ॥
जनी जतूका रजनी जतुकृच्चक्रवर्तिनी ॥ १५३ ॥
संस्पर्शाऽथ शटी गंधमूली षड्ग्रंथिकेत्यपि ॥
कर्चूरोऽपि पलाशोऽथ कारवेल्लः कठिल्लकः ॥१५४॥
सुषवी चाथ कुलकं पटोलस्तिक्तकः पटुः ॥

विष्वक्सेनप्रिया गृष्टिः "घृष्टिः" वाराही बदरा चतुष्कं वाराह्याः "वाराहीकंद डुकरकंद इति ख्यातायाः" । मार्कवः भृंगराजः "भृंगरजाः । भृंग इव रजोऽस्य । सांतोऽदंतोऽपि । स्यान्मार्कवो भृंगरजो भृंगराजः सुजागर इति रभसात् ।" द्वे माका इति ख्यातस्य । काकमाची वायसी द्वे कावळी "काकजंघा" इति ख्यातायाः ॥ १५१ ॥ शतपुष्पा सितच्छत्रा अतिच्छत्रा मधुरा मिसिः "मिसी" अवाक्पुष्पी कारवी सप्तकं शोप इति ख्यातायां शतपुष्पायाम् । सरणा "सरणी सारणी । सरणा सरणी चार्वी कटंभरा महाबलेति रुद्रः । रुग्भेदे ना प्रसारण्यां स्वल्पनद्यां च सारणीति मेदिनी ।" प्रसारिणी ॥१५२॥ कटंभरा "कटंबरा" राजबला भद्रबला पंच प्रसारण्याः ( चांदवेल ) "कुब्जप्रसारिणी" इति ख्यातायाः। जनी "जनिः" जतूका "जतुका" रजनी "रजनिः" जतुकृत् चक्रवर्तिनी ॥ १५३ ॥ संस्पर्शा षट् चक्रवर्तिन्याः चाकवत इति ख्यातायाः । शटी गंधमूली "गंधमूला" षड्ग्रंथिका कर्चूरः "कर्बूरः कर्बुरः" पलाशः पंच शट्याः "कापूरकाचरी, आंबेहळद इति ख्यातायाः ।" कारवेल्लः कठिल्लकः "कटल्लकः" ॥ १५४ ॥ सुषवी "सुसवी सुशवी" त्रीणि कारवेल्लस्य कारली इति ख्यातस्य। कुलकं पटोलः तिक्तकः पटुः चत्वारि पटोल "पडवळ" इति ख्यातस्य । कूष्माण्डकः कर्कारुः द्वे कूष्माण्डस्य "कोहळा इति ख्यातस्य ।" उर्वारुः "ईर्वारुः इर्वारुः ईर्वालुः

कूष्माण्डकस्तु कर्कारुरुर्वारुः कर्कटी स्त्रियौ॥१५५॥
इक्ष्वाकुः कटुतुंबी स्यात्तुंब्यलाबूरुभे समे ॥
चित्रा गवाक्षी गोडुंबा विशाला त्विंद्रवारुणी ॥१५६॥
अर्शोघ्नः सूरणः कंदो गंडीरस्तु समष्ठिला ॥
कलंब्युपोदिका स्त्री तु मूलकं हिलमोचिका ॥१५७॥
वास्तुकं शाकभेदाः स्युर्दूर्वा तु शतपर्विका ॥

एर्वारुः । उन्मत्तो धुस्तुरिर्वारुः कर्कटिः स्यादिति पुंस्काण्डे रत्नकोशात् ।" कर्कटी "कर्कटिः" द्वे कर्कट्याः कांकडी इति ख्यातायाः ॥ १५५ ॥ इक्ष्वाकुः कटुतुंबी द्वे कटुतुंब्याः "दुध्या कडुभोपळा इति ख्यातायाः । अत्र इक्ष्वाकुशब्दः कट्वकटुतुंब्युभयसाधारणः । इक्ष्वाकुः कटुतुंब्यां स्त्री सूर्यवंशे नृपे पुमानिति कोशांतरेऽप्युक्तम् ।" तुंबी "तुंबिः तुंबा" अलाबूः । "अलांबूः आलाबूः आलाबुः लाबुः लाबूः । अलाबुः स्त्री पिंडफला तुंबिस्तुंबी महाफला । तुंबा तु वर्तुलाऽलाबूर्निबे तुंबी तु लाबुकेति वाचस्पतिः । अलाबूस्तुंबकः प्रोक्त इति चंद्रः । लाबुकेत्यन्यकोशे । द्वे काळा भोपळा इति ख्यातस्य ।" अलाबुर्ह्रस्वांतोऽपि क्वचित् । चित्रा गवाक्षी गोडुंवा त्रीणि गोडुंबायाः "कंवडळ इति ख्यातायाः । चित्राऽऽखुपर्णी गोडुंबा सुभद्रा दंतिकासु च । मायायां सर्पनक्षत्रे नदीभेदेषु च स्त्रियामिति मेदिनी । गवाक्षी त्विंद्रवारुण्यां गवाक्षो जालके कपाविति हैमः । गोदुग्धेति पाठो न दृश्यते कोशेषु । गोदुग्धेति चिभूड इति प्रसिद्धिर्वैद्यके" । विशाला इंद्रवारुणी द्वे इंद्रवारुण्याः "मोठी कंवडळ इति ख्यातायाः ॥ १५६ ॥ अर्शोघ्नः सूरणः "तालव्यादिरपि ।" कंदः त्रीणि सूरणस्य । गंडीरः समष्ठिला द्वे गंडीराख्यशाकभेदस्य "कडू सूरण इति ख्यातस्य ।" कलंब्यादयः पंच शाकभेदाः स्युः एकैकम् । तत्र कलंबी वेण्वाकृतिः। "कलंबी तु शतपर्वा कलंबूर्वा सुवीरुध इति वाचस्पतिः । कलंबी शाकभेदेऽपि स्याद्दंडशरयोः पुमानिति मेदिनी ।" उपोदिका "उपोदीकापि" ( वाळी ) "थोरमयाळ पोईमांडवीवेल" इति प्रसिद्धा । मूलकं मुळा इति ख्यातम् । हिलमोचिका देशांतरे हलहंची "चाकवत" इति प्रसिद्धा ॥ १५७ ॥ वास्तुकं "बथुवा "चंदनबटुवा" इति प्रसिद्धम् । "वास्तूकमपि" । दूर्वा शतपर्विका "शतपर्णिका" सहस्रवीर्या

सहस्रवीर्याभार्गव्यौ रुहाऽनंताऽथ सा सिता ॥१५८॥
गोलोमी शतवीर्या च गंडाली शकुलाक्षका ॥
कुरुविंदो मेघनामा मुस्ता मुस्तकमस्त्रियाम् ॥१५९॥
स्याद्भद्रमुस्तको गुंद्रा चूडाला चक्रलोच्चटा ॥
वंशे त्वक्सारकर्मारत्वचिसारतृणध्वजाः ॥ १६० ॥
शतपर्वा यवफलो वेणुमस्करतेजनाः ॥
वेणवः कीचकास्ते स्युर्ये स्वनंत्यनिलोद्धताः ॥१६१॥
ग्रंथिर्ना पर्वपरुषी गुंद्रस्तेजनकः शरः ॥
नडस्तु धमनः पोटगलोऽथो काशमस्त्रियाम् ॥१६२॥

भार्गवी रुहा अनंता षट् दूर्वायाः ॥ १५८ ॥ सा दूर्वा सिता शुक्ला चेत् तत्र गोलोमी शतवीर्या गंडाली शकुलाक्षका इति चत्वारि । कुरुविंदः मेघनामा मुस्ता मुस्तकं चत्वारि मुस्तायाः "मोथ इति ख्यातायाः" । मेघनामा मेघपर्यायनामकः । "मुस्तकं पुंसि क्लीबे च" ॥ १५९ ॥ भद्रमुस्तकः । भद्रमिति पृथगपि नाम । "भद्रं स्यान्मंगले हेम्नि मुस्तके करणांतरे इति रुद्रः ।" गुंद्रा द्वे मुस्ताविशेषस्य भद्रमुस्तकस्य "नागरमोथा इति ख्यातस्य ।" अस्त्रियामिति मुस्तकभद्रमुस्तकाभ्यां संबध्यते । धन्वंतरिरिमं भेदमाह । मुस्तकोऽम्बुधरो मेघो घनो राजीवशेरुकः । भद्रमुस्तो वराहोऽब्दो गांगेयः कुरुविंदक इति । चूडाला चक्रला उच्चटा त्रीणि उच्चटामूलस्य "फुरडी इति कोंकणे ख्यातस्य मुस्ताविशेषस्य ।" वंशः त्वक्सारः कर्मारः त्वचिसारः तृणध्वजः ॥ १६० ॥ शतपर्वा यवफलः वेणुः मस्करः तेजनः दशकं वेणोः । ये वेणवः अनिलोद्धताः अनिलेन कीटादिकृतरंध्रगतवायुनोद्धताः स्वनंति शब्दं कुर्वंति ते कीचकाः स्युरित्येकम् ॥ १६१ ॥ ग्रंथिः पर्व परुः "परुरुद्यंतोऽपि । "मज्जा सारो, ग्रंथिः परुः, परागः कुसुमरेणुः"—इति पुंस्काण्डे रत्नकोशात् ।" त्रीणि वंशादिग्रंथेः पेरें इति ख्यातस्य । तत्र ग्रंथिर्ना पुमान् । गुंद्रः तेजनकः शरः "सरः । सरस्तु मुंजो बाणाख्यो गुंद्रस्तेजनकः शर इति वाचस्पतेर्दंत्यादिश्च ।" त्रीणि शरस्य । नडः "नलः । अथ पोटगलः पुंसि नले च काशमत्स्ययोरिति मेदिनी ।" धमनः पोटगलः त्रीणि देवनळ इति ख्यातस्य । काशं "कासम्" ॥ १६२ ॥

इक्षुगंधा पोटगलः पुंसि भूम्नि तु बल्वजाः ॥
रसाल इक्षुस्तद्भेदाः पुंड्रकांतारकादयः ॥ १६३ ॥
स्याद्वीरणं वीरतरं मूलेऽस्योशीरमस्त्रियाम् ॥
अभयं नलदं सेव्यममृणालं जलाशयम् ॥ १६४ ॥
लामज्जकं लघुलयमवदाहेष्टकापथे ॥
नडादयस्तृणं गर्मुच्छ्यामाकप्रमुखा अपि ॥ १६५ ॥
अस्त्री कुशं कुथो दर्भः पवित्रमथकत्तृणम् ॥
पौरसौगंधिकध्यामदेवजग्धकरौहिषम् ॥ १६६ ॥

इक्षुगंधा पोटगलः त्रीणि काशस्य "काशं पुन्नपुंसकम् ।" बल्वजा इत्येकं पुंलिंगं बहुवचनांतम् "मोळ, लह्वाळे, लवा इति ख्यातस्य । एको बल्वज इति भाष्यकारवचनादेकत्वेऽपि ।" रसालः इक्षुः द्वे इक्षोः । पुंड्रः कांतारकः इत्यादयस्तस्येक्षोर्भेदाः । आदिना कोशकारादिग्रहः । "स च । इक्षुः कर्कटको वंशः कांतारो वेणुनिस्रुतिः । इक्षुरस्यः पौंड्रकश्च रसालः कुसुमारक इति" एकैकम् ॥ १६३ ॥ वीरणं वीरतरं द्वे तृणभेदस्य "काळा वाळा इति ख्यातस्य" । अस्य वीरणस्य मूले उशीरं अभयं नलदं सेव्यं अमृणालं जलाशयम् ॥ १६४ ॥ लामज्जकं लघुलयं अवदाहं इष्टकापथं इति दश नामानि स्युः । लघु लयं इति पृथगपि । लामज्जकं सुवासं स्यादमृणालं लयं लघ्विति सुश्रुतः । अवदाहेष्टमिति अवदाहेष्टकापथमिति चैकैकं पदमिति । नडादयः नडकाशादयः तृणं तृणजातीया इत्यर्थः । "नलादय इत्यपि पाठः । ये च गर्मुच्छ्यामाकप्रमुखाः । गर्मुच्छ्यामाकौ तृणधान्यविशेषौ । प्रमुखशब्दाद्वक्ष्यमाणाः कुशादयः कंगुकोद्रवाद्याश्च । तेऽपि तृणजातीयाः । "अत्र प्रमुखशब्दान्नीवाराद्या गृहीतव्याः । अन्यथा कोद्रवादीनां हविष्यत्वापातात् । श्यामाकः श्यामकोऽपि चेति हलायुधाच्छ्यामकोऽपि ।" एकम् ॥ १६५ ॥ कुशं कुथः दर्भः पवित्रं चत्वारि कुशस्य । तत्र कुशं क्लीबपुंसोः । कत्तृणं पौरं सौगंधिकं ध्यामं देवजग्धकं रौहिषं षट् गंजाण "रोहिसगवत" इति ख्यातस्य तृणभेदस्य ॥ १६६ ॥ छत्रा अतिच्छत्रः पालघ्नः । पालं क्षेत्रं हंतीति पालघ्नः । मालातृणकं "मालाकारापि तृणान्वस्य ।"

छत्राऽतिच्छत्रपालघ्नौ मालातृणकभूस्तृणे ॥
शष्पं बालतृणं घासो यवसं तृणमर्जुनम् ॥ १६७ ॥
तृणानां संहतिस्तृण्या नड्या तु नडसंहतिः ॥
तृणराजाह्वयस्तालो नालिकेरस्तु लांगली ॥ १६८ ॥
घोंटा तु पूगः क्रमुको गुवाकः खपुरोऽस्य तु ॥
फलमुद्वेगमेते च हिंतालसहितास्त्रयः ॥ १६९ ॥
खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः ॥

॥ इति वनौषधिवर्गः ॥ ४ ॥

---

सिंहो मृगेंद्रः पंचास्यो हर्यक्षः केसरी हरिः ॥

भूस्तृणं पंच वचाकृतेर्जलतृणभेदस्य । " अत्र आद्यत्रयं शेतगवत इति ख्यातस्य । अंत्यद्वयं मालाकारतृणस्येत्यपि मतम् ।" शष्पं "शस्यं" बालतृणं द्वे कोमलतृणस्य । घासः यवसं द्वे गवादीनां भक्ष्यतृणस्य । तृणं अर्जुनं द्वे तृणमात्रस्य ॥ १६७ ॥ तृणानां संहतिः समूहस्तृण्येत्युच्यते एकम् । नडानां संहतिर्नड्येत्युच्यते एकम् । तृणराजः तालः द्वे तालस्य । तृणराजाह्वयस्तृणराजनामकः । नालिकेरः "नारिकेरः नारिकेलः नाडिकेरः नारीकेलः नारिकेलिः नारीकेली" लांगली द्वे नारिकेलस्य "नारळ" इति ख्यातस्य । लांगली स्त्री ङीषंतः । इन्नंतः पुंसीत्येके ॥ १६८ ॥ घोंटा पूगः क्रमुकः गुवाकः "गूवाकः" । गुवाकोऽपि च गूवाक इति तारपालः । खपुरः पंच पूगवृक्षस्य "सुपारी, पोफळी इति ख्यातस्य ।" अस्य फलं उद्वेगमित्युच्यते एकम् । एते तालनालिकेरपूगास्त्रयः । हिंतालस्तालभेदः स तु अल्पपरिमाणः तत्सहिताः एवं चत्वारः खर्जूरादयश्चत्वारश्च एवमष्टौ एते तृणद्रुमा इत्युच्यंते ॥ १६९ ॥ तत्र खर्जूरः खजूर इति ख्यातः । केतकी ङीषंता केगत "केतक" इति ख्याता । एवं ताली तालीभेदः । खर्जूरी खर्जूरभेदः ॥ इति वनौषधिवर्गः ॥ ४ ॥ ॥ सिंहः । हिनस्ति इति सिंहः । हिसि हिंसायाम् । मयूरव्यंसकादिः । भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्यया-दित्युक्तम् । मृगेंद्रः पंचास्यः हर्यक्षः केसरी । केसरी तुरगे सिंहे पुन्नागे

("कंठीरवो मृगरिपुर्मृगदृष्टिर्मृगाशनः ॥
पुंडरीकः पंचनखचित्रकायमृगद्विषः ॥ १ ॥") (१)
शार्दूलद्वीपिनौ व्याघ्रे तरक्षुस्तु मृगादनः ॥ १ ॥
वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः ॥
दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि ॥ २ ॥
कपिप्लवंगप्लवगशाखामृगवलीमुखाः ॥
मर्कटो वानरः कीशो वनौका अथ भल्लुके ॥ ३ ॥
ऋक्षाऽच्छभल्लभल्लूका गंडके खड्गखड्गिनौ ॥
लुलायो महिषो वाहद्विषत्कासरसैरिभाः ॥ ४ ॥

नागकेसर इत्युक्तम् । हरिः षट् सिंहस्य । केसरी इन्नंतः । तालव्यमध्योऽपि । पंचं विस्तृतमास्यमस्य पंचास्यः । "पचि विस्तारे । मुखं पादाश्च पंचास्यानीव यस्येति वा" । कंठीरवो मृगरिपुर्मृगदृष्टिर्मृगाशन इत्यादयोऽप्यस्य पर्यायाः ॥ १ ॥ शार्दूलः द्वीपी व्याघ्रः त्रीणि व्याघ्रस्य । तरक्षुः "तरक्षः" मृगादनः द्वे कुक्कुराकृतेः कृष्णरेखाचित्रितस्य मृगविशेषस्य "तरस इति ख्यातस्य ॥ १ ॥" वराहः सूकरः घृष्टिः "गृष्टिः" कोलः पोत्री । पोत्रं मुखाग्रं अस्ति यस्य । पोत्रं वस्त्रे मुखाग्रे च सूकरस्य हलस्य चेति । किरिः "किरः" किटिः दंष्ट्री घोणी स्तब्धरोमा क्रोडः भूदारः द्वादश सूकरस्य । तालव्यादिरपि शूकरः । साहचर्याद्घृष्टिः पुंसि । पोत्रिणौ । दंष्ट्रिणौ । घोणिनौ । स्तब्धरोमाणौ ॥ २ ॥ कपिः प्लवंगः प्लवगः शाखामृगः वलीमुखः "बलिमुखः बलीमुखः" मर्कटः वानरः कीशः वनौकाः नवकं वानरस्य । वनौकसौ । "शाखाचारी मृगः शाखामृगः" । भल्लुकः ॥ ३ ॥ ऋक्षः अच्छभल्लः भल्लूकः "भाल्लूकः भालूकः" चतुष्कमच्छभल्लस्य आस्वल, रीस इति ख्यातस्य । "केचन भालु इति ख्यातायाः नामचतुष्कमिति वदंति" ह्रस्वमध्योऽपि । भल्लक इति । अच्छभल्लपरिषद्भिरहतीति प्रयोगः । अच्छ इति च । अच्छः स्फटिकभल्लूकनिर्मलेष्विति मेदिनी । गंडकः खड्गः खड्गी । खड्गं शृंगं यस्यास्ति । त्रीणि गंडशृंग "गेंडा" इति ख्यातस्य । लुलायः "लुलाप इति ओष्ठ्यांतोऽपि" महिषः वाहद्विषन् । वाहानां हयानां द्विषन् । कासरः

१ इदं पद्यं तालपत्रपुस्तकेऽपि नास्ति ॥

स्त्रियां शिवा भूरिमायगोमायुमृगधूर्त्तकाः ॥
शृंगालवंचुकक्रोष्टुफेरुफेरवजंबुकाः ॥ ५ ॥
ओतुर्बिडालो मार्जारो वृषदंशक आखुभुक् ॥
त्रयो गौधेरगौधारगौधेया गोधिकात्मजे ॥ ६ ॥
श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम् ॥
वातप्रमीर्वातमृगः कोकस्त्वीहामृगो वृकः ॥ ७ ॥
मृगे कुरंगवातायुहरिणाजिनयोनयः ॥
ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभे त्रिषु ॥ ८ ॥

सैरिभः पंच महिषस्य "गवा इति ख्यातस्य" ॥ ४ ॥ शिवा भूरिमायः गोमायुः मृगधूर्त्तकः शृगालः "सृगालः" वंचुकः "वंचकः । वंचकस्तु खले धूर्त्ते गृहबभ्रौ च जंबुक इति कोशांतरात् ।" क्रोष्टा फेरुः फेरवः जंबुकः दश जंबुकस्य कोल्हा इति ख्यातस्य। स्त्रियामिति। पुंव्यक्तावपि शिवाशब्दो नित्यं स्त्रीलिंग इत्यर्थः । "चतुष्पदां द्विलिंगता वक्ष्यते तदपवादोऽयम् ।" सृगालो दंत्यादिरपि । क्रोष्टुशब्दस्य रूपाणि तु क्रोष्टा क्रोष्टारौ क्रोष्टारः । क्रोष्टारं क्रोष्टारौ क्रोष्टून् । क्रोष्ट्रा क्रोष्टुनेत्यादि । दीर्घमध्योऽपि जंबूक इति ॥ ५ ॥ ओतुः बिडालः "विडालः" मार्जारः वृषदंशक आखुभुक् पंच मार्जारस्य । गौधेरः गौधारः गौधेयः एते त्रयः शब्दा गोधिकात्मजे स्थलगोधिकाया अपत्येऽङ्गार इति ख्याते । "अयं कृष्णसर्पाद्गोधायां घोरपड इति ख्यातायां चतुष्पाज्जायते । अस्य सर्पस्य दंशेन मानवोऽवश्यं म्रियते" ॥ ६ ॥ श्वावित् शल्यः द्वे शल्यस्य साळई "साळी" इति ख्यातस्य । श्वानं विध्यति लोम्ना श्वावित् श्वाविधौ । तस्य शल्यस्य लोम्नि शलली शललं शलं इति त्रीणि । शलली स्त्रियाम् । इदं सीमंतोन्नयनादावुपयुज्यते । वातप्रमीः वातमृगः द्वे वातमृगस्य वाघूळ इति ख्यातस्य । वातप्रमीरीदंतः पुंसि । रूपाणि तु । वातप्रमीः वातप्रम्यौः वातप्रम्यः । वातप्रमीं वातप्रम्यौ वातप्रमीन् । सप्तम्येकवचने तु सवर्णदीर्घः । वातप्रमी । स्त्रियां तु लक्ष्मीवत् । कोकः ईहामृगः वृकः त्रीणि वृकस्य "लांडगा इति ख्यातस्य ।" कोक ईहामृगः इत्यपि पाठः ॥ ७ ॥ मृगः कुरंगः वातायुः "वानायुः वनायुः ।" हरिणः अजिनयोनिः पंच हरिणस्य । एण्या हरिण्याश्चर्माद्यं आद्यशब्दात् मांसादि ऐणेयमित्युच्यते एकम् । प्राणिरजतादिभ्योऽञ् इत्यञ् । एणस्य तु चर्माद्यं

कदली कंदली चीनश्चमूरुप्रियकावपि ॥
समूरुश्चेति हरिणा अमी अजिनयोनयः ॥ ९ ॥
कृष्णसाररुरुन्यंकुरंकुशंबररौहिषाः ॥
गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः ॥ १० ॥
गंधर्वः शरभो रामः सृमरो गवयः शशः ॥
इत्यादयो मृगेंद्राद्या गवाद्याः पशुजातयः ॥ ११ ॥

ऐणमित्युच्यते एकम् । उभे ऐणेयं ऐणं च त्रिषु स्पष्टम् ॥८॥ कदली कंदली चीनः चमूरुः प्रियकः समूरुः एते षट् हरिणभेदाः एकैकम् । कदलीकंदल्यौ कीर्तते स्त्रियाम् । स्वामिमते तु इमौ पुंसि । अमी षट् हरिणाः वक्ष्यमाणाः कृष्णसारादयश्च अजिनयोनय उच्यंते । यत एते चर्मण्युपयुक्ताः ॥९॥ कृष्णसारः "कृष्णशारः । कृष्णश्चासौ सारश्च । वर्णो वर्णेनेति समासः । शारः शबलवातयोरिति ताल्व्यादौ रभसः ।" रुरुः न्यंकुः रंकुः शंबरः "शंबरः संवरः ।" शं वृणोति । वृञ् वरणे । रौहिषः "रोहिषः । रोहिषं कत्तृणे ज्ञेयं रोहिषो हरिणांतर इति विश्वप्रकाशः ।" गोकर्णः । गोकर्णोऽश्वतरे सर्पे मृगभेदे गणांतर इति हेमचंद्रः । पृषतः एणः ऋश्यः "ऋष्यः । एणः कुरंगमो रिष्यः स्यादृश्यश्चारुलोचन इति त्रिकाण्डशेषात् तत्र रिष्योऽपि ।" रोहितः "लोहितः" चमरः एते द्वादश मृगाः मृगभेदाः एकैकम् । तत्र कृष्णसारः कृष्णवर्णेन मिश्रः कृष्णमृग इति ख्यातः । रुरुर्देशांतरभाषायां भुवार "रोहें" इति ख्यातः । न्यंकुर्नागुण इति ख्यातः "शंबरभेदः" । रंकुः चिता "चितळ जंडियार मृगविशेष" इति ख्यातः । शंबरः सांबा "सांबर" इति ख्यातः । रौहिषः रोही इति ख्यातः । गोकर्णः गोंब इति ख्यातः । पृषतः बिंदुविशिष्टः पुषिव इति ख्यातः । एणश्चारुनेत्रः । ऋष्यः शीघ्रगामी । रोहितो रक्तवर्णः चमरश्चामरोपयोगिपुच्छः ॥ १० ॥ गंधर्वः शरभः रामः सृमरः गवयः शशः एते षट् मृगभेदाः । "शरभस्तालव्यादिः ।" तत्र गंधर्वो गंधविशिष्टः । शरभो लकीसरा इति प्रसिद्धः । रामो रमणीयरूपो मृगभेदः । सृमरः सरणशीलः । गवयः गवा इति ख्यातः । शशः ससा इति ख्यातः एकैकम् । इत्यादयः गंधर्वादयः आदिशब्दादत्रामुक्ता वनपोतादयो ये च पूर्वोक्ता मृगेंद्राद्याः सिंहाद्याश्चमरांताः ये च वर्गांतरे वक्ष्यमाणा गवाद्याः गोहस्त्यश्वादयः ते सर्वे पशुजातयः पशुशब्द-

("अधोगंता तु खनको वृकः पुंध्वज उंदुरः ॥ ") (१)
उंदुरुर्मूषकोऽप्याखुर्गिरिका बालमूषिका ॥
सरटः कृकलासः स्यान्मुसली गृहगोधिका ॥ १२ ॥
लूता स्त्री तंतुवायोर्णनाभमर्कटकाः समाः ॥
नीलंगुस्तु कृमिः कर्णजलौकाः शतपद्युभे ॥ १३ ॥
वृश्चिकः शूककीटः स्यादलिद्रोणौ तु वृश्चिके ॥

वाच्या इत्यर्थः एकम् ॥ ११ ॥ "अधोगंता खनकः वृकः पुंध्वजः उंदुरः पंच क्षेपकश्लोकगतनामानि मूषकस्य ।" उंदुरुः मूषकः "ह्रस्वोपधदीर्घोपधमुषमूषधातुभ्यां कनि मुषकः मूषक इति द्वयम्" आखुः त्रयं मूषकस्य । उंदुरुंदुरुरुंदुर इति शब्दार्णवे । गिरिका बालमूषिका द्वे स्वल्पमूषकजातेः । "खर्बाखुर्बालमूषिकेति दुर्गः ।" छुछुंदरी गंधमुखी दीर्घतुंडी दिवांधिकेति श्लोकार्धं केचिदत्र पठंति । एतन्नामचतुष्टयं मूषकसदृशजातिविशिष्टस्य चिचुंद्रीति ख्यातस्य । सरटः कृकलासः "कृकलाशः कृकुलासः । कृकं शिरो ग्रीवा कंठं च लासयति" द्वे सरडा इति ख्यातस्य । मुसली गृहगोधिका "गृहगोलिकेत्यपि पाठः" द्वे गृहगोधायाः "पाल इति ख्यातायाः ।" मुसति संशयं खंडयति शुभाशुभसूचकत्वात् । मुसली ङीषंता । मुशलीति तालव्यमध्यापि । ज्येष्ठा स्त्री कुड्यमत्स्या च गृहगोधा गृहालिकेति कोशांतरम् ॥ १२ ॥ लूता तंतुवायः "तंत्रवायः" ऊर्णनाभः ऊर्णेव तंतुर्नाभौ यस्य । मर्कटकः चत्वारि ऊर्णनाभस्य "कोष्ठी कोळी इति ख्यातस्य । तत्र लूता नित्यं स्त्री । नीलंगुः कृमिः "क्रिमिः । क्रिमिर्ना कृमिवत्कीटे लाक्षायां कृमिले खर इति मेदिनी । द्रुमामये भवेत्पुंसि कीटे च कृमिवत्क्रिमिरिति रभसः ।" द्वे अपि पुंसि क्षुद्रकीटमात्रस्य "कुसुरडा घुले इति ख्यातस्य" । नीलांगुरिति दीर्घमध्योऽपि । "नीलंगुरपि नीलांगुरिति द्विरूपकोशः ।" कर्णजलौकाः शतपदी द्वे स्त्रीलिंगे । "कर्णजलूका" घोण, गोम वळोंजी इति ख्यातायाः । शतं पादा यस्याः सा । "कर्णजलौकाः सांता । कर्णजलूका कर्णजलौकेति च टाबंतापि" ॥ १३ ॥ वृश्चिकः शूककीटः द्वे शूककीटस्य "ऊर्णादिभक्षकस्य कसर इति ख्यातस्य ।" शूकं शूकाकारं लोम तद्युक्तसर्वांगः कीटः शूककीटः । अलिः "आलिः ।" वृश्चिको द्रुण आलिः स्यादिति बोपालितः । आली । अथाली

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

पारावतः कलरवः कपोतोऽथ शशादनः ॥ १४ ॥
पत्री श्येन उलूकस्तु वायसारातिपेचकौ ॥
("दिवांधः कौशिको घूको दिवाभीतो निशाटनः॥")(१)
व्याघ्राटः स्याद्भरद्वाजः खंजरीटस्तु खंजनः ॥ १५ ॥
लोहपृष्ठस्तु कंकः स्यादथ चाषः किकीदिविः ॥
कलिंगभृंगधूम्याटा अथ स्याच्छतपत्रकः ॥ १६ ॥
दार्वाघाटोऽथ सारंगस्तोककश्चातकः समाः ॥
कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः ॥ १७ ॥

स्याद्वृश्चिके भ्रमरे पुमानिति कोशांतरम् ।" द्रोणः "द्रुणः" वृश्चिकः त्रीणि विंचू इति ख्यातस्य विषकीटस्य । तत्रालिरिदंत इन्नंतश्च । पारावतः "पारापतः । पारापतः कलरवः पत्री श्येनः शशादन इति रभसः ।" कलरवः कपोतः त्रीणि पारावतस्य पारवा "खबूतर" इति ख्यातस्य । पारावतः कपोतः स्यात्कपोतो विहगांतर इति विश्वः । शशादनः ॥ १४ ॥ पत्री श्येनः त्रयं ससाणा इति ख्यातस्य । उलूकः वायसारातिः पेचकः त्रयमुलूकस्य घूक "घुबड पेंचापक्षी" इति ख्यातस्य । "दिवांधः कौशिकः घूकः दिवाभीतः निशाटनः पंचकमप्युलूकस्य ।" व्याघ्राटः भरद्वाजः द्वे भरद्वाजस्य पक्षिणः "कुकुडकोंबा कुंभारकोंबा इति ख्यातस्य ।" खंजरीटः खंजनः द्वे चलत्पक्षस्य पक्षिविशेषस्य "ताजवा तय्यर इति ख्यातस्य" ॥ १५ ॥ लोहपृष्ठः कंकः । कंकश्छद्मद्विजे ख्यातो लोहपृष्ठकृतांतयोरित्युक्तत्वात् । द्वे बाणोपयोगिपत्रस्य पक्षिभेदस्य । चाषः "चासः । इक्षुपक्षिभिदोश्चास इति दंत्यांतेषु रुद्रः ।" किकीदिविः "किकीदीविः किकिदिविः किकिदिवः किकीदिवीः किकीदिवः किकिः किकी दिवः । चाषो दिविः किकिः स्मृत इति व्याडिः ।" द्वे चारगा "चाष, चास, तास," इति ख्यातस्य । कलिंगः भृंगः धूम्याटः त्रीणि फेंचुहार "मस्तकचूड पक्षी" इति ख्यातस्य । "धूमसमूह इवाटतीति धूम्याटः ।" शतपत्रकः ॥ १६ ॥ दार्वाघाटः द्वे वटफोरा "सुतार पक्षी, काष्ठकुट्ट, टांकारी" इति ख्यातस्य । सारंगः "शारंगः । शारंगश्चातके ख्यातः शबले हरिणेऽपि चेति तालव्यादावजयः" । तोककः

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

चटकः कलविंकः स्यात्तस्य स्त्री चटका तयोः ॥
पुमपत्ये चाटकैरस्त्र्यपत्ये चटकैव सा ॥ १८ ॥
कर्करेटुः करेटुः स्यात्कृकणक्रकरौ समौ ॥
वनप्रियः परभृतः कोकिलः पिक इत्यपि ॥ १९ ॥
काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः ॥
ध्वांक्षात्मघोषपरभृद्बलिभुग्वायसा अपि ॥ २० ॥
("स एव च चिरंजीवी चैकदृष्टिश्च मौकुलिः ॥") (१)
द्रोणकाकस्तु काकोलो दात्यूहः कालकंठकः ॥

चातकः त्रीणि चातकस्य । कृकवाकुः ताम्रचूडः कुक्कुटः चरणायुधः चत्वारि कुक्कुटस्य "कोंबडें इति ख्यातस्य" ॥ १७ ॥ चटकः कलविंकः द्वे चटकस्य "चिमणी इति ख्यातस्य ।" तस्य चटकस्य स्त्री चटकेत्येकम् । तयोश्चटकस्य चटकायाश्च पुमपत्ये चाटकैर इत्येकम् । तयोस्त्र्यपत्ये स्त्रीरूपेऽपत्ये चटकेत्येकम् ॥ १८ ॥ कर्करेटुः "कर्कराटुः" करेटुः "करटुः" द्वे अशुभवादिनि पक्षिभेदे कंकरेट "करढोंक पक्षी" इति ख्याते । "करेटुः कर्करेटुः स्यात्करटुः कर्कराटुक इति रभसः ।" कृकणः क्रकरः द्वे क्ररक इति ख्यातस्य करेटुभेदस्य । "कृ इति कणति शब्दं करोति । कृकेण कंठेन अणति शब्दं करोति वा ।" वनप्रियः परभृतः कोकिलः पिकः चत्वारि कोकिलस्य ॥ १९ ॥ काकः करटः अरिष्टः बलिपुष्टः सकृत्प्रजाः ध्वांक्षः आत्मघोषः परभृत् बलिभुक् वायसः दश काकस्य । "चिरंजीवी एकदृष्टिः मौकुलिः मौकलिरपि । एतदपि त्रयं काकस्य ।" परभृतौ । बलिभुजौ ॥२०॥ द्रोणकाकः काकोलः द्वे काकभेदस्य "डोंबकावळा कृष्णकावळा इति ख्यातस्य ।" द्रोणोऽस्त्रियामाढके स्यादाढकादिचतुष्टये । पुमान् कृपीपतौ कृष्णकाके स्त्री नीवृदंतर इति मेदिनी । द्रोणः कृपीपतौ कृष्णकाक इति विश्वप्रकाशः । "द्रोणकाको दग्धकाको वृद्धकाको वनाश्रय इति त्रिकाण्डशेषः ।" दात्यूहः "दात्यौहः" कालकंठकः द्वे डाहद "अंधकाक जलकाक" इति ख्यातस्य । काले वर्षाकाले कंठोऽस्य कालकंठकः । आतापी "आतायी इत्यंतः । आतापिनि भवेच्चिल्ल इति विश्वप्रकाशः ।" चिल्लः द्वे चिल्लस्य घार इति प्रसिद्धस्य ।

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

आतापिचिल्लौ दाक्षाय्यगृध्रौ कीरशुकौ समौ ॥ २१ ॥
कुङ् क्रौंचोऽथ बकः कह्वः पुष्कराह्वस्तु सारसः ॥
कोकश्चक्रश्चक्रवाको रथांगाह्वयनामकः ॥ २२ ॥
कादंबः कलहंसः स्यादुत्क्रोशकुररौ समौ ॥
हंसास्तु श्वेतगरुतश्चक्रांगा मानसौकसः ॥ २३ ॥
राजहंसास्तु ते चंचुचरणैर्लोहितैः सिताः ॥
मलिनैर्मल्लिकाक्षास्ते धार्तराष्ट्राः सितेतरैः ॥ २४ ॥
शरारिराटिराडिश्च बलाका बिसकंठिका ॥

दाक्षाय्यः गृध्रः द्वे गृध्रस्य गीध इति ख्यातस्य । दाक्षाय्य इति द्वितालव्यसंयुक्तांतपाठः सर्वत्र दृश्यते । दक्ष वृद्धौ शीघ्रार्थे च । श्रुदक्षिस्पृहिगृहीभ्य आय्यः । दक्षाय्यः । "दक्षाय्यस्यायं अण् दाक्षाय्यः" । कीरः शुकः द्वे कीरस्य "रावा, राघु, पोपट इति ख्यातस्य" ॥ २१ ॥ कुङ् क्रौंचः "क्रुंचः" द्वे एक "कुरकुंचा" इति ख्यातस्य । तत्र कुङ् चांतः । क्रुंचौ । बकः कह्वः द्वे बकस्य "बगळा इति ख्यातस्य" । के जले ह्वयते शब्दं कुरुते कह्वः । कंक इति पाठः "अयं पाठः कुत्रास्तीति न दृश्यते । किंतु सर्वत्र कह्व इत्येव ।" पुष्कराह्वः सारसः द्वे सारसस्य । पुष्कराह्वः पद्मपर्यायनामकः । कोकः "कुकः" चक्रः चक्रवाकः रथांगः चत्वारि चक्रवाकस्य । रथांगस्य चक्रस्य ये आह्वयाः नामानि तन्नामकः ॥ २२ ॥ कादंबः कलहंसः द्वे कलो मधुरवाक् स चासौ हंसश्च तस्य बदक इति प्रसिद्धस्य । उत्क्रोशः कुररः द्वे कुररस्य "कुररी इति प्रसिद्धस्य ।" हंसः । भवेद्वर्णागमाद्धंसः । पृषोदरादिः । श्वेतगरुत् चक्रांगः मानसौकाः चत्वारि हंसस्य । बहुत्वविवक्षायां बहुवचनम् ॥ २३ ॥ ये सिताः देहेन शुक्लाः चंचुचरणैर्लोहितैरुपलक्षिता हंसास्ते राजहंसाः स्युरित्येकम् । चंचुसहिताश्चरणास्तैरिति विग्रहः । अन्यथा प्राण्यंगत्वादेकवचनं दुर्वारम् । लक्षणे तृतीया । "हंसानां राजा राजहंसः । राजदंतादिषु पाठात् परनिपातः ।" मलिनैरीषद्धूम्रैश्चंचुचरणैस्ते सिता हंसा मल्लिकाक्षा इत्युच्यंते । एकम् । मल्लिकाकाराणि अक्षीणि येषां ते । "मलिकाख्या इत्यपि" । सितेतरैः कृष्णवर्णैः चंचुचरणैरुपलक्षितास्ते धार्तराष्ट्राः स्युः । धृतराष्ट्रे भवाः । धृतराष्ट्रः कुराजि स्यात्पक्षिक्षत्रियभेदयोरिति रभसः । एकम् ॥ २४ ॥ शरारिः

हंसस्य योषिद्वरटा सारसस्य तु लक्ष्मणा ॥ २५ ॥
जतुकाऽजिनपत्रा स्यात्परोष्णी तैलपायिका ॥
वर्वणा मक्षिका नीला सरघा मधुमक्षिका ॥ २६ ॥
पतंगिका पुत्तिका स्याद्दंशस्तु वनमक्षिका ॥
दंशी तज्जातिरल्पा स्याद्गंधोली वरटा द्वयोः ॥ २७ ॥
भृंगारी झीरुका चीरी झिल्लिका च समा इमाः ॥

" शरातिः शरालिः शराली शराटिः शराडिः । आडिः शरालिर्वरटी गंधोली वानरी कपीति स्त्रीलिंगकाण्डे रत्नकोशः ।" आटिः "आटी" आडिः "आडी" त्रयं स्त्रीलिंगम् । आडीति ख्यातस्य पक्षिणः । " आटिः पुंलिंगोऽपि क्वचित् ।" बलाका बिसकंठिका द्वे बालढोंक " बगळा " इति ख्यातस्य बकभेदस्य । बिसमिव दीर्घः कंठोऽस्याः बिसकंठिका । हंसस्य योषित् स्त्री वरटा स्यादित्येकम् । सारसस्य स्त्री तु लक्ष्मणेत्युच्यते । " निर्मकारोऽपि । लक्ष्मणश्चैव सारस इत्यमरमाला । लक्षणं नाम्नि चिह्ने च सारसस्य तु लक्षणेति विश्वः ।" एकम् ॥ २५ ॥ जतुका " जतूका " अजिनपत्रा द्वे बटुरी "चामचिराई " इति ख्याते पक्षिभेदे । अजिनं चर्म तद्रूपे पत्रे पक्षौ यस्याः सा । परोष्णी " परोष्टी ।" तैलपायिका द्वे पक्षयुक्ते कीटकविशेषे तेंलडुवा "वाघूळ" इति ख्याते । तैलं पिबतीव तैलपायिका । चत्वार्यपि जतुकाया इत्येके । वर्वणा " बर्बणा " मक्षिका " मक्षीका " नीला त्रयं मक्षिकायाः । सरघा मधुमक्षिका द्वे मक्षिकाभेदस्य " मधमाशी इति ख्यातस्य " ॥ २६ ॥ पतंगिका पुत्तिका द्वे मधुमक्षिकाभेदस्य । इयं तु सरघातः क्षुद्रा यन्निमित्तो मधुभेदः । माक्षिकं तैलवर्णं स्याद्घृतवर्णं तु पौत्तिकमिति । दंशः वनमक्षिका द्वे " मोठी डांस रानमाशी " इति ख्यातस्य । तेषां दंशानां जातिर्याऽल्पा सा दंशीत्युच्यते । " एकं डांस इति ख्यातस्य ।" गंधोली वरटा " वरटी । वरटा वरटी हंस्योस्तत्पतौ वरटः स्मृत इति तारपालः ।" द्वे वरटी " गांधीणमाशी " इति ख्यातस्य । तत्र गंधोली क्लीबता । वरटा स्त्रीपुंसयोः ॥ २७ ॥ भृंगारी झीरुका " झीरिका झिरुका झिरिका झिरीका " चीरी झिल्लिका " झिल्लीका झिल्लुका चीलिका चिल्लुका " चत्वारि झिल्ली " मुरकूट चिलट इत्यादिख्यातस्य ।" झी इति रौति झीरुका । ची इति रौति चीरी । या हि

समौ पतंगशलभौ खद्योतो ज्योतिरिंगणः ॥ २८ ॥
मधुव्रतो मधुकरो मधुलिण्मधुपालिनः ॥
द्विरेफपुष्पलिड्भृंगषट्पदभ्रमरालयः ॥ २९ ॥
मयूरो बर्हिणो बर्ही नीलकंठो भुजंगभुक् ॥
शिखावलः शिखी केकी मेघनादानुलास्यपि ॥ ३० ॥
केका वाणी मयूरस्य समौ चंद्रकमेचकौ ॥
शिखा चूडा शिखंडस्तु पिच्छबर्हे नपुंसके ॥ ३१ ॥
खगे विहंगविहगविहंगमविहायसः ॥
शकुंतिपक्षिशकुनिशकुंतशकुनद्विजाः ॥ ३२ ॥
पतत्रिपत्रिपतगपतत्पत्ररथांडजाः ॥

रात्रौ अदृश्या सती स्वनति । तथा च प्रयोगः । अदृश्यझिल्लीस्वनकर्णशूलै-रिति । समा इत्यनेन चतुष्टयमेककार्यकमित्युक्तम् । इमा इति स्त्रीत्वनिश्चयः । पतंगः शलभः द्वे टोळ "दीपपतंग" इति ख्यातस्य । खद्योतः ज्योतिरिंगणः द्वे खद्योतस्य "काजवा इति ख्यातस्य" ॥ २८ ॥ मधुव्रतः मधुकरः मधु-लिट् मधुपः अली द्विरेफः द्वौ रेफौ नाम्नि यस्य । भ्रमरशब्दे प्रसिद्धिः । पुष्पलिट् भृंगः षट्पदः भ्रमरः अलिः एकादश भ्रमरस्य । अमधुकरे मधुक-रशब्दो रूढः । मधु किरति विक्षिपतीति वा । मधुलिहौ । पुष्पलिहौ ॥ २९ ॥ मयूरः बर्हिणः बर्ही नीलकंठः भुजंगभुक् शिखावलः शिखी केकी मेघनादा-नुलासी नव मयूरस्य । बर्हिणोऽदंतः । बर्ही इन्नंतः । भुजंगभुजौ । शिख्यादि-त्रयमिन्नंतम् । मेघनादमनुलसत्यवश्यं मेघनादानुलासी ॥ ३० ॥ मयूरवाणी केकेत्युच्यते एकम् । चंद्रकः मेचकः द्वे पिच्छस्य नेत्राकारचिह्नस्य । "बर्हि-कंठसमं वर्णं मेचकं ब्रुवते बुधा इति कात्यः ।" शिखा चूडा द्वे मयूरशिखा-याम् । शिखण्डः पिच्छं बर्हं त्रीणि मयूरपिच्छस्य ॥ ३१ ॥ खगः । खगः सूर्यग्रहे देवे मार्गणे च विहंगमे इति कोशांतरम् । विहंगः विहगः विहंगमः विहायाः शकुंतिः पक्षी शकुनिः शकुंतः शकुनः द्विजः ॥ ३२ ॥ पतत्री पत्री पतगः । पतेन पक्षेण गच्छति । पतन् पत्ररथः अंडजः नगौकाः वाजी ।

नगौकोवाजिविकिरविविष्किरपतत्रयः ॥ ३३ ॥
नीडोद्भवा गरुत्मंतः पित्संतो नभसंगमाः ॥
तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः ॥ ३४ ॥
तित्तिरिः कुक्कुभो लावो जीवंजीवश्चकोरकः ॥
कोयष्टिकष्टिट्टिभको वर्तको वर्तिकादयः ॥ ३५ ॥
गरुत्पक्षच्छदाः पत्रं पतत्रं च तनूरुहम् ॥
स्त्री पक्षतिः पक्षमूलं चंचुस्त्रोटिरुभे स्त्रियौ ॥ ३६ ॥

वाजाः पक्षाः संति अस्य । विकिरः विः विष्किरः पतत्रिः ॥ ३३ ॥ नीडो-द्भवः गरुत्मान् पित्सन् नभसंगमः सप्तविंशतिः पक्षिमात्रस्य । शकुंतिरिदंतः । शकुंतोऽदंतः । विरित्येकाक्षरं नाम । नभसंगम इति पंचाक्षरम् । अथ तेषां विशेषा वक्ष्यंत इति शेषः । हारीतो देशांतरभाषया हरिल "हिरवा पक्षी" इति ख्यातः । "हारितः इतीकारह्रस्वोऽपि ।" मद्गुः जलकाकः "पाण-कावळा इति ख्यातः ।" कारण्डवः करडुवा इति ख्यातः । "अयं काकतुंडो दीर्घपादः कृष्णवर्णः ।" प्लवः पुडेरी "पाणकोंबडा" इति ख्यातः । "प्लवः प्लक्षे प्लुतौ कपौ । शब्दे कारण्डवे म्लेच्छजातौ भेलकभेकयोः । क्रमनिम्नमही-भागे कुलके जलवायसे । जलांतरे प्लवं गंधतृणे मुस्तकभिद्यपीति हेमचंद्रः" ॥ ३४ ॥ तित्तिरिः "तित्तिरः" । कपोतलावतित्तिरा इति वाचस्पतिः । तित्तिर पक्षी इति प्रसिद्धः । कुक्कुभो वनकुक्कुटः लावो लवा "लावा पक्षी" इति प्रसिद्धः । जीवंजीवो मयूरतुल्यपत्रकः "जीवं जीवयतीति जीवंजीवः । तद्दर्शनेन विषनाशनात् । जीवजीवो जिवाजिवश्चेत्यपि ।" चकोरकश्चकोरः । योऽयं चंद्रिकया तृप्यति । कोयष्टिकः कोंडा इति ख्यातः । टिट्टिभकः टिटि-भकः टिट्टिभ इत्यपि ।" टिटवी इति ख्यातः । वर्तकश्चित्रपक्षः पक्षिभेदः "गांजीण पक्षी इति ख्यातः ।" वर्तिका वटई "वनचटक" इति प्रसिद्धा । स्त्रियां वर्तकेत्यपि । आदिशब्दात् सारिका कपिंजलादयः । एकैकम् ॥ ३५ ॥ गरुत् पक्षः छदः पत्रं पतत्रं तनूरुहं षट् पक्षस्य । गरुतौ पक्षौ छदौ । पक्षसी च स्मृतौ पक्षाविति शुभांकः । "गरुत्पक्षेतरौ छदामिति क्लीबकाण्डे बोपा-लितः ।" पक्षस्य मूलं पक्षतिरित्युच्यते । "पक्षतीति ईकारांतोऽपि" एकम् । चंचुः त्रोटिः द्वे पक्षितुंडस्य । चंचूश्चंचुस्तथा त्रोटिरिति हलायुधः ॥ ३६ ॥

प्रडीनोड्डीनसंडीनान्येताः खगगतिक्रियाः ॥
पेशी कोशो द्विहीनेंऽडं कुलायो नीडमस्त्रियाम् ॥३७॥
पोतः पाकोऽर्भको डिंभः पृथुकः शावकः शिशुः ॥
स्त्रीपुंसौ मिथुनं द्वंद्वं युग्मं तु युगुलं युगम् ॥ ३८ ॥
समूहो निवहव्यूहसंदोहविसरव्रजाः ॥
स्तोमौघनिकरव्रातवारसंघातसंचयाः ॥ ३९ ॥
समुदायः समुदयः समवायश्चयो गणः ॥
स्त्रिया तु संहतिर्वृंदं निकुरंबं कदंबकम् ॥ ४० ॥

प्रडीनं उड्डीनं संडीनं एतास्तिस्रः खगानां गतिक्रियाः गमनव्यापाराः गतिविशेषा इत्यर्थः । तत्र प्रडीनं तिर्यग्गमनम् । उड्डीनं ऊर्ध्वगमनम् । संडीनं संगतगमनम् । पेशी "पेशिः" कोशः "कोषः" अंडं त्रयमंडस्य । तत्र पेशी स्त्री । कोशोऽस्त्रियाम् । अंडं द्विहीने क्लीबे इत्यर्थः । रूपभेदेनैव क्लीबत्वे सिद्धे द्विहीन इत्युक्तिः साहचर्येण प्राप्तमस्त्रीत्वं वारयति । "पेशीनां मांसखंडानां कोशो भांडागारमिति नामैक्यमिति स्वामी ।" कुलायः कुलं पक्षिसंतानं अयते यत्र । नीडं द्वे पक्षिगृहस्य "घरटा, खोंपा, कोठें इति प्रसिद्धस्य" ॥ ३७ ॥ पोतः पाकः अर्भकः डिंभः पृथुकः शावकः शिशुः सप्तकं शिशुमात्रस्य । "स्त्रियां तु पोती ङीबंता । पाका अर्भका डिंभा पृथुका एते च टाबंताः ।" स्त्रीपुंसौ मिथुनं द्वंद्वं त्रीणि स्त्रीपुरुषरूपयुग्मस्य । स्त्री च पुमांश्च स्त्रीपुंसौ । अचतुरविचतुरेति साधुः । द्वंद्वशब्दस्य स्त्रीपुंसपरत्वे कालिदासप्रयोगः । द्वंद्वानि भावं क्रियया विवव्रुरिति । युग्मं युगुलं युगं त्रयं युग्मस्य । केचित्तु द्वंद्वयुग्मे इति समस्तं पठित्वा द्वंद्वादिचतुष्टयं समानमाहुः ॥ ३८ ॥ समूहः निवहः व्यूहः संदोहः विसरः व्रजः स्तोमः ओघः निकरः व्रातः वारः संघातः संचयः ॥ ३९ ॥ समुदायः समुदयः समवायः चयः गणः संहतिः वृंदं निकुरंबं कदंबकं द्वाविंशतिः समूहस्य । तत्र संहतिः स्त्रियाम् । "वारः सूर्यादिदिवसे द्वारेऽवसरवृंदयोः । कुब्जवृक्षे हरे वारो वारं मद्यस्य भाजनमिति विश्वप्रकाशः" ॥ ४० ॥ वृंदभेदाः समुदायविशेषा वक्ष्यंत इति शेषः । समैः सजातीयैः प्राणिभिरप्राणिभिर्वा समूहो वर्ग इत्युच्यते एकम् । यथा

वृंदभेदाः समैर्वर्गः संघसार्थौ तु जंतुभिः ॥
सजातीयैः कुलं यूथं तिरश्चां पुन्नपुंसकम् ॥ ४१ ॥
पशूनां समजोऽन्येषां समाजोऽथ सधर्मिणाम् ॥
स्यान्निकायः पुंजराशी तूत्करः कूटमस्त्रियाम् ॥४२॥
कापोतशौकमायूरतैत्तिरादीनि तद्गणे ॥
गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते ॥४३॥

इति सिंहादिवर्गः ॥ ५ ॥

मनुष्या मानुषा मर्त्या मनुजा मानवा नराः ॥
स्युः पुमांसः पंचजनाः पुरुषाः पूरुषा नरः ॥ १ ॥

मनुष्यवर्गः शैलवर्गः । सजातीयैर्विजातीयैरपि जंतुभिः प्राणिभिरेव समूहः संघः सार्थ इति चोच्यते द्वे । यथा पशुसंघः वणिक्सार्थः । सजातीयैर्जंतुभिरेव कुलम् । यथा विप्रकुलम् । कुलं जनपदे गोत्रे सजातीये गणेऽपि चेति एकम् । तिरश्चामेव सजातीयानां समूहे यूथम् । यथा मृगयूथम् । एकम् ॥४१॥ पशूनामेव वृंदं समज इत्युच्यते एकम् । अन्येषां पश्वतिरिक्तानां वृंदं समाजः। यथा श्रोत्रियसमाजः एकम् । सधर्मिणां एकधर्मवतां समूहो निकायः । यथा श्रोत्रियनिकायः । पुंजः "पिंजः" राशिः उत्करः कूटं चत्वारि धान्यादि-राशेः । "कूटं पुन्नपुंसकम्" ॥४२॥ तद्गणे तेषां कपोतादीनां समूहे कापोता-दीनि स्युः । यथा कपोतानां समूहः कापोतम् । शुकानां समूहः शौकम् । एवं मयूराणां समूहः मायूरम् । तित्तिराणां समूहस्तैत्तिरम् । कपोतादिभ्यः अनु-दात्तादेरञ् । आदिशब्दात् काकमित्यादि । ये गृहासक्ताः क्रीडार्थं पंजरादौ स्थापिता इति यावत् । ते पक्षिमृगाः छेका गृह्यका इति च स्युः द्वे । गृह्या एव गृह्यकाः स्वार्थे कन् ॥४३॥ इति सिंहादिवर्गः ॥ ५ ॥ मनुष्याः मनोरप-त्यानि पुमांसः मनोर्जाताविति पाणिनिसूत्रेण यत् प्रत्ययः षुगागमश्च । मानुषाः मर्त्याः मनुजाः मानवाः नराः पुमांसः पंचजनाः पंचभिः पृथिव्यादिमहाभूतै-र्जन्यते प्रादुर्भवतीति । पुरुषाः पूरुषाः नरः एकादश मनुष्याणाम् । नृशब्द-स्यैकवचनं तु ना । पुमांस इत्यादि पंचकं तु पुंव्यक्तावपि प्रायेण प्रयुज्यते ।

स्त्री योषिदबला योषा नारी सीमंतिनी वधूः ॥
प्रतीपदर्शिनी वामा वनिता महिला तथा ॥ २ ॥
विशेषास्त्वंगना भीरुः कामिनी वामलोचना ॥
प्रमदा मानिनी कांता ललना च नितंबिनी ॥ ३ ॥
सुंदरी रमणी रामा कोपना सैव भामिनी ॥
वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ॥ ४ ॥
कृताभिषेका महिषी भोगिन्योऽन्या नृपस्त्रियः ॥

यथा पुंस्कोकिलाः ॥ १ ॥ स्त्री स्त्यायतः शुक्रशोणिते यस्याम्। स्त्यै संघाते। योषित् "जोषित् जोषिता योषितेत्यपि । स्त्री वधूर्योषितांगनेति त्रिकाण्डशेषः ।" अबला अल्पं बलं यस्याः। अल्पार्थे नञ्। अनुदरा कन्येतिवत्। योषा "जोषेति चवर्गतृतीयादिः" । नारी सीमंतिनी वधूः प्रतीपदर्शिनी । प्रतीपं द्रष्टुं शीलमस्याः अपांगनिरीक्षणत्वात्। वामा वनिता महिला "महस्योत्सवस्य इला भूमिरिति विग्रहे महेला। महं उत्सवं लातीति महलापि"। एकादश स्त्रियाः। स्त्रियौ। योषितौ। वध्वौ ॥ २ ॥ विशेषाः स्त्रीणां भेदा वक्ष्यंत इति शेषः। अंगनेत्येकं प्रशस्तांग्याः । एवं रामापर्यंतमेकैकम्। तत्र भीरुर्भयशीला। "भीरूरिति दीर्घोकारांता। भीलुर्भीलूश्च" कामिनी कामयमाना। वामलोचना चारुनेत्रा। प्रमदा प्रकृष्टकामवेगा। मानिनी प्रणयकोपवती। स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासंगिनि प्रिये इति। कांता मनोहरा। ललना ललनयुक्ता। नितंबिनी ॥ ३ ॥ सुंदरी शोभनावयवा। "सुंदरापि"। रमणी रमयंती। "रमणापि" रामा रममाणा। कोपना "कोपनी कोपिनी" भामिनी द्वे कोपशीलायाः । वरारोहा "वरः आरोहो नितंबोऽस्याः"। मत्तकाशिनी मत्ता क्षीबेव काशते भाति । उपपदार्थः कर्ता प्रत्ययार्थस्य कर्तुरुपमानं कर्तर्युपमाने इति णिनिः। "मत्तकासिनी"। उत्तमा वरवर्णिनी "वरः वर्णोऽस्त्यस्याः" । चत्वारि गुणैरुत्कृष्टायाः स्त्रियाः। "यद्वा उत्तमेति न पर्यायः"। किंतु उत्तमा स्त्री सैतत्पर्याया ज्ञेयेति तदर्थः। "शीते सुखोष्णसर्वांगी ग्रीष्मे या सुखशीतला। भर्तृभक्ता च या नारी विज्ञेया वरवर्णिनीति रुद्रः" ॥४॥ या कृताभिषेका नृपस्त्री सा महिषीत्येकम्। अन्या अकृताभिषेका नृपस्त्रियो भोगिन्य इत्युच्यंते एकम् । पत्नी पाणिगृहीती

पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी ॥ ५ ॥
भार्या जायाऽथ पुंभूम्नि दाराः स्यात्तु कुटुंबिनी ॥
पुरंध्री सुचरित्रा तु सती साध्वी पतिव्रता ॥ ६ ॥
कृतसापत्निकाऽध्यूढाधिविन्नाथ स्वयंवरा ॥
पतिंवरा च वर्याऽथ कुलस्त्री कुलपालिका ॥ ७ ॥
कन्या कुमारी गौरी तु नग्निकाऽनागतार्तवा ॥

द्वितीया "द्वयोः पूरणी द्वितीया। द्वितीया तिथिगेहिन्योर्द्वितीयः पूरणे द्वयोरिति हेमचंद्रः।" सहधर्मिणी सह धर्मोऽस्ति यस्याः। पत्या सह कर्मस्वधिकारात्। सधर्मिणीत्यपि ॥ ५ ॥ भार्या जाया "जायतेऽस्याम्। जायायास्तद्धि जायात्वं यदस्यां जायते पतिरिति मनुः।" दाराः "दारयंति भ्रातॄन् दॄ विदारणे णिजंतः।" सप्त परिणीतायाः स्त्रियाः। तत्र दारशब्दो नित्यं पुंसि बहुवचनांतश्च। "दारशब्दष्टाबंतोऽपि। क्रोडा हारा तथा दारा त्रय एते यथाक्रमम्। क्रोडे हारे च दारेषु शब्दाः प्रोक्ता मनीषिभिरिति हेमचंद्रात्।" पाणिर्गृहीतोऽस्याः पाणिगृहीती ङीषंता। कुटुंबिनी कुटुंबमस्ति यस्याः सा। कुटुंबं पोष्यवर्गे चेत्यमरमाला। पुरंध्री "पुरंध्रिः" द्वे पतिपुत्रादिमत्याः। सुचरित्रा सती साध्वी पतिव्रता चत्वारि पतिसेवातत्परायाः ॥ ६ ॥ कृतसापत्निका अध्यूढा अधिविन्ना त्रीणि कृतानेकविवाहस्य पुंसो या प्रथमोढा स्त्री तस्याः। कृतं सापत्निकं सपत्नीभावोऽस्याः सा। "कृतसापत्नकेति पाठः।" स्वयंवरा पतिंवरा वर्या त्रीणि स्वेच्छया पतिवरणोद्युक्तायाः। स्वयं वृणुते स्वयंवरा। कुलस्त्री कुलपालिका द्वे कुलवत्याः ॥ ७ ॥ कन्या कुमारी द्वे प्रथमवयसि वर्तमानायाः। गौरी नग्निका अनागतार्तवा त्रीणि अदृष्टरजस्कायाः। अनागतं अप्राप्तं आर्तवं रजो यस्याः सा। अष्टवर्षा भवेद्गौरी दशमे नग्निका भवेदिति तस्या अवांतरभेदः। अष्टवर्षा भवेत्कन्या नववर्षा च रोहिणी ॥ दशवर्षा भवेद्गौरी चात ऊर्ध्वं रजस्वलेति स्मृतिवचनम्। यावत् षोडशसंख्यमब्दमुदिता बाला ततस्त्रिंशतं तावत्स्यात्तरुणीति बाणविशिखैः संख्या तु यावद्भवेत् ॥ सा प्रौढेत्यभिधीयते कविवरैर्वृद्धा तदूर्ध्वं स्मृता निंद्या कामकलाकलापविधिषु त्याज्या सदा कामिभिः ॥ बालेति गीयते नारी यावद्वर्षाणि षोडश ॥ श्यामा षोडशवार्षिकीति। गौरी त्वसंजातरजा इत्यप्युक्तं भवति। मध्यमा दृष्टरजाः द्वे प्रथमप्राप्तरजोयोगायाः। तरुणी

स्यान्मध्यमा दृष्टरजास्तरुणी युवतिः समे ॥ ८ ॥
समाः स्नुषाजनीवध्वश्चिरिंटी तु सुवासिनी ॥
इच्छावती कामुका स्याद्वृषस्यंती तु कामुकी ॥ ९ ॥
कांतार्थिनी तु या याति संकेतं साऽभिसारिका ॥
पुंश्चली धर्षिणी बंधक्यसती कुलटेत्वरी ॥ १० ॥
स्वैरिणी पांशुला च स्यादशिश्वी शिशुना विना ॥
अवीरा निष्पतिसुता विश्वस्ताविधवे समे ॥ ११ ॥

तृ प्लवनतरणयोः, त्रो रश्च लो वेत्यनन्। "तलुनी। तरुणतलुनशब्दौ यौवनवाचिनौ। वयसि प्रथमे इति ङीप्। तलूनः पवने यूनि युवत्यां तलुनी स्मृतेति मेदिनी।" युवतिः "युवतीति ङीषंतेति केचित्। यूनीति ङीषंतोऽन्यत्र" द्वे मध्यमवयसि वर्तमानायाः ॥ ८ ॥ स्नुषा जनी "जनिः" वधूः त्रयं पुत्रादिभार्यायाः। "वधूः पत्न्यां स्नुषानार्योः स्पृक्कासारिवयोरपि। नवपरिणीतायां चेति हैमात्। वधूरित्येकं नवोढायाः स्त्रिया अपि।" चिरिंटी "चिरंटी। चिरंटी तु सुवासिन्यां स्याद्द्वितीयवयःस्त्रियामिति विश्वप्रकाशः।" सुवासिनी द्वे किंचिल्लब्धयौवनायां परिणीतायाम्। सुष्ठु वसति सुवासिनी। "स्ववासिनीत्यपि पाठः। तत्र स्वेषु पित्रादिषु वस्तुं शीलमस्या इति विग्रहः। स्ववासिन्यां चिरिंटी स्याद्द्वितीयवयसि स्त्रियामिति रुद्रः"। इच्छावती कामुका द्वे यभनादीच्छावत्याः। वृषस्यंती वृषं नरं आत्मनः इच्छति। क्यचि सुगागमः शतृप्रत्ययः उगितश्चेति ङीप्। कामुकी द्वे "अश्ववृषवत्" मैथुनेच्छावत्याम् ॥ ९ ॥ या कांतार्थिनी भर्तुः संकेतस्थानं गच्छति साऽभिसारिका। यदुक्तम्। हित्वा लज्जाभये श्लिष्टा मदेन मदनेन या। अभिसारयते कांतं सा भवेदभिसारिकेति। एकम्। पुंश्चली पुंसो भर्तुः सकाशाच्चलति पुरुषांतरं गच्छति। धर्षिणी "धर्षणी कृषधातोरनिः कर्षणिः।" बंधकी असती कुलटा इत्वरी ॥ १० ॥ स्वैरिणी पांशुला अष्ट स्वैरिण्याः। या शिशुना रहिता सा अशिश्वी एकम्। निष्पतिसुता पतिपुत्ररहिता सा अवीरा एकम्। "पतिपुत्रवती वीरेति नाममाला।" विश्वस्ता विफलं श्वसिति स्म। श्वस प्राणने। "विश्वस्तो जातविश्वासो विश्वस्ता विधवा स्त्रियामिति विश्वः"। विधवा द्वे रंडायाः। पांशुलाऽथ स्यादित्यपि पाठः ॥ ११ ॥ आलिः सखी वयस्या त्रयं सख्याः।

आलिः सखी वयस्याऽथ पतिवत्नी सभर्तृका ॥
वृद्धा पलिक्नी प्राज्ञी तु प्रज्ञा प्राज्ञा तु धीमती ॥१२॥
शूद्री शूद्रस्य भार्या स्याच्छूद्रा तज्जातिरेव च ॥
आभीरी तु महाशूद्री जातिपुंयोगयोः समा ॥ १३ ॥
अर्याणी स्वयमर्या स्यात्क्षत्रिया क्षत्रियाण्यपि ॥
उपाध्यायाप्युपाध्यायी स्यादाचार्यापि च स्वतः॥ १४॥
आचार्यानी तु पुंयोगे स्यादर्यी क्षत्रियी तथा ॥
उपाध्यायान्युपाध्यायी पोटा स्त्रीपुंसलक्षणा ॥ १५ ॥

"आलिः सखी सेतुरालिरालिरावलिरिष्यत इति शाश्वतः ।" पतिवत्नी सभर्तृका द्वे जीवद्भर्तृकायाः । वृद्धा पलिक्नी । पलितं केशशौक्ल्यं अस्ति यस्याः । द्वे पक्वकेश्याम् । प्राज्ञी प्रज्ञा द्वे या यत्किमपि स्वयं प्रकर्षेण जानाति तस्याः । प्राज्ञा धीमती द्वे बुद्धिमत्याः ॥ १२ ॥ या शूद्रस्य भार्या सा विजातीयाऽपि शूद्रीत्युच्यते एकम् । तज्जातिः शूद्रजातिः "अन्यभार्यापि" शूद्रेत्युच्यते । आभीरी महाशूद्री द्वे गोपालिकायाः । जातिपुंयोगयोः महाशूद्रस्य जातौ महाशूद्रस्य स्त्रीत्येवंरूपं पुंयोगे च समा । उभयत्रापि नामद्वयं ङीष्प्रत्ययांतमेवेत्यर्थः ॥ १३ ॥ अर्याणी अर्या द्वे वैश्यजात्युत्पन्नायाः स्त्रियाः । स्वयं वैश्यजातिः भार्या तु यस्य कस्यचिदस्तु इत्यर्थो बोध्यः । एवं क्षत्रिया क्षत्रियाणी द्वे स्वयं क्षत्रियजातिः भार्या तु यस्य कस्यचित् । उपाध्याया उपाध्यायी द्वे स्वयं या अध्यापिका तस्याम् । उपेत्याधीयते यस्याः सकाशादित्युपाध्याया । पुराकल्पे तु नारीणां व्रतबंधनमिष्यते । अध्यापनं च वेदानां सावित्रीवचनं तथेति पाराशरमाधवीये यमः। तथा स्वतः स्वयं मंत्रव्याख्याकृदाचार्या स्यात् एकम् । त्रयमपि समानार्थमित्येके ॥१४॥ पुंयोगे आचार्यस्य स्त्रीत्येवंरूपेऽर्थे आचार्यानीत्येकम् । आचार्यादणत्वं चेति णत्वाभावः । तथा अर्यस्य स्त्रीत्यर्थे अर्यीत्येकम् । एवं क्षत्रियस्य स्त्रीत्यर्थे क्षत्रियी एकम् । उपाध्यायानी उपाध्यायस्य स्त्री उपाध्यायी द्वे उपाध्यायस्य भार्यायाम् । स्त्रीपुंसलक्षणा स्तनश्मश्रुरूपेण स्त्रीपुंसचिह्नेन युक्ता पोटेत्युच्यते ॥ १५ ॥ वीरपत्नी वीरः पतिर्यस्याः सा । वीरभार्या द्वे

वीरपत्नी वीरभार्या वीरमाता तु वीरसूः ॥
जातापत्या प्रजाता च प्रसूता च प्रसूतिका ॥ १६ ॥
स्त्री नग्निका कोटवी स्याद्दूतीसंचारिके समे ॥
कात्यायन्यर्धवृद्धा या काषायवसनाऽधवा ॥ १७ ॥
सैरंध्री परवेश्मस्था स्ववशा शिल्पकारिका ॥
असिक्नी स्यादवृद्धा या प्रेष्यांऽतःपुरचारिणी ॥ १८ ॥
वारस्त्री गणिका वेश्या रूपाजीवाऽथ सा जनैः ॥
सत्कृता वारमुख्या स्यात्कुट्टनी शंभली समे ॥ १९ ॥
विप्रश्निका त्वीक्षणिका दैवज्ञाऽथ रजस्वला ॥

वीरस्य भार्यायाः । वीरमाता वीरसूः द्वे वीरस्य मातरि । जातापत्या प्रजाता प्रसूता प्रसूतिका चत्वारि प्रसूतायाः ॥ १६ ॥ या नग्निका नग्ना स्त्री कोटवीत्येकम् । "कोट्टवीत्यपि" । दूती "बाहुलकात् क्तिन् दूतिः" संचारिका द्वे दूतिकायाः । संचारयति प्रापयति स्वामिसंदेशमिति संचारिका । अर्धवृद्धा काषायवस्त्राऽधवेति विशेषणत्रयविशिष्टा या सा कात्यायनीत्युच्यते एकम् । अर्धवृद्धेति धर्मप्रधानत्वादर्धवृद्धत्वेन युक्तेत्यर्थः ॥ १७ ॥ या परवेश्मस्था स्वतंत्रा केशप्रसाधनादिशिल्पकारिणी चेति विशेषणत्रयोपेता तस्यां सैरंध्रीति नामैकम् । "सैरिंध्रीतीकारमध्यपाठ इति रभसः । उक्तं तु कात्येन । चतुःषष्टिकलाभिज्ञा शीलरूपादिसेविनी । प्रसाधनोपचारज्ञा सैरंध्री परिकीर्तितेति ।" अवृद्धा प्रेष्यांऽतःपुरचारिणीति च विशेषणत्रयोपेता या साऽसिक्नी स्यादित्येकम् । प्रेष्यते राज्ञीभिरिति प्रेष्या ॥ १८ ॥ वारस्त्री गणिका वेश्या "मूर्धन्यमध्यपाठोऽपि" । रूपाजीवा चत्वारि वेश्यायाः । "वारस्य वृंदस्य स्त्री वारस्त्री ।" रूपमाजीवो जीविका यस्याः सा रूपाजीवा । सा वेश्या गुणवत्त्वाज्जनैः सत्कृता सती वारमुख्या स्यात् एकम् । "वारे वेश्यावृंदे मुख्या वारमुख्या" । कुट्टनी शंभली । संभलीति दंत्यादिरपि । द्वे परनारीं पुंसा योजयित्र्याम् । "शं सुखं भलते वदतीति शंभली" ॥ १९ ॥ विप्रश्निका ईक्षणिका दैवज्ञा त्रयं शुभाशुभनिरूपिण्याः ।

स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि ॥ २० ॥
ऋतुमत्यप्युदक्यापि स्याद्रजः पुष्पमार्तवम् ॥
श्रद्धालुर्दोहदवती निष्कला विगतार्तवा ॥ २१ ॥
आपन्नसत्त्वा स्याद्गुर्विण्यंतर्वत्नी च गर्भिणी ॥
गणिकादेस्तु गाणिक्यं गार्भिणं यौवतं गणे ॥ २२ ॥
पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषुः पतिः ॥

रजस्वला स्त्रीधर्मिणी अविः आत्रेयी मलिनी पुष्पवती ॥ २० ॥ ऋतुमती उदक्या अष्ट रजस्वलायाः । द्वादशाद्वत्सरादूर्ध्वमापंचाशत्समाः स्त्रियाः । मासि मासि भगद्वारात्प्रकृत्यैवार्तवं स्रवेत् इति वैद्यशास्त्रे । द्वादशाब्दे व्यतीते तु यदि पुष्पं बहिर्न हि । अंतः पुष्पं भवत्येव पनसोदुंबरादिवत् इति वात्स्यायनः । स्त्रीधर्मो रजः सोऽस्ति अस्याः सा स्त्रीधर्मिणी । अविं स्त्रीधर्मिणीं विद्यादिति काद्यः । " अवीति दीर्घांतापि । आत्रेयीवदगम्यत्वादात्रेयी । आत्रेयिकेत्यन्यत्र । रजः पुष्पं आर्तवं त्रीणि स्त्रीरजसः । ऋतुरेवार्तवं प्रज्ञाद्यण् । ऋतुर्नाम शोणितदर्शनोपलक्षितो गर्भधारणयोग्यः स्त्रीणामवस्थाविशेष उच्यते " । श्रद्धालुः दोहदवती द्वे गर्भवशादन्नादिविशेषाभिलाषिण्याः । " दोहदं गर्भिण्यभिलाषोऽस्त्यस्याः " । निष्कला " निष्कली " विगतार्तवा द्वे हीनरजस्कायाः । " निर्गतं कलं शुक्रमस्याः निष्कला " ॥ २१ ॥ आपन्नसत्त्वा आपन्नं सत्त्वं जंतुरनयाऽस्यां वा । गुर्विणी अंतर्वत्नी गर्भिणी चत्वारि गर्भिण्याः । " अंतरस्त्यस्यां गर्भोऽतर्वत्नी । " गणिकादेर्गणे समूहे गाणिक्यादि । यथा गणिकानां समूहो गाणिक्यम् । गर्भिणीनां समूहो गार्भिणम् । युवतीनां समूहो यौवतम् । एकैकम् ॥ २२ ॥ या द्विरूढा द्विवारं वृता तत्र पुनर्भूः दिधिषूः " दिधीषूः दिधिषुरपि । " द्वे । पूर्वमेकस्य भूत्वा पुनरन्यस्य भवतीति पुनर्भूः । " अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनरित्युक्तम् । मनुस्तु । ज्येष्ठायां यद्यनूढायां कन्यायामूह्यतेऽनुजा । सा चाग्रेदिधिषुर्ज्ञेया पूर्वा तु दिधिषुर्मतेत्याह ।" दिधिष्वौ । तस्या द्विरूढायाः पतिर्दिधिषुरित्युच्यते एकम् । " पुनर्भूः पतिरुक्तश्च पुनर्भूर्दिधिषुस्तथेत्येषोऽप्युदंत इति स्वामी ।" सा पुनर्भूर्यस्य द्विजस्य कुटुंबिनी कुटुंबं पुत्रादिपोष्यवर्गस्तद्वती सोऽग्रेदिधिषूरित्येकम् । " अग्रेदिधिषुरिति ह्रस्वांतोऽपि ।

स तु द्विजोऽग्रेदिधिषूः सैव यस्य कुटुंबिनी ॥ २३ ॥
कानीनः कन्यकाजातः सुतोऽथ सुभगासुतः ॥
सौभागिनेयः स्यात्पारस्त्रैणेयस्तु परस्त्रियाः ॥ २४ ॥
पैतृष्वसेयः स्यात्पैतृष्वस्रीयश्च पितृष्वसुः ॥
सुतो मातृष्वसुश्चैवं वैमात्रेयो विमातृजः ॥ २५ ॥
अथ बांधकिनेयः स्याद्बंधुलश्चासतीसुतः ॥
कौलटेरः कौलटेयो भिक्षुकी तु सती यदि ॥ २६ ॥
तदा कौलटिनेयोऽस्याः कौलटेयोऽपि चात्मजः ॥
आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी ॥ २७ ॥
आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे ॥

दिधिषूः परपूर्वाग्रेदिधिषुस्तत्पुरंध्रिक इति नाममाला ।" द्विजशब्देन वर्णत्रयस्यापि ग्रहणम् ॥ २३ ॥ कन्यकाया अनूढाया जातः सुतः कानीन इत्युच्यते । कर्णः व्यासश्च । एकम् । सुभगासुतः सौभागिनेयः द्वे सुभगापुत्रस्य । यः परस्त्रियाः सुतः पारस्त्रैणेयः एकम् ॥ २४ ॥ पितृष्वसुः पितृभगिन्याः सुतः पैतृष्वसेयः पैतृष्वस्रीयः द्वे । मातृष्वसुः सुतोऽप्येवम् । यथा मातृष्वसेयः मातृष्वस्रीयः द्वे । विमाता मातुः सपत्नी तस्याः पुत्रो वैमात्रेय इत्युच्यते एकम् । "वैमात्रोऽप्यन्यत्र" ॥ २५ ॥ बांधकिनेयः बंधुलः असतीसुतः कौलटेरः कौलटेयः पंच कुलटापुत्रस्य ॥ २६ ॥ यदि तु सती भिक्षुकी भिक्षार्थिनी तर्हि तस्या आत्मजः कौलटिनेयः कौलटेयः द्वे । कुलानि भिक्षार्थं अटति न तु जारार्थं तस्याः कुलटायाः पुत्रः कौलटिनेयः । इतरस्याः कौलटेर इति भेदः । कुलं जनपदे गृह इति विश्वः । आत्मजः तनयः सूनुः सुतः पुत्रः पंचकं पुत्रस्य । "पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः । तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवेति ।" अमी आत्मजादयः सर्वे स्त्रियां वर्तमानाः ॥ २७ ॥ दुहितरं आहुः । यथा आत्मजा तनया सूनुः सुता पुत्री दुहितेत्यपि ऋदंतम् । अपत्यं तोकं द्वे तयोः समे पुत्रे दुहितरि च क्लीबलिंगे एवेत्यर्थः । औरसः उरस्यः "औरस्य इत्यपि" द्वे स्वजाते सवर्णायामूढायां स्वस्माज्जाते पुत्रे न तु दत्त्रिमादौ । तातः जनकः पिता त्रीणि

स्वजाते त्वौरसोरस्यौ तातस्तु जनकः पिता ॥ २८ ॥
जनयित्री प्रसूर्माता जननी भगिनी स्वसा ॥
ननांदा तु स्वसा पत्युर्नप्त्री पौत्री सुतात्मजा ॥ २९ ॥
भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् ॥
प्रजावती भ्रातृजाया मातुलानी तु मातुली ॥ ३० ॥
पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः ॥
पितुर्भ्राता पितृव्यः स्यान्मातुर्भ्राता तु मातुलः ॥ ३१ ॥
श्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ ॥
स्वस्रीयो भागिनेयः स्याज्जामाता दुहितुः पतिः ॥३२॥
पितामहः पितृपिता तत्पिता प्रपितामहः ॥

पितुः ॥ २८ ॥ जनयित्री । "अंतर्भावितण्यर्थाज्जनिः" । प्रसूः माता जननी "जननिः" चत्वारि जनन्याः । भगिनी स्वसा द्वे स्वसुः । या पत्युः स्वसा सा ननांदेत्येकम् । ऋदंतमिदम् । "ननंदेत्यपि । ननांदा तु स्वसा पत्युर्ननंदा नंदिनी च सेति रभसः" । नप्त्री पौत्री द्वे सुतस्य सुतायाश्चात्मजा तम ॥ २९ ॥ भ्रातृवर्गस्य भार्याः परस्परं यातरः स्युः एकम् । प्रजावती भ्रातृजाया द्वे भ्रातुर्जायायाम् । मातुलानी मातुली "मातुलेयपि" द्वे मातुलभार्यायाः ॥ ३० ॥ पत्युः पत्न्याश्च प्रसूर्माता श्वश्रूरित्युच्यते एकम् । तयोः पतिपत्न्योः पिता श्वशुर इत्युच्यते । "श्वश्रूशिशुश्वशुरा इति श्वभेदाद्धितालव्याः ।" एकम् । पितुः भ्राता पितृव्यः एकम् । मातुः भ्राता मातुल इत्युच्यते एकम् ॥ ३१ ॥ पत्न्याः भ्रातरः श्याला इत्येकम् । श्यालशब्दस्तालव्यादिर्दंत्यादिर्वा । "उच्छिष्टमधुपर्कवाची श्याशब्दः । श्यां लातीति श्यालः ।" स्वामिनः पत्युर्भ्रातरि कनिष्ठे देवा देवरः । देवृशब्दस्य देवा देवरौ इत्यादि । "देवृदेवरदेवान इति शब्दार्णवादन्यत्र नांतोऽपि देवेति ।" स्वस्रीयः "घे कृते स्वस्रियः । ढकि स्वस्रेयः" भागिनेयः द्वे भगिन्याः पुत्रे । दुहितुः पतिः जामाता स्यात् । एकम् ॥ ३२ ॥ पितामहः पितृपिता द्वे पितुः पितरि । तस्य पितामहस्य पिता प्रपितामह इत्येकम् । एवं मातुः पित्रादौ मातामहादिः । यथा मातुः पिता मातामहः एकम् । तत्पिता

मातुर्मातामहाद्येवं सपिण्डास्तु सनाभयः ॥ ३३ ॥
समानोदर्यसोदर्यसगर्भ्यसहजाः समाः ॥
सगोत्रबांधवज्ञातिबंधुस्वस्वजनाः समाः ॥ ३४ ॥
ज्ञातेयं बंधुता तेषां क्रमाद्भावसमूहयोः ॥
धवः प्रियः पतिर्भर्ता जारस्तूपपतिः समौ ॥ ३५ ॥
अमृते जारजः कुण्डो मृते भर्तरि गोलकः ॥
भ्रात्रीयो भ्रातृजो भ्रातृभगिन्यौ भ्रातरावुभौ ॥ ३६ ॥
मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ ॥

प्रमातामहः एकम् । सपिण्डाः सनाभयः द्वे सप्तपुरुषावधिज्ञातिषु । सपिण्डता तु पुरुषे सप्तमे विनिवर्तते इति स्मृतेः । "समान एकः पिण्डो देहो मूलपुरुषो निर्वाप्यो वाऽस्य । सह पिण्डेन वर्तत इति वा सपिण्डः । समानो नाभिर्मूलपुरुषोऽस्य सनाभिः" ॥ ३३ ॥ समानोदर्यः सोदर्यः सगर्भ्यः सहजः चत्वारि एकोदरस्य भ्रातुः । सगोत्रः बांधवः ज्ञातिः बंधुः स्वः स्वजनः षट् सगोत्रस्य । समानमेकं गोत्रमस्य सगोत्रः । अत्र स्वशब्दस्य स्वरूपं स्वः स्वौ स्वाः इत्यादि ॥ ३४ ॥ तेषां भावसमूहयोः क्रमात् ज्ञातेयं बंधुता स्यात् । यथा ज्ञातीनां भावो ज्ञातेयं एकम् । बंधूनां समूहो बंधुता एकम् । धवः प्रियः पतिः भर्ता चत्वारि पत्युः । जारः उपपतिः । द्वे मुख्यादन्यस्य भर्तुः । "उपमितः पत्या, उपसृष्टः पतिरमेन वा उपपतिः । प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपश्चेति समासः" ॥ ३५ ॥ अमृते भर्तरि जाराज्जातः कुण्ड इत्युच्यते एकम् । "कुण्ड्यते कुलमनेन कुण्डः । कुडि दाहे । स्त्रियां तु कुण्डी । कुण्डमग्न्यालये मानभेदे देवजलाशये । कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमान् ।" मृते भर्तरि जाराज्जातो गोलक इत्येकम् । भ्रात्रीयः "भ्रातृव्यः" भ्रातृजः द्वे भ्रातृपुत्रस्य । भ्रातृभगिन्यौ भ्रातराविति स्यातां एकम् । उभाविति सहोक्तौ सत्यामिति सूचनार्थम् । भ्राता च स्वसा च भ्रातरौ । भ्रातृपुत्रौ स्वसृदुहितृभ्यामित्येकशेषः ॥ ३६ ॥ मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ चत्वारि द्विवचनांतानि मात्रा सहोक्ते पितरि । माता च पिता च पितरौ । पिता मात्रेत्येकशेषः । मातरपितरावित्यत्र ऋकारयोररङ्भावो निपात्यते । तेन मातरपितराभ्यामिति प्रयोग

श्वश्रूश्वशुरौ श्वशुरौ पुत्रौ पुत्रश्च दुहिता च ॥ ३७ ॥
दंपती जंपती जायापती भार्यापती च तौ ॥
गर्भाशयो जरायुः स्यादुल्बं च कललोऽस्त्रियाम् ॥३८॥
सूतिमासो वैजननो गर्भो भ्रूण इमौ समौ ॥
तृतीयाप्रकृतिः षंढः क्लीबः पण्डो नपुंसके ॥ ३९ ॥
शिशुत्वं शैशवं बाल्यं तारुण्यं यौवनं समे ॥
स्यात्स्थाविरं तु वृद्धत्वं वृद्धसंघेऽपि वार्धकम् ॥ ४० ॥

इति न्यासः। श्वश्रूश्वशुरौ श्वशुरौ द्वे सहोक्तयोः श्वश्रूश्वशुरयोः। पुत्रश्च दुहिता च एकशेषे पुत्रौ स्यातामित्यर्थः । एकम् ॥ ३७ ॥ दंपती जंपती जायापती भार्यापती चत्वारि दंपत्योः । जायाशब्दस्य जंभावो दंभावश्च वा निपात्यते। ताविसनेनैते शब्दा द्विवचनांताः पुंसीति सूचितम् । "शाल्मली मैथिली मैत्री दंपती जंपती च सेति वाचस्पतौ स्त्रीत्वमप्युक्तम् ।" गर्भाशयः जरायुः उल्बं त्रीणि येन वेष्टितो गर्भः कुक्षौ तिष्ठति तस्य चर्मणः । गर्भ आशेतेऽत्र गर्भाशयः । जरायुरुदंतः । कलल इत्येकम् । शुक्रशोणितसंनिपातस्य प्रसिद्धत्वादस्य पर्यायो नोक्तः किंतु अस्त्रीत्वमात्रं विधीयते। उल्बपर्यायः कलल इत्येके । यदाहुः । तदुल्बं कललं च तदिति ॥ ३८ ॥ सूतिमासः वैजननः द्वे प्रसवमासस्य । यत्र नवमे वा दशमे मासि प्रसूयते तस्येत्यर्थः । "विजायतेऽस्मिन्विजननः" विजनन एव वैजननः। स्वार्थेऽण्। गर्भः भ्रूणः द्वे कुक्षिस्थस्य प्राणिनः। तृतीयाप्रकृतिः षंढः क्लीबः पण्डः नपुंसकः पंच नपुंसकस्य। तृतीयाप्रकृतिरिति षडक्षरं नाम। संज्ञापूरण्योश्चेति निषेधान्न पुंवद्भावः । "तृतीयप्रकृतिरित्यपि । नञ्घटितमनित्यमिति न्यायेन उक्तनिषेधानित्यत्वात्पुंवद्भावः । षंढः स्यात्पुंसि गोपतौ । आकृष्टाण्डे वर्षवरे तृतीयप्रकृतावपीति कोशांतरात् ।" तत्र प्रथमा प्रकृतिः स्त्री । द्वितीया पुमान् । तृतीया क्लीब इति । षंढो मूर्द्धन्यादिस्तालव्यादिर्वा ॥ ३९ ॥ शिशुत्वं शैशवं बाल्यं त्रयं बालत्वे । तारुण्यं यौवनं द्वे । स्थाविरं वृद्धत्वं वार्धकम् "वार्धक्यमित्यपि। वार्धक्यं वार्धके वृद्धसंघाते वृद्धकर्मणीति विश्वः ।" त्रीणि वृद्धत्वे । तत्र वार्धकमित्येकं वृद्धसंघेऽपि वृद्धानां समूहेऽपि ॥ ४० ॥ केशादौ जरसा यत् शौक्ल्यं धवलिमा तत्पलितमुच्यते । आदिना लोम्नां ग्रहणम् । विस्रसा जरा

पलितं जरसा शौक्ल्यं केशादौ विस्रसा जरा ॥
स्यादुत्तानशया डिंभा स्तनपा च स्तनंधयी ॥ ४१ ॥
बालस्तु स्यान्माणवको वयस्यँस्तरुणो युवा ॥
प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ॥ ४२ ॥
वर्षीयान्दशमी ज्यायान्पूर्वजस्त्वग्रियोऽग्रजः ॥
जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः ॥ ४३ ॥
अमासो दुर्बलश्छांतो बलवान्मांसलोंऽसलः ॥
तुंदिलस्तुंदिभस्तुंदी बृहत्कुक्षिः पिचंडलः ॥ ४४ ॥

द्वे जरायाः । विस्रस्यतेऽनया विस्रसा । जीर्यत्यंगमनया जरा । उत्तानशया डिंभा स्तनपा स्तनंधयी चत्वारि स्तनंधयस्य । त्रिषु वक्ष्यंते । स्त्रीत्वेन निर्देशः स्त्रीत्वे रूपभेदप्रदर्शनार्थः । डिंभशब्दः सिंहादिवर्ग उक्तोऽपि स्त्रियां टाबंतत्वप्रदर्शनाय पुनरिहोक्तः ॥ ४१ ॥ बालः माणवकः द्वे बालस्य । आषोडशाद्बालः । वयस्यः । वयसि तिष्ठतीति । " वयस्थ इत्यपि " । वयः पक्षिणि बाल्यादौ वयो यौवनमात्रक इति विश्वः । तरुणः युवा त्रयं यूनः । प्रवयाः स्थविरः वृद्धः जीनः जीर्णः जरन् षट्कं वृद्धस्य । प्रवयसौ । जरंतौ ॥ ४२ ॥ वर्षीयान् दशमी ज्यायान् त्रीण्यतिवृद्धस्य । अतिशयेन वृद्धो वर्षीयान् वर्षीयांसौ । " दशमोऽवस्थाविशेषोऽस्यास्तीति दशमी । वयसि पूरणादिनिः । " दशमिनौ । ज्यायांसौ । पूर्वजः अग्रियः " अग्रीयः " अग्रजः त्रीणि ज्येष्ठभ्रातुः । " पूर्वस्मिन्काले जातः पूर्वजः । " जघन्यजः कनिष्ठः " कनीयानित्यपि " यवीयान् " यविष्ठः अतिशायन इतीष्ठन् । " अवरजः अनुजः पंचकं कनिष्ठभ्रातुः । " जघन्येऽवरकाले जातः जघन्यजः । अवरस्मिन्काले जातः अवरजः । " ॥ ४३ ॥ अमांसः दुर्बलः छातः त्रीणि अबलस्य । छातश्चवर्गादिः । छो छेदने । शात इति पाठः । बलवान् मांसलः अंसलः त्रीणि बलवतः । " अंसो बलमस्यास्तीत्यंसलः । " तुंदिलः " तुंडिलः । तुंदिकः तुंदितः । " तुंदिभः " तुंडिभः " तुंदी " तुंडी " बृहत्कुक्षिः पिचंडिलः " पिचिंडिलः " पंच बृहदुदरस्य । तुंदमस्यास्तीति तुंदिलः । तुंदादिभ्य इलच् मत्वर्थे तुंदिवलि इति भप्रत्ययश्च । तुंडिभौ ॥४४॥

अवटीटोऽवनाटश्चावभ्रटो नतनासिके ॥
केशवः केशिकः केशी बलिनो बलिभः समौ ॥४५॥
विकलांगस्त्वपोगंडः खर्वो ह्रस्वश्च वामनः ॥
खरणाः स्यात्खरणसो विग्रस्तु गतनासिकः ॥ ४६ ॥
खुरणाः स्यात्खुरणसः प्रज्ञुः प्रगतजानुकः ॥
ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्संज्ञुः संहतजानुकः ॥ ४७ ॥
स्यादेडे बधिरः कुब्जे गडुलः कुकरे कुणिः ॥

अवटीटः अवनाटः अवभ्रटः नतनासिकः चत्वारि चिपिटनासिकस्य । विग्रहस्तु नासिकायाः नतं अवनाटमित्यादि । तद्युक्तवात् पुरुषोऽवटीटः । अर्श-आद्यच् । केशवः केशिकः "केशवान्" केशी त्रयं प्रशस्तकेशस्य । प्रशस्ताः केशाः संत्यस्य केशवः । बलिनः बलिभः द्वे जरया श्लथचर्मणः । बलिस्त्वक्संकोचोऽस्ति यस्य स बलिनः ॥ ४५ ॥ विकलांगः अपोगंडः द्वे निसर्गतो न्यूनावयवस्य । अपकृष्टं गच्छतीत्यपोगंडः । पृषोदरादिः । पौगंड एकदेशोऽस्य पोगंडः पौगंडश्चेत्यपि । पोगंडो विकलांगकः इति रत्नकोशः । "पौगंडो विकलांगः स्यादिति हलायुधश्च।" खर्वः ह्रस्वः वामनः त्रयं ह्रस्वस्य "खुजा इति ख्यातस्य ।" खरणाः खरणसः द्वे तीक्ष्णनासिकस्य "खरळनाकील इति ख्यातस्य ।" खरणाः सांतः । विग्रः "विख्रः विख्नुः विख्यः। विगता नासिका यस्येति विग्रहः । नासिकाशब्दस्य ग्रादेशः ख्यश्चेति । विग्रो विख्नुर्विनासिक इति रभसः ।" गतनासिकः द्वे गतनासिकस्य "नकटा इति ख्यातस्य" ॥ ४६ ॥ खुरणाः सांतः । खुरणसः अदंतः द्वे विकटनासिकस्य । खुरः शफं तद्वन्नासिकाऽस्य । खुरणसौ । प्रज्ञुः "प्रज्ञः" प्रगतजानुकः प्रगते विरले जानुनी यस्येति विग्रहः । शेषे कप् । द्वे यस्य जान्वोर्महदंतरालं वर्तते तस्य "फेंगडा इति ख्यातस्य ।" ऊर्ध्वज्ञुः "ऊर्ध्वज्ञः" ऊर्ध्वजानुः द्वे तिष्ठतो यस्य जानुनी ऊर्ध्वे भवतस्तस्य । संज्ञुः "संज्ञः" संहतजानुकः द्वे संलग्नजानुकस्य । "प्रज्ञुः प्रगतजानुः स्यात्प्रज्ञोऽप्यत्रैव दृश्यते । संज्ञुः संहतजानौ च भवेत्संज्ञोऽपि तत्र हि । ऊर्ध्वज्ञुरूर्ध्वजानुः स्यादूर्ध्वज्ञोऽप्यूर्ध्वजानुक इति साहसांकः" ॥ ४७ ॥ एडः बधिरः द्वे श्रवणेंद्रियहीनस्य "बहिरा इति ख्यातस्य ।" कुब्जः "न्युब्जः । कुब्जो वृक्षभेदे ना

१ बवयोरभेदात् वलिनः वलिभः—इत्यपि बोध्यम् ॥

पृश्निरल्पतनौ श्रोणः पंगौ मुण्डस्तु मुण्डिते ॥ ४८ ॥
वलिरः केकरे खोडे खंजस्त्रिषु जरावराः ॥
जडुलः कालकः पिप्लुस्तिलकस्तिलकालकः ॥ ४९ ॥
अनामयं स्यादारोग्यं चिकित्सा रुक्प्रतिक्रिया ॥
भेषजौषधभैषज्यान्यगदो जायुरित्यपि ॥ ५० ॥
स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः ॥
क्षयः शोषश्च यक्ष्मा च प्रतिश्यायस्तु पीनसः ॥ ५१ ॥

न्युब्जः स्याद्वाच्यलिंगक इति मेदिनी ।" गडुलः "गडुरः । गडुः पृष्ठगडे कुब्जे इति मेदिन्याम् ।" द्वे कुब्जस्य "कुबडा इति ख्यातस्य ।" कुकरः कुत्सितौ करौ यस्य सः । कुणिः "कूणिः । निसर्गतः कूणिपंगुपौगंडा इति नाममाला ।" द्वे रोगादिना दूषितकरस्य । पृश्निः "पृष्णिः" अल्पतनुः द्वे अल्पा तनुर्यस्य तस्य अमानुषप्रायस्य । श्रोणः पंगुः द्वे जंघाविकलस्य । मुण्डः मुण्डितः द्वे कृतवपनस्य ॥ ४८ ॥ वलिरः केकरः द्वे नेत्रवियुक्तस्य "काणा, कैरा, तिरवा इति ख्यातस्य ।" के मूर्ध्नि कर्तुं शीलमस्येति केकरः खोडः "खोरः खोलः । अथ खंजके खोडखोरावीति रभसः ।" खंजः द्वे मतिविकलस्य "लंगडा इति ख्यातस्य ।" त्रिष्विति । जरावराः जराशब्दादवराः अर्वाक्पठिताः उत्तानशयाद्याः खंजांतास्त्रिषु वाच्यलिंगा इत्यर्थः । जडुलः "जठुलः" कालकः पिप्लुः त्रयं कृष्णवर्णस्य देहगतचिह्न-विशेषस्य "लासें इति ख्यातस्य ।" तिलकः तिलकालकः द्वे आकृतितो वर्णतश्च कृष्णतिलतुल्यस्य देहगतचिह्नस्य । तिल इव कालकः ॥ ४९ ॥ अनामयं आरोग्यं द्वे रोगाभावस्य । "आमयस्याभावः अनामयम् । अर्थाभावेऽव्ययीभावः ।" चिकित्सा रुक्प्रतिक्रिया द्वे रोगप्रतीकारस्य । "रुजः प्रतिक्रिया निरसनं रुक्प्रतिक्रिया ।" भेषजं औषधं भैषज्यं "भेषजं भेषं रोगं जयति भेषजम् ।" अगदः जायुः पंचौषधस्य । अगदसाहचर्याज्जायु-रुदंतः पुंसि ॥ ५० ॥ रुक् रुजा उपतापः रोगः व्याधिः गदः आमयः सप्त रोगमात्रस्य । तत्र रुक् जकारांता । रुजा टाबंता । उभे स्त्रियौ । क्षयः शोषः यक्ष्मा त्रीणि क्षयरोगस्य । प्रतिश्यायः पीनसः द्वे पीनसरोगस्य पडसें इति ख्यातस्य । अयं मुहुर्नासाजलस्रावी । "आपीनसः प्रतिश्या स्यादिति रभ-

स्त्री क्षुत् क्षुतं क्षवः पुंसि कासस्तु क्षवथुः पुमान् ॥
शोफस्तु श्वयथुः शोथः पादस्फोटो विपादिका ॥ ५२ ॥
किलाससिध्मे कच्छ्वां तु पामपामे विचर्चिका ॥
कण्डूः खर्जूश्च कण्डूया विस्फोटः पिटकः स्त्रियाम् ॥ ५३ ॥
व्रणो स्त्रियामीर्ममरुः क्लीबे नाडीव्रणः पुमान् ॥
कोठो मण्डलकं कुष्ठश्वित्रे दुर्नामकार्शसी ॥ ५४ ॥
आनाहस्तु निबंधः स्याद्ग्रहणीरुक् प्रवाहिका ॥

सात् प्रतिश्येत्यपि नाम" ॥ ५१ ॥ क्षुत् क्षुतं क्षवः त्रीणि क्षुतः शिंकेति ख्यातायाः । कासः क्षवथुः द्वे कासरोगस्य "खोकला इति ख्यातस्य ।" शोफः श्वयथुः शोथः त्रीणि शोथस्य "सूज इति ख्यातस्य" । पादस्फोटः विपादिका द्वे पादस्फोटस्य "खोंटा फुटण्याचा रोग इति ख्यातस्य" ॥ ५२ ॥ किलासं सिध्मं द्वे सिध्मस्य शिबें "श्वेतकुष्ठ" इति ख्यातस्य । कच्छूः पामा पामा विचर्चिका चतुष्कं स्त्रीलिंगं खर्जूविशेषस्य । "ओली खरूज" इति ख्यातस्य । अत्र पामेत्येकं नांतम् । पामानौ । अपरं टाबंतम् । पामे । कण्डूः "कण्डुः । खर्जूः खर्जूरी कीटकण्डुष्विति हैमः ।" खर्जूः कण्डूया त्रयं स्त्रीलिंगं खर्ज्वाः "सुकी खरूज इति ख्यातायाः ।" विस्फोटः पिटकः । "विस्फोटा वटिका स्त्रियामिसमरमालायां । वकारादिरपि विटिकेति ।" द्वे फोड इति ख्यातस्य । स्त्रियां तु पिटका क्षिपकावत् ॥ ५३ ॥ व्रणः ईर्मं अरुः त्रीणि व्रणस्य । ईर्मे । अरुषी । यो व्रणः सदा गलति तत्र नाडीव्रण इत्येकम् । पुमानिति पुंस्त्वावधारणार्थं निर्देशः । कोठः मण्डलकं कुष्ठं श्वित्रं चत्वारि कुष्ठस्य । कोठादिद्वयं मण्डलाकृतिकुष्ठस्य "गजकर्ण इति प्रसिद्धस्य ।" कुष्ठादिद्वयं श्वेतकुष्ठस्येत्येके । दुर्नामकं अर्शः द्वे अर्शोरोगस्य "मूळव्याध, अर्श" इति ख्यातस्य । "अर्शमिति क्लीबमप्यन्यत्र" ॥ ५४ ॥ आनाहः निबंधः द्वे मलमूत्रनिरोधस्य "मलबद्धरोग इति ख्यातस्य ।" ग्रहणीरुक् प्रवाहिका द्वे संग्रहणीरोगस्य । प्रकर्षेण वहति बहु स्रवति गुदमस्यां सा प्रवाहिका । मलप्रवहणं प्रवाहिकेति स्वामी । "प्रवाहिका रुक् रोगः ग्रहणी स्यादित्यन्वयो वा । ग्रहणिरितीकारह्रस्वोऽपि ।" प्रच्छर्दिका वमिः

प्रच्छर्दिका वमिश्च स्त्री पुमांस्तु वमथुः समाः ॥ ५५ ॥
व्याधिभेदा विद्रधिः स्त्री ज्वरमेहभगंदराः ॥
"श्लीपदं पादवल्मीकं केशघ्नस्त्विंद्रलुप्तकः ॥" (१)
अश्मरी मूत्रकृच्छ्रं स्यात्पूर्वे शुक्रावधेस्त्रिषु ॥ ५६ ॥
रोगहार्यगदंकारो भिषग्वैद्यौ चिकित्सके ॥
वार्तो निरामयः कल्य उल्लाघो निर्गतो गदात् ॥ ५७ ॥
ग्लानग्लास्नू आमयावी विकृतो व्याधितोऽपटुः ॥
आतुरोऽभ्यमितोऽभ्यांतः समौ पामनकच्छुरौ ॥ ५८ ॥

"वमी वम इति पुंलिंगोऽपि" वमथुः त्रीणि वमनरोगस्य । तत्राद्यं द्वयं स्त्रियाम् । वमथुः पुंसीत्यर्थः । समाः समानार्थाः ॥ ५५ ॥ अथ व्याधिभेदा वक्ष्यंते । विद्रधिरुदरादौ गण्डभेदः । विद्रं दधातीति विद्रधिः स्त्रियाम् । "आदिशब्देन कपालकर्णप्रमेहानां पिटका ज्ञेयाः ।" ज्वरः प्रसिद्धः । मेहति मूत्रयतेऽनेन मेहः । स च रक्तमेहः शुभ्रमेह इत्यादिभेदेन बहुविधः । भगंदरो गुह्यसमीपे विस्फोटविशेषः । "श्लीपदं पादवल्मीकम् । पादयोः वल्मीकमिव रोग उत्पद्यते । द्वयं श्लीपदरोगस्य वारूळ इति ख्यातस्य । केशघ्नः इंद्रलुप्तकः द्वयं मस्तककेशरोगस्य चाई इति प्रसिद्धस्य ।" अश्मरी मूत्रकृच्छ्रं द्वे अश्मर्याः । अश्माकारं शुक्रं राति ददातीत्यश्मरी । स्यादित्यनेन मूत्रकृच्छ्रमित्यश्मर्याः पर्याय इति सूचितम् । मूत्रविघ्नमात्रे मूत्रकृच्छ्रमिति नायमश्मर्याः पर्याय इति केचित् । इतः परं शुक्रावधेः वक्ष्यमाणात् शुक्रशब्दात्पूर्वे मूर्छितांतास्त्रिषु वाच्यलिंगा इत्यर्थः ॥ ५६ ॥ रोगहारी अगदंकारः भिषक् वैद्यः चिकित्सकः पंच वैद्यस्य । रोगहारिणौ । भिषजौ । वार्तः निरामयः कल्यः त्रीणि रोगरहितस्य । कल्यस्तालव्यांतः । "कल्यं प्रभाते मधुनि सज्जे दक्षे निरामये । कल्या कल्याणवाचि स्यादिति हैमः ।" उल्लाघ इत्येकं रोगान्मुक्तस्य । अयमपि पूर्वस्यैव पर्याय इत्येके ॥ ५७ ॥ ग्लानः ग्लास्नुः द्वे रोगादिवशात् हर्षरहितस्य । आमयावी विकृतः व्याधितः अपटुः आतुरः अभ्यमितः अभ्यांतः सप्तकं रोगिणः । पामनः कच्छुरः द्वे पामायुक्तस्य ॥ ५८ ॥ दद्रुणः "दद्रूणः दर्द्रुणः दर्द्रूणः" दद्रुरोगी द्वे दद्रुयुक्तस्य ।

१ इदमर्धं तालपत्रपुस्तकेऽस्ति वा नास्ति वेति न निश्चीयते, तत्पत्रस्यातिशैथिल्यात् ॥

दद्रुणो दद्रुरोगी स्यादर्शोरोगयुतोऽर्शसः ॥
वातकी वातरोगी स्यात्सातिसारोऽतिसारकी ॥५९॥
स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेऽक्ष्णि चाप्यमी ॥
उन्मत्त उन्मादवति श्लेष्मलः श्लेष्मणः कफी ॥ ६० ॥
न्युब्जो भुग्ने रुजा वृद्धनाभौ तुंदिलतुंदिभौ ॥
किलासी सिध्मलोऽधोऽदृक् मूर्छाले मूर्तमूर्छितौ ॥ ६१ ॥
शुक्रं तेजोरेतसी च बीजवीर्येंद्रियाणि च ॥
मायुः पित्तं कफः श्लेष्मा स्त्रियां तु त्वगसृग्धरा ॥६२॥

दद्रुः खर्जूभेदः "दाद इति प्रसिद्धा ।" अर्शोरोगेण युतः अर्शस इत्युच्यते एकम् । वातकी वातोऽतिशयितोऽस्य । वातातीति कुगागमः इनिप्रत्ययश्च । रोगे चायमिष्यते । नेह वातवती गुहा । वातरोगी द्वे वातरोगयुक्तस्य । सातिसारः अतिसारकी द्वे अतिसारयुक्तस्य ॥ ५९ ॥ क्लिन्नाक्षः चुल्लः चिल्लः पिल्लः चत्वारि क्लेदयुक्ते अक्षिणी यस्य तस्य पुंसः "चिपडा इति ख्यातस्य ।" अमी चुल्लचिल्लपिल्लास्त्रयः क्लिन्नेऽक्ष्णि च क्लेदयुक्ते नेत्रेऽपि वर्तंते "चिपडे डोळे इति ख्यातेषु" उन्मत्तः उन्मादवान् द्वे उन्मादयुक्तस्य । उन्मादो वातपित्तादिकृतश्चित्तविभ्रमः । श्लेष्मलः श्लेष्मणः कफी त्रीणि कफयुक्तस्य ॥ ६० ॥ रुजा रोगेण भुग्नो वक्रपृष्ठोऽधोमुखस्तत्र न्युब्ज इत्येकम् । वृद्धनाभिः तुंदिलः "तुंडिलः" तुंदिभः "तुंडिभः" त्रीणि वातादिनोन्नतनाभेः । किलासी सिध्मलः द्वे सिध्मयुक्तस्य "शिब्या इति ख्यातस्य ॥" अंधः अदृक् द्वे दृष्टिहीनस्य "अंधळा इति ख्यातस्य ।" अदृशौ । मूर्छालः मूर्तः मूर्छितः त्रीणि मूर्छायुक्तस्य ॥ ६१ ॥ शुक्रं तेजः रेतः बीजं वीर्यं इंद्रियं षट् रेतसः । मायुः पित्तं द्वे पित्तस्य । मायुरुदंतः पुंसि । कफः श्लेष्मा द्वे कफस्य । श्लेष्माणौ । त्वक् असृग्धरा "असृग्धारेत्येके" द्वे चर्मणः । त्वचौ । "त्वच इत्यदंतः । त्वचेति टाबंतश्चान्यत्र" ॥ ६२ ॥ पिशितं तरसं मांसं पललं क्रव्यं आमिषं षट् मांसस्य । उत्तप्तं शुष्कमांसं वल्लूरं "वल्लुरमिति ह्रस्वोकारमपि" त्रीणि शुष्कमांसस्य । तत्र वल्लूरं त्रिषु । वल्लूरा ॥६३॥ रुधिरं असृक् लोहितं अस्रं रक्तं क्षतजं शोणितं सप्त रक्तस्य । असृजी । बुक्का "बूक्का अग्रमांसं द्वे हृदयांतर्गतपद्माकारमांसभेदस्य काळीज इति ख्यातस्य ।" तदेव हृदयम् । रक्तं

पिशितं तरसं मासं पललं क्रव्यमामिषम् ॥
उत्तप्तं शुष्कमासं स्यात्तद्वल्लूरं त्रिलिंगकम् ॥ ६३ ॥
रुधिरेऽसृक्लोहितास्त्ररक्तक्षतजशोणितम् ॥
बुक्काग्रमांसं हृदयं हृन्मेदस्तु वपा वसा ॥ ६४ ॥
पश्चाद्ग्रीवाशिरा मन्या नाडी तु धमनिः शिरा ॥
तिलकं क्लोम मस्तिष्कं: गोर्दं किट्टं मलोऽस्त्रियाम् ॥६५॥
अंत्रं पुरीतत् गुल्मस्तु प्लीहा पुंस्यथ वस्नसा ॥
स्नायुः स्त्रिया कालखंडयकृती तु समे इमे ॥ ६६ ॥

च । पद्मकोशप्रतीकाशं रुचिरं चाप्यधोमुखम् । हृदयं तद्विजानीयाद्विश्वस्यायतनं महदिति । बुक्का स्त्री । "बुक्काग्रमांसमिति समस्तमपि ।" हृदयं हृत् द्वे हृदयाख्यनिम्नदेशस्य । बुक्कादिचतुष्कं समानार्थमित्येके । हृदी हृंदि । मेदः वपा वसा त्रीणि मांसजन्यस्नेहस्य । "चरबी मांदें इति ख्यातस्य ।" मेदसी ॥ ६४ ॥ ग्रीवायाः शिरो ग्रीवाशिरा । या पश्चात्स्थिता ग्रीवाशिरा सा मन्येत्युच्यते एकम् । नाडी धमनिः शिरा त्रयं शिरायाः "नाडी इति ख्यातायाः ।" सिरेति दंत्यादिरपि । कृदिकारादक्तिन इति ङीषि धमनीत्यपि । तिलकं क्लोम द्वे मांसपिण्डविशेषस्य पुप्फुस इति ख्यातस्य । क्लोममित्यदंतमपि । मस्तिष्कं "मस्तिकम् । अथ मस्तिको मस्तुलिंगोऽपीति त्रिकाण्डशेषः ।" गोर्दं "गोदः" द्वे मस्तकसंभूतघृताकारस्नेहस्य "गोद मेंदू" इति ख्यातस्य । किट्टं मलः द्वे कर्णादिगतमलस्य । "वसा शुक्रमसृक् मज्जा कर्णविण्मूत्रविण्नखाः । श्लेष्माश्रुदूषिकाः स्वेदो द्वादशैते नृणां मलाः" ॥६५॥ अंत्रं "आंत्रमित्यपि मनोरमायामुक्तम् ।" पुरीतत् पुरीं शरीरं तनोतीति । द्वे अंत्रस्य "आंतडें इति ख्यातस्य ।" पुरीतती पुरीतंति । "पुरीतदस्त्रियामिति वाचस्पतिकोशात्पुंस्यपि ।" गुल्मः प्लीहा द्वे वामकुक्षिस्थमांसपिण्डविशेषस्य । प्लीहानौ । "प्लीहाशब्दष्टाबंतोऽपि ।" वस्नसा स्नायुः द्वे अंगप्रत्यंगसंधिबंधनरूपायाः स्नायोः "शिरा इति ख्यातायाः ।" कालखण्डं यकृत् द्वे दक्षिणकुक्षिगतमांसपिण्डस्य ॥ ६६ ॥ सृणिका "सृणीका" स्यंदिनी लाला त्रीणि लालायाः "लाळ इति ख्यातायाः ।" स्यंदिनी दंत्यादिः ।

सृणिका स्यंदिनी लाला दूषिका नेत्रयोर्मलम् ॥
("नासामलं तु सिंघाणं पिंजूषं कर्णयोर्मलम् ॥") (१)
मूत्रं प्रस्राव उच्चारावस्करौ शमलं शकृत् ॥ ६७ ॥
पुरीषं गूथवर्चस्कमस्त्री विष्ठाविशौ स्त्रियौ ॥
स्यात्कर्परः कपालोऽस्त्री कीकसं कुल्यमस्थि च ॥ ६८ ॥
स्याच्छरीरास्थि कंकालः पृष्ठास्थ्नि तु कशेरुका ॥
शिरोस्थनि करोटिः स्त्री पार्श्वास्थनि तु पर्शुका ॥ ६९ ॥
अंगं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम् ॥
गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥ ७० ॥
कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः ॥

"दूषिकेत्येकं नेत्रयोर्मलस्य" उकीर पू इति ख्यातस्य। दूषीका दीर्घमध्यापि। दूषिर्दूषी चेत्यप्यन्यत्र। सिंघाणमित्येकं नासामलस्य। "सिंहाणं सिंहानं चेत्यपि। पिंजूष इत्येकं कर्णमलस्य"। मूत्रं प्रस्रावः द्वे मूत्रस्य। उच्चारः अवस्करः शमलं शकृत् ॥६७॥ पुरीषं गूथं वर्चस्कं विष्ठा विट् नव विष्ठायाः। "उच्चार्यते त्यज्यते इत्युच्चारः। अवकीर्यते अधः क्षिप्यत इत्यवस्करः।" गूथं वर्चस्कं पुंसि क्लीबे च। शकृती। "विट् तालव्यमूर्धन्यांत्यः। विशौ। विषौ। गूथं पूरीषं वर्चस्कमित्यपि पाठः।" कर्परः कपालः द्वे शिरोस्थिखण्डस्य। कपालमस्त्रियाम्। कीकसं कुल्यं आस्थि त्रीणि अस्थिमात्रस्य ॥ ६८ ॥ कंकाल इत्येकं शरीरगतास्थिपंजरस्य "सांगाडा, पिंजरा इति ख्यातस्य।" कशेरुकेत्येकं पृष्ठमध्यगतास्थिदण्डस्य "कणा इति ख्यातस्य"। करोटिरित्येकं शिरोगतास्थिसंघस्य। "करोटीति ङीषंतापि। यदाह पुष्पदंतः। नृकरोटीपरिकर इति"। पर्शुकेत्येकं पार्श्वगतास्थनि "बर्गडी इति ख्याते" ॥ ६९ ॥ अंगं प्रतीकः अवयवः अपघनः चतुष्कं देहावयवस्य। कलेवरं गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः। विविधं सुखादि गृह्णाति। विविधैर्व्याधिभिर्गृह्यते वा ॥७०॥ कायः देहः मूर्तिः तनुः तनूः द्वादश देहस्य। वपुषी। वर्ष्मणी। तन्वौ। पादाग्रं प्रपदं द्वे पादाग्रस्य चवडा इति ख्यातस्य। पादः। पादो बुध्ने तुरीयांशे शैलप्रत्यंतपर्वते। चरणे च मयूखे चेति कोशां-

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

पादाग्रं प्रपदं पादः पदंघ्रिश्चरणोऽस्त्रियाम् ॥ ७१ ॥
तद्ग्रंथी घुटिके गुल्फौ पुमान्पार्ष्णिस्तयोरधः ॥
जंघा तु प्रसृता जानूरुपर्वाष्ठीवदस्त्रियाम् ॥ ७२ ॥
सक्थि क्लीबे पुमानूरुस्तत्संधिः पुंसि वंक्षणः ॥
गुदं त्वपानं पायुर्ना वस्तिर्नाभेरधो द्वयोः ॥ ७३ ॥
कटो ना श्रोणिफलकं कटिः श्रोणिः ककुद्मती ॥
पश्चान्नितंबः स्त्रीकट्याः क्लीबे तु जघनं पुरः ॥ ७४ ॥
कूपकौ तु नितंबस्थौ द्वयहीने कुकुंदरे ॥

तरे । पत् अंघ्रिः चरणः चत्वारि चरणस्य । दांतः पत् । "पदोंऽघ्रिरिति पाठे अदंतः पदशब्दः" ॥ ७१ ॥ तद्ग्रंथी पादस्य पार्श्वस्थौ ग्रंथिविशेषौ घुटिके गुल्फाविति चोच्येते द्वयं "पायांचा घोंटा इति ख्यातस्य ।" घुटिके स्त्रियाम् । द्वित्वाद्द्विवचनम् । न तु नित्यम् । तयोः गुल्फयोरधःप्रदेशः पार्ष्णिरित्येकं खोंट इति ख्यातस्य । "पार्ष्णिः स्त्रीपुंसयोः पादमूले स्यात् ध्वजिनीकटाविति तु रंतिदेवः । जंघा प्रसृता द्वे जंघायाः पोटरी इति प्रसिद्धायाः।" जानु ऊरुपर्व अष्ठीवत् त्रयं जानूरुसंधेः "ढोंपर गुडघा इति ख्यातस्य"। तत्राष्ठीवदस्त्रियाम् । जानुनी । ऊरुपर्वणी । अष्ठीवंतौ ॥ ७२ ॥ सक्थि ऊरुः द्वे जानूपरिभागस्य "मांडी इति ख्यातस्य ।" ऊरोरुपरिभागः सक्थीति कचिद्भेदो दृश्यते । तस्योरोः संधिः वंक्षण इत्येकम् । गुदं अपानं पायुः त्रीणि विष्ठानिर्गमद्वारस्य । पायुरुदंतः ना पुमान् । वस्तिरित्येकं स्त्रीपुंसलिंगं नाभेरधो मूत्राशयस्य ॥ ७३ ॥ श्रोणिः कटिस्तस्याः फलकं कट इत्युच्यते स पुमान् । एकम् । कटिः "कटीति ङीषंतापि ।" श्रोणिः "श्रोणी" ककुद्मती त्रयं स्त्रीलिंगं कट्याः । "ककुद्वृषांस इव मांसपिण्डः सोऽतिशयितोऽस्यां ककुद्मती ।" स्त्रियाः कटिः स्त्रीकटिः तस्याः पश्चाद्भागो नितंब इत्येकम् । "निभृतं तम्यते कामुकैः नितंबः । तमु कांक्षायाम् ।" जघनमित्येकं स्त्रीकट्याः पुरोभागे । जघनं स्यात् स्त्रियाः श्रोणिपुरोभागे कटावपीति । "वांदन ओंटी इति ख्याते" ॥ ७४ ॥ नितंबस्थौ पृष्ठवंशादधोभागे विद्यमानौ कूपकौ गर्तौ कुकुंदरे स्याताम् । "ककारादिरपि" एकम् । द्वयहीने क्लीबे । द्वित्वमनित्यम् । स्फिचौ कटिप्रोथौ द्वे कटिस्थमांसपिण्डयोः

स्त्रियां स्फिचौ कटिप्रोथावुपस्थो वक्ष्यमाणयोः॥७५॥
भगं योनिर्द्वयोः शिश्नो मेंढ्रो मेहनशेफसी ॥
मुष्कोंऽडकोशो वृषणः पृष्ठवंशाधरे त्रिकम् ॥ ७६ ॥
पिचंण्डकुक्षी जठरोदरं तुंदं स्तनौ कुचौ ॥
चूचुकं तु कुचाग्रं स्यान्न ना क्रोडं भुजांतरम् ॥७७॥
उरो वत्सं चं वक्षश्च पृष्ठं तु चरमं तनोः ॥
स्कंधो भुजशिरोंऽसोऽस्त्री संधी तस्यैव जत्रुणी ॥७८॥
बाहुमूले उभे कक्षौ पार्श्वमस्त्री तयोरधः ॥

"कुले इति ख्यातयोः। कटिः तस्याः प्रोथौ मांसपिण्डौ कटिप्रोथौ। स्त्रियां स्फिचौ कटिप्रोथौ कटिप्रोथौ च पूलकाविति रभसः। कटिप्रोथाविति नामद्वयं वा। प्रोथोऽश्वघोणाध्वगयोः कट्यामिति हैमः।" वक्ष्यमाणयोर्भगे शिश्ने च उपस्थ इत्येकम्॥ ७५॥ भगं योनिः द्वे स्त्रीणामुपस्थस्य। द्वयोरिशस्य योनिनान्वयः। शिश्नः मेंढ्रः मेहनं शेफः "शेपः" चत्वारि शिश्नस्य। मेंढ्रमित्यपि पाठः। मुष्कः अण्डकोशः "मूर्धन्यांतोऽपि।" वृषणः त्रीण्यण्डकोशस्य "आण्डकुली इति ख्यातस्य।" पृष्ठवंशाधरे त्रिभिरस्थिभिर्घटितं स्थानं त्रिकं इत्येकं "माकडहाड इति ख्यातस्य" ॥ ७६ ॥ पिचण्डः पिचिण्डः" कुक्षिः जठरं उदरं तुंदं पंच जठरस्य। तत्र पिचण्डकुक्षी पुंसि। "जठरं विकल्पेन पुंसि। जठरो न स्त्रियां कुक्षौ वृद्धकर्कटयोस्त्रिष्विति मेदिनी।" स्तनः कुचः द्वे वक्षोजस्य। चूचुकं कुचाग्रं द्वयं स्तनाग्रस्य। चूचुको ना कुचाननमिति रत्नकोशः। "चूष्यते पीयत इति चूचुकम्।" क्रोडं भुजांतरम्॥ ७७॥ उरः वत्सम्। पुत्रादौ तर्णके वर्षे वत्सो वत्सं तु वक्षसीति रुद्रः। वक्षः पंच वक्षसि। तत्र क्रोडं न ना किंतु स्त्रीनपुंसकयोः। स्त्रियां तु क्रोडा। तनोः शरीरस्य चरमं पश्चाद्भागः पृष्ठमित्येकम्। स्कंधः। स्कंधः प्रकाण्डे कायेंऽसे विज्ञानादिषु पंचसु। नृपे समूहे व्यूहे चेति हैमः। भुजशिरः अंसः त्रीणि भुजशिरसः "खांदा इति ख्यातस्य।" तस्य स्कंधस्य संधी जत्रुशब्दवाच्यौ एकं "नपुंसकम्" ॥ ७८॥ बाहुमूलं कक्षः द्वे कक्षस्य। तयोरधोभागः पार्श्वमित्येकम्। मध्यमं अवलग्नं मध्यः

मध्यमं चावलग्नं च मध्योऽस्त्री द्वौ परौ द्वयोः ॥ ७९ ॥
भुजबाहू प्रवेष्टो दोः स्यात्कफोणिस्तु कूर्परः ॥
अस्योपरि प्रगण्डः स्यात्प्रकोष्ठस्तस्य चाप्यधः ॥ ८० ॥
मणिबंधादाकनिष्ठं करस्य करभो बहिः ॥
पंचशाखः शयः पाणिस्तर्जनी स्यात्प्रदेशिनी ॥ ८१ ॥
अंगुल्यः करशाखाः स्युः पुंस्यंगुष्ठः प्रदेशिनी ॥
मध्यमाऽनामिका चापि कनिष्ठा चेति ताः क्रमात् ॥८२॥
पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम् ॥

त्रीणि तनुमध्यस्य माज, “ कमर इति ख्यातस्य । अस्त्रीति मध्यमादिशब्दत्रयेऽप्यन्वेति । ” परौ द्वौ भुजबाहुशब्दौ स्त्रीपुंसयोः ॥ ७९ ॥ भुजः बाहुः “ बाहः । बाहोऽश्वभुजयोः पुमानिति दामोदरः । बाहो बाहुरिति स्मृत इति देशिकोशः । ” प्रवेष्टः दोः चत्वारि भुजस्य । “ स्त्रियां तु भुजा बाहा । ” दोषौ । शसादौ दोषः दोष्णेत्यादि । “ दोर्दोषा च भुजो बाहुः पाणिर्हस्तः करस्तथेति धनंजयात् । दोषेति टांबतोऽपि वर्तते । ” कफोणिः “ कफणिः । कफोणिः कफणिर्द्वयोरिति शब्दार्णवः ।” कूर्परः “ कर्परः” द्वे कोंपर इति ख्यातस्य । अस्य कूर्परस्योपरिभागे प्रगण्ड इत्येकम् । तस्य कूर्परस्याधोभागे प्रकोष्ठ इत्येकम् ॥ ८० ॥ पाणिप्रकोष्ठसंधिर्मणिबंधः तमारभ्य कनिष्ठापर्यंतं करस्य मांसलो बहिर्भागः करभ इत्युच्यते एकम् । पंचशाखः पंच शाखा इवांगुलयोऽस्य । शयः “ शमः । पाणिः शमः शयो हस्त इत्यमरमाला । ” पाणिः त्रीणि करस्य । तर्जनी प्रदेशिनी “ प्रदेशनीत्यपि ” द्वे अंगुष्ठसमीपांगुल्याः ॥ ८१ ॥ अंगुली करशाखा द्वे अंगुलीमात्रस्य । ता अंगुल्यः क्रमेण अंगुष्ठः प्रदेशिनी मध्यमा अनामिका । न नामग्रहणं योग्यमस्याः । ब्रह्मणोऽनया शिरश्छेदनात् । अत एवास्यां पवित्रीक्रियते । कनिष्ठिका इति संज्ञाभिरुच्यंते एकैकम् । तत्रांगुष्ठः पुंसि । प्रागुक्तापि प्रदेशिनी तत्स्वरूपदर्शनार्थमिह पुनरुक्तेति न दोषः ॥ ८२ ॥ पुनर्भवः “ पुनर्नवः ” कररुहः नखः नखरः चत्वारि नखस्य । “ नखरः पुंसि क्लीबे च । नखरं त्रिष्विति अमरमाला । ” तर्जन्यादिभिस्तिसृभिरंगुलीभिर्युतेंऽगुष्ठे विस्तृते प्रादेशादयः क्रमात्स्युः । “ प्रदेश इति ह्रस्वादिरपि ” एकैकम् । तथा हि ।

प्रादेशतालगोकर्णास्तर्जन्यादियुते तते ॥ ८३ ॥
अंगुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशांगुलः ॥
पाणौ चपेटप्रतलप्रहस्ता विस्तृतांगुलौ ॥ ८४ ॥
द्वौ संहतौ संहतलः प्रतलौ वामदक्षिणौ ॥
पाणिर्निकुब्जः प्रसृतिस्तौ युतावंजलिः पुमान् ॥ ८५ ॥
प्रकोष्ठे विस्तृतकरे हस्तो मुष्ट्या तु बद्धया ॥
स रत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना ॥ ८६ ॥
व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगंतरम् ॥

तर्जनीसहितांगुष्ठे विस्तृते प्रादेशः । एवं मध्यमासहितांगुष्ठविस्तारे तालः । अनामिकायुतेंऽगुष्ठे गोकर्णः ॥ ८३ ॥ कनिष्ठासहितेंऽगुष्ठे विस्तृते वितस्तिः द्वादशांगुलः । द्वादश अंगुलयः प्रमाणमस्य । प्रमाणे मात्रच् । द्विगोर्नित्यमिति तस्य लुक् । तत्पुरुषस्यांगुलेरित्यच् प्रत्ययः । द्वे । साहचर्याद्वितस्तिः पुंसि । स्त्रियामिति सुभूतिः । चपेटः " चर्पटः । चर्पटः स्फारविपुले चपेटे चर्पटेऽपि चेति मेदिनीविश्वप्रकाशौ ।" प्रतलः प्रहस्तः त्रीणि विस्तृतांगुलिके पाणौ ॥ ८४ ॥ वामदक्षिणौ द्वौ प्रतलौ संहतौ चेत्संहतलः स्यात् । " सिंहतल इत्यपि पाठः । संहतलः प्रतलश्चेति नामद्वयं वा । तत्र संहतलप्रतलावित्यविसर्गपाठः । प्रतते प्रश्लिष्टे वा तलेऽत्र प्रतलः ।" निकुब्जो निःशेषेण कुब्जीकृतः पाणिः प्रसृतिः स्यात् । " प्रसृत इति पाठः । तत्र प्रकृष्टं सृतमस्येति विग्रहः । प्रसृतः समसारे स्याद्विनीते वेंगिते त्रिषु । अर्धांजलौ तु पुंलिंगो जंघायां प्रसृता मतेति मेदिनी " । एकम् । द्वौ द्वौ प्रसृती संहतौ चेदंजलिरित्येकं पुंसि ॥ ८५ ॥ विस्तृतः करो यत्र तादृशे प्रकोष्ठे कूर्पराधोभागे हस्त इत्येकम् । अयं चतुर्विंशत्यंगुलमितो ज्ञेयः । स तु बद्धया मुष्ट्योपलक्षितः रत्निरित्येकं " मुंढा हात इति ख्यातस्य । सरत्निरित्यपि स्त्रियामपि ।" निष्कनिष्ठेन विस्तृतकनिष्ठेन मुष्टिनोपलक्षितो हस्तः अरत्निरित्येकं स्त्रियाम् । " अरत्निः पुमानपि । नारत्निः कफणौ हस्ते प्रकोष्ठे विततांगुलाविति रुद्रविश्वप्रकाशौ ।" मुष्ट्या मुष्टिनेति निर्देशेन मुष्टिर्द्वयोरिति ज्ञापितम् ॥ ८६ ॥ तिर्यक्तततयोर्विस्तृतयोः करसहितयोर्बाह्वोरंतरं व्यामः । ऊर्ध्व-

ऊर्ध्वविस्तृतदोष्पाणिनृमाने पौरुषं त्रिषु ॥ ८७ ॥
कंठो गलोऽथ ग्रीवायां शिरोधिः कंधरेत्यपि ॥
कंबुग्रीवा त्रिरेखा साऽवटुर्घाटा कृकाटिका ॥ ८८ ॥
वक्त्रास्ये वदनं तुंडमाननं लपनं मुखम् ॥
क्लीबे घ्राणं गंधवहा घोणा नासा च नासिका ॥ ८९ ॥
ओष्ठाधरौ तु रदनच्छदौ दशनवाससी ॥
अधस्ताच्चिबुकं गंडौ कपोलौ तत्परा हनुः ॥ ९० ॥
रदना दशना दंता रदास्तालु तु काकुदम् ॥

विस्तृतदोषौ भुजौ पाणी च येन तस्य नुः पुंसो यन्मानं तत्र पौरुषमित्येकं त्रिषु । स्त्रियां तु पौरुषी । दोःपाणिरिति सविसर्गपाठोऽपि ॥ ८७ ॥ कंठः गलः द्वे "ग्रीवाग्रभागस्य गोंकनळी गोंकटी नरडी इति ख्यातस्य ।" ग्रीवा शिरोधिः । शिरः धीयतेऽस्याम् । कर्मण्यधिकरणे चेति अधिकरणे किप्रत्ययः । कंधरा त्रीणि "मान इति ख्यातस्य ।" शिरोधिरपि स्त्री । सा ग्रीवा तिसृभी रेखाभिर्विशिष्टा कंबुग्रीवा स्यादित्येकम् । अवटुः घाटा कृकाटिका त्रीणि ग्रीवाशिरःसंधेः पश्चाद्भागस्य । "ग्रीवायामुन्नतभागस्य घांटी इति ख्यातस्येति केचित् ।" तत्रावटुः पुंसि ॥ ८८ ॥ वक्त्रं आस्यं वदनं तुंडं आननं लपनं मुखं सप्त मुखस्य । "आस्यंते वर्णा येन अस्यते ग्रासो वाऽस्मिन् तदास्यम् । ण्यत् । मुखं मुखांतरालं च द्वयमास्यमितीरितमिति शाश्वतः ।" घ्राणं गंधवहा घोणा नासा । नासा तु नासिकायां च द्वारोर्ध्वे दारुणि स्त्रियाम् । "नसा नस्या । घ्राणं गंधवहा नासा नसा नस्या च नासिकेति साहसांकः ।" नासिका । पंच नासिकायाः ॥ ८९ ॥ ओष्ठः अधरः रदनच्छदः दशनवासः चत्वारि ओष्ठस्य । ओष्ठाभ्यां सहितावधरौ । केचिदुपरिवर्त्योष्ठः अधोवर्त्यधर इति मन्यंते तदयुक्तम् । अधरोष्ठः बिंबोष्ठीत्यादिप्रयोगदर्शनात् । चिबुकमित्येकं अधस्तात् अधराधोभागे । गंडः कपोलः द्वे कपोलस्य "गाल इति ख्यातस्य ।" तत्रापि नेत्रकपोलमध्यदेशो गंड इति ग्रंथांतरम् । ताभ्यां कपोलाभ्यां परा चिबुकस्याधो हनुरित्येकम् । हनुः पुंस्यपि । प्रायेण स्त्रियाम् । तत्परो हनुरिति ओकारघटितपाठोऽपि ॥ ९० ॥ रदनः दशनः दंतः रदः चत्वारि दंतस्य । तालु काकुदं द्वे तालुनः ।

रसज्ञा रसना जिह्वा प्रांतावोष्ठस्य सृक्किणी ॥ ९१ ॥
ललाटमलिकं गोधिरूर्ध्वे दृग्भ्या भ्रुवौ स्त्रियौ ॥
कूर्चमस्त्री भ्रुवोर्मध्यं तारकाक्ष्णः कनीनिका ॥९२॥
लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी ॥
दृग्दृष्टी चास्रु नेत्रांबु रोदनं चास्रमश्रु च ॥ ९३ ॥
अपांगौ नेत्रयोरंतौ कटाक्षोऽपांगदर्शने ॥
कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः ॥ ९४ ॥
उत्तमांगं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम् ॥

रसज्ञा रसना । "तालव्या अपि दंत्याश्चेत्यादौ जिह्वायां रसना तथेत्युक्तेः रसनाशब्दो दंत्यतालव्यमध्यः । रसनमिति क्लीबमपि । रसनं स्वदने ध्वनौ । जिह्वायां तु न पुंसि स्यादिति मेदिनी ।" जिह्वा त्रीणि जिह्वायाः । प्रांताविति ओष्ठद्वयस्य वामदक्षिणौ प्रांतौ सृक्किणी स्याताम् । ईबंतस्य स्त्रियामेकवचनम । नांतस्य क्लीबे वा द्विवचनमेतत् । सृक्कि इति इदंतस्य क्लीबे द्विवचनं वा । सृक्किण्यां सृक्कि सृक्क चेति शब्दभेदात् । "सृक्केति नांतस्य क्लीबे सृक्कणीति पाठः । कवयुक्तमिति मते तु । यथा सृक्किणी स्त्रियाम् । सृक्कि नांतमिदंतं च । सृक्केति नांतम् । सृक्कसृक्कमदंतं चेत्यन्यत्र" एकम ॥ ९१ ॥ ललाटं अलिकं गोधिः त्रीणि भालस्य । "अलिकं ह्रस्वदीर्घमध्यमिति राजदेवः ।" गोधिः पुंसि । दृग्भ्यामूर्ध्वभागौ भ्रुवौ एकम् । भ्रूः । नासोपरि भ्रुवोर्मध्ये कूर्च इत्येकम् । कूर्चमस्त्री भ्रुवोर्मध्ये कत्थनश्मश्रुकैतवे इति कोशांतरम । अक्ष्णः कनीनिका मध्यगतकृष्णमंडलं तारकेत्युच्यते एकम् ॥ ९२ ॥ लोचनं नयनं नेत्रं ईक्षणं चक्षु अक्षि दृक् दृष्टिः अष्टौ नेत्रस्य । चक्षुषी । दृशौ । अस्रु नेत्रांबु रोदनं अस्रं अश्रु पंच नेत्रोदकस्य । अस्रु दंत्यमध्यम् । अंत्यं तालव्यमध्यम् । अस्रमदंतं दंत्यमध्यम् । "तालव्यमध्यमपि" ॥ ९३ ॥ नेत्रयोरंतौ अपांगौ एकम् । अपांगेन दर्शने चेष्टायां कटाक्ष इत्युच्यते । अपांगस्त्वंगहीने स्यान्नेत्रांते तिलकेऽपि चेति विश्वः । कर्णः शब्दग्रहः श्रोत्रं श्रुतिः श्रवणं श्रवः षट् कर्णस्य । स्त्रीति विशेषविधानात् संकरो निर्दोषाय । श्रवसी ॥ ९४ ॥ उत्तमांगं शिरः शीर्षं मूर्धा मस्तकः

चिकुरः कुंतलो वालः कचः केशः शिरोरुहः ॥ ९५ ॥
तद्वृंदे कैशिकं कैश्यमलकाश्चूर्णकुंतलाः ॥
ते ललाटे भ्रमरकाः काकपक्षः शिखण्डकः ॥ ९६ ॥
कबरी केशवेशोऽथ धम्मिलः संयताः कचाः ॥
शिखा चूडा केशपाशी व्रतिनस्तु सटा जटा ॥ ९७ ॥
वेणिः प्रवेणी शीर्षण्यशिरस्यौ विशदे कचे ॥
पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ॥ ९८ ॥
तनूरुहं रोम लोम तद्वृद्धौ श्मश्रु पुंमुखे ॥

पंच शिरसः । ना पुमान् । चिकुरः "चिकूरः । कुंतला मूर्द्धजास्त्वस्राश्चिकूराश्चिकुराः कचा इति दुर्गः ।" कुंतलः वालः कचः केशः शिरोरुहः षट् केशस्य ॥ ९५ ॥ कैशिकं कैश्यं द्वे तद्वृंदे केशानां समूहे । अलकाः चूर्णकुंतलाः द्वे कुटिलकेशानाम् । ते अलकाः ललाटे लंबमानाः भ्रमरकाः स्युः । काकपक्षः शिखण्डकः "शिखण्डिकः शिखाण्डकः । शिखाण्डकशिखण्डिकाविति वाचस्पतिप्रभृती । शिखण्डो बर्हचूडयोरिति मेदिन्याम्" । द्वे कुमारचूडायाः ॥ ९६ ॥ कबरी केशवेशः द्वे केशबंधरचनायाः । कबरी स्त्री । संयताः मौक्तिकदामादिबद्धाः कचाः केशसमूहो धम्मिल्ल इत्येकं "बुचडा इति ख्यातस्य ।" शिखा चूडा केशपाशी त्रीणि शिखायाः । केशपाश्यौ । सटा जटा द्वे व्रतिनः शिखायाम् ॥ ९७ ॥ वेणिः प्रवेणी द्वे सर्पाकाररचितकेशवेशस्य । वेणीत्यपि । "प्रवेणिरित्यपि । प्रवेणिः स्त्री कुथावेण्योरिति मेदिनी ।" शीर्षण्यः शिरस्यः द्वे विशदे निर्मले केशे । कचादित्यर्थप्रधानो निर्देशः । तेन कचपर्यायात परे पाशादयस्त्रयः कलापार्थाः केशसमूहवाचिन इत्यर्थः । यथा कचपाशः । केशपाशः । केशपक्षः । कुंतलहस्तः ॥ ९८ ॥ तनूरुहं रोम लोम त्रयं रोम्णः । पुंमुखे पुंसो वक्त्रे तस्य रोम्णो वृद्धौ सत्यां तद्रोम श्मश्रु स्यात् एकं "दाढी इति ख्यातस्य" । श्मश्रुणी । आकल्पः वेषः । "वेश इति तालव्यांतोऽपि । वेशो वेश्यागृहे गृहे । नेपथ्ये चेति मेदिनी ।" नेपथ्यं प्रतिकर्म प्रसाधनं पंच अलंकृतस्य शोभायाम् । "नेपथ्यं तु प्रसाधने । रंगभूमौ वेषभेद इति हैमः । नेपथ्यशब्दः पुंस्यपि । नेपथ्यः

आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ॥ ९९ ॥
दशैते त्रिष्वलंकर्ताऽलंकरिष्णुश्च मण्डितः ॥
प्रसाधितोऽलंकृतश्च भूषितश्च परिष्कृतः ॥ १०० ॥
विभ्राट् भ्राजिष्णुरोचिष्णू भूषणं स्यादलंक्रिया ॥
अलंकारस्त्वाभरणं परिष्कारो विभूषणम् ॥ १०१ ॥
मण्डनं चाथ मुकुटं किरीटं पुन्नपुंसकम् ॥
चूडामणिः शिरोरत्नं तरलो हारमध्यगः ॥ १०२ ॥
वालपाश्या पारितथ्या पत्रपाश्या ललाटिका ॥
कर्णिका तालपत्रं स्यात्कुण्डलं कर्णवेष्टनम् ॥ १०३ ॥
ग्रैवेयकं कंठभूषा लंबनं स्याल्ललंतिका ॥

स्यादलंकारे रंगज्यायां नपुंसकमिति मेदिनीकोशात् । प्रतिकर्मादि द्वयमलंकरणस्य वा ॥ ९९ ॥ एते अलंकर्तादयः वक्ष्यमाणा दश शब्दास्त्रिषु वाच्यलिंगाः । अलंकर्ता अलंकरिष्णुः द्वे अलंकर्तरि । अलंकर्तुं शीलमस्यालंकरिष्णुः । मण्डितः प्रसाधितः अलंकृतः भूषितः परिष्कृतः "परिस्कृतः" पंच अलंकृतस्य ॥ १०० ॥ विभ्राट् भ्राजिष्णुः रोचिष्णुः त्रयमतिशयेन शोभमानस्य । विभ्राजौ । भूषणं अलंक्रिया द्वे भूषणक्रियायाः । "भूषा तु स्यादलंक्रियेत्यपि पाठः ।" अलंकारः आभरणं परिष्कारः "परिस्कारः" विभूषणम् ॥ १०१ ॥ मण्डनं पंचालंकारस्य । मुकुटं "मकुटं" किरीटं द्वे "किरीटस्य । तत्र किरीटं पुंसि क्लीबे च ।" चूडामणिः शिरोरत्नं द्वे शिरोमणेः । हारमध्यगः हारमध्यगतो नायकमणिः तरलः स्यात् पदक इत्यादिख्यातस्य एकम् ॥ १०२ ॥ वालपाश्या पारितथ्या द्वे सीमंतभूषणस्य । "स्वामी तु प्रथमं वालं बंधनं मुक्तावलीनामित्याह । परितस्तथाभूतैव पारितथ्या ।" पत्रपाश्या ललाटिका द्वे ललाटभूषणस्य । कर्णिका कर्णस्यालंकारेऽर्थे । कर्णललाटात्कनलंकारे इति कन् । कर्णिका कर्णभूषणमिति । तालपत्रं "ताडपत्रं" द्वे ताटंकस्य तानवड इति ख्यातस्य । कुण्डलं कर्णवेष्टनं द्वे कुण्डलस्य । तत्र कर्णिका स्त्रीभिरेव धार्यते । इदं पुरुषैरपि ॥ १०३ ॥ ग्रैवेयकं कंठभूषा द्वे ग्रीवाभरणस्य । "ग्रैवेयं ग्रैवं चेत्यन्यत्र" । लंबनं ललंतिका

स्वर्णैः प्रालंबिकाऽथोरःसूत्रिका मौक्तिकैः कृता॥१०४॥
हारो मुक्तावली देवच्छंदोऽसौ शतयष्टिका ॥
हारभेदा यष्टिभेदाद्गुच्छगुच्छार्धगोस्तनाः ॥ १०५ ॥
अर्धहारो माणवक एकावल्येकयष्टिका ॥
सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः ॥ १०६ ॥
आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम् ॥
केयूरमंगदं तुल्ये अंगुलीयकमूर्मिका ॥ १०७ ॥
साक्षरांऽगुलिमुद्रा स्यात्कंकणं करभूषणम् ॥
स्त्रीकट्यां मेखला कांची सप्तकी रशना तथा ॥१०८॥
क्लीबे सारसनं चाथ पुंस्कट्यां शृंखलं त्रिषु ॥

द्वे आनाभिलंबितकंठिकायाम् । सैव ललंतिका स्वर्णैः कृता प्रालंबिका स्यात् एकम् । सैव ललंतिका मौक्तिकैः रचिता चेदुरःसूत्रिकेत्येकम् ॥ १०४ ॥ हारः । ह्रियते मनोऽनेनेति । अथवा हारयति मनः । मुक्तावली "द्वे मुक्ताहारस्य ।" असौ मुक्तावली शतयष्टिका शतलतिका चेत् देवच्छंदः एकम् । देवच्छंदौ । यष्टिभेदाल्लतानां भेदात् गुच्छादयो हारभेदाः स्युः । "गुत्सगुत्सार्धगोस्तना इत्यपि पाठः ।" ते यथा । द्वात्रिंशद्यष्टिको गुच्छः । चतुर्विंशतियष्टिको गुच्छार्धः । चतुर्यष्टिको गोस्तनः ॥ १०५ ॥ द्वादशयष्टिकोऽर्धहारः । विंशतियष्टिको माणवकः । एकयष्टिका एकावली । सैवैकावली सप्तविंशतिमौक्तिकैः कृता नक्षत्रमाला स्यात् एकैकम् ॥ १०६ ॥ आवापकः पारिहार्यः कटकः वलयः चत्वारि प्रकोष्ठाभरणस्य "पोंची इत्यादिख्यातस्य ।" केयूरं अंगदं द्वे प्रगंडभूषणस्य "बाहुवटे, बाजुबंद इति ख्यातस्य ।" के बाहुशिरसि यौति केयूरम् । यु मिश्रणे । अंगुलीयकं ऊर्मिका द्वे अंगुल्याभरणस्य आंगुठी इति ख्यातस्य ॥ १०७ ॥ ऊर्मिकैव रामनामाद्यक्षरयुता चेदंगुलिमुद्रेत्येकम् । कंकणं करभूषणं द्वे मणिबंधभूषणस्य "कांकणें इति ख्यातस्य ।" कंकणो ना प्रतिसर इति रत्नकोशः । मेखला कांची "कांचिः" सप्तकी रशना "दंत्यमध्यापि" ॥ १०८ ॥ सारसनं पंच स्त्रीणां कटिभूषणस्य "दाब, कंबरपट्टा इति ख्यातस्य । एक-

पादांगुदं तुलाकोटिर्मंजीरो नूपुरोऽस्त्रियाम् ॥ १०९ ॥
हंसकः पादकटकः किंकिणी क्षुद्रघंटिका ॥
त्वक्फलकृमिरोमाणि वस्त्रयोनिर्दश त्रिषु ॥ ११० ॥
वाल्कं क्षौमादि फालं तु कार्पासं बादरं च तत् ॥
कौशेयं कृमिकोशोत्थं रांकवं मृगरोमजम् ॥ १११ ॥
अनाहतं निष्प्रवाणि तंत्रकं च नवांबरम् ॥
तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम् ॥ ११२ ॥
पत्रोर्णं धौतकौशेयं बहुमूल्यं महाधनम् ॥

यष्टिर्भवेत्कांची मेखला त्वष्टयष्टिका । रसना षोडश ज्ञेया कलापः पंचविंशक इति भेदास्त्विह नोक्ताः । ” शृंखलमित्येकं पुंसः कटिभूषणस्य “ कडदोरा इति ख्यातस्य । ” शृंखला शृंखलः । पादांगुदं तुलाकोटिः “ तुलाकोटी ” मंजीरः “ मंजीलः ” नूपुरः ॥ १०९ ॥ हंसकः पादकटकः षट्कं नूपुरस्य “ तोरड्या पैंजण इति ख्यातस्य । हंसकादिद्वयं पादकटकस्य वाळे इति ख्यातस्येति मतम् । ” तुलाकोटिः स्त्री । मंजीरो न स्त्रियाम् । किंकिणी “ किंकिणिः कंकणी । कंकणः स्यात्प्रतिसरः कंकणी क्षुद्रघंटिकेति भागुरिः। ” क्षुद्रघंटिका द्वे घागरी “ घुंगुर ” इति ख्यातायाः । त्वगादिचतुष्कं वस्त्राणां योनिः कारणम् । कारणचातुर्विध्यात् वस्त्राणां चातुर्विध्यमिति भावः । क्षौमादित्येतद्विना वाल्कफालादयो निष्प्रवाण्यंता दश त्रिषु । तंत्रकं चेति चकारादेकादशं तंत्रकं च त्रिषु । वक्ष्यमाणदुकूलसाहचर्यात्क्षौमं क्लीबमेव । त्रिष्वित्येके ॥ ११० ॥ त्वगादिजन्यादिक्रमेणाभिहितानि । क्षौमादि वस्त्रं वाल्कं ज्ञेयम् । क्षुमा अतसी तद्विकारः क्षौमम् । आदिना शाणमित्यादि एकं त्वङ्मयस्य । फालं कार्पासं बादरं त्रीणि फलविकारस्य कार्पासवस्त्रस्य । कृमीणामपाननिर्गतसूत्रकृतः कुड्मलाकारः कोशः कृमिकोशस्तस्मादुत्थं कौशेयं स्यात् । मृगरोमजं वस्त्रं रांकवमित्येकम् । “ अत्र मृगशब्देन पशुमात्रं ग्राह्यं तेन कंबलाद्यपि ” ॥ १११ ॥ अनाहतं निष्प्रवाणि तंत्रकम् । तंत्रादचिरापहृतम् । नवांबरं चत्वारि नूतनवस्त्रस्य कोरें वस्त्र इति प्रसिद्धस्य । निर्गता प्रवाणी तंतुवायशलाकाऽस्मात् निष्प्रवाणि । धौतयोर्वस्त्रयोर्युगं यत् तदुद्गमनीयमित्येकम् । “ युगमित्यविवक्षितम् ” ॥ ११२ ॥ यद्धौतं कौशेयं

क्षौमं दुकूलं स्याद्वे तु निवीतं प्रावृतं त्रिषु ॥ ११३ ॥
स्त्रियां बहुत्वे वस्त्रस्य दशाः स्युर्वस्तयोर्द्वयोः ॥
दैर्घ्यमायाम आरोहः परिणाहो विशालता ॥ ११४ ॥
पटच्चरं जीर्णवस्त्रं समौ नक्तककर्पटौ ॥
वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम् ॥ ११५ ॥
सुचेलकः पटोऽस्त्री स्याद्वराशिः स्थूलशाटकः ॥
निचोलः प्रच्छदपटः समौ रल्लककंबलौ ॥ ११६ ॥
अंतरीयोपसंव्यानपरिधानान्यधोंऽशुके ॥

तत्पत्रोर्णं एकम् । बहुमूल्यं यद्वस्त्रादिकं तन्महाधनमित्येकम् । त्रिलिंगम् । क्षौमं दुकूलं द्वे पट्टवस्त्रस्य "पाटाव इति ख्यातस्य ।" निवीतं प्रावृतं द्वे प्रावृतवस्त्रस्य ॥ ११३ ॥ वस्त्रस्य द्वयोर्वस्तयोः प्रांतयोः दशाः स्युः । एकं स्त्रीलिंगं बहुवचनांतं च नित्यम् । "वस्तयो द्वयोरिति पाठे तु दशाः वस्तयः द्वे वस्त्रप्रांतयोः । तत्र स्त्रियां बहुत्वे दशाः । स्त्रीपुंसयोर्बहुत्वे च वस्तयः । दशावस्थादीपवर्त्योर्वस्त्रांते भूम्नि योषिति । वस्तिर्द्वयोर्निरूहे नाभ्यधो भूम्नि दशासु चेति मेदिनी ।" दैर्घ्यं आयामः आरोहः "आनाह इति रामाश्रमीकारः ।" त्रयं वस्त्रादेर्दैर्घ्यस्य "लांबी इति ख्यातस्य ।" परिणाहः विशालता द्वे विस्तारस्य "रुंदी" इति ख्यातस्य ॥ ११४ ॥ पटच्चरं जीर्णवस्त्रं द्वे जीर्णवस्त्रस्य । नक्तकः "लक्तक इत्यपि" कर्पटः द्वे जीर्णवस्त्रखंडस्य "फडकें, छाटी इति ख्यातस्य ।" वस्त्रं आच्छादनं वासः चैलं "चेलं । चेलोऽधमे त्रिषु । नपुंसकं तु वसन इति विश्वः ।" वसनं अंशुकं षट् वस्त्रस्य । अंशुकं शुक्लवस्त्रे स्याद्वस्त्रमात्रोत्तरीययोरिति रभसः ॥ ११५ ॥ सुचेलकः पटः द्वे शोभनवस्त्रस्य । तत्र पटोऽस्त्री । वराशिः "वरासिः । वरासिः स्यात्खड्गवरे वरासिः स्थूलशाटक इति दंत्यांतेषु रभसः ।" स्थूलशाटकः द्वे स्थूलवाससः । निचोलः "निचुलोऽपि । निचुलस्तु निचोले स्यादिति मेदिनी ।" प्रच्छदपटः द्वे येन वीणाढोलिकादिकं किमपि पिधीयते तस्य । रल्लकः कंबलः द्वे कंबलस्य ॥ ११६ ॥ अंतरीयं उपसंव्यानं परिधानं अधोंऽशुकं चत्वारि परिहिते वाससि । "अधोदेहभागस्यांशुकं अधोंऽशुकम् ।" प्रावारः "प्रावरः" उत्तरासंगः बृहतिका ॥ ११७ ॥

द्वौ प्रावारोत्तरासंगौ समौ बृहतिका तथा ॥ ११७ ॥
संव्यानमुत्तरीयं च चोलः कूर्पासकोऽस्त्रियाम् ॥
नीशारः स्यात्प्रावरणे हिमानिलनिवारणे ॥ ११८ ॥
अर्धोरुकं वरस्त्रीणां स्याच्चंडातकमस्त्रियाम् ॥
स्यात्त्रिष्वाप्रपदीनं तत्प्राप्नोत्याप्रपदं हि यत् ॥ ११९ ॥
अस्त्री वितानमुल्लोचो दूष्याद्यं वस्त्रवेश्मनि ॥
प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा ॥१२०॥
परिकर्मांगसंस्कारः स्यान्मार्ष्टिर्मार्जना मृजा ॥
उद्वर्तनोत्सादने द्वे समे आप्लाव आप्लवः ॥ १२१ ॥

संव्यानं उत्तरीयं पंच वामस्कंधे यद्धार्यते तस्य उत्तरीयस्य । "उत्तरस्मिन् देहभागे आसज्जत इत्युत्तरासंगः" । चोलः कूर्पासकः द्वे स्त्रीणां स्तनादिपिधायकस्य कंचुकीति प्रसिद्धस्य । गौरादित्वात् ङीषि चोलीत्यपि । कूर्परे आस्ते कूर्पासकः । पुंसि क्लीबे च । "कूर्पासस्त्वर्धचोलक इति हारावलिः" । हिमानिलयोर्निवारणं यस्मात्तादृशे प्रावरणे नीशार इत्येकं "रजई दुलई लेप इत्यादिख्यातस्य" । नितरां शीर्यते हिमानिलावत्रानेन वा । "गौरिवाकृतनीशार इति" प्रयोगः ॥ ११८ ॥ यद्वरस्त्रीणां अर्धोरुकं अर्धोरुपिधायिकं वस्त्रं तच्चंडातकं स्यात् एकं "परकर, लहंगा इति ख्यातस्य" । ऊर्वोरर्धमर्धोरु तत्र स्थितत्वाल्लक्षणया वस्त्रमप्यर्धोरु । स्वार्थे कन् । यत् आप्रपदं पादाग्रपर्यंतं प्राप्नोति वस्त्रादि तत् आप्रपदीनम् । त्रिषु एकम् ॥ ११९ ॥ वितानं उल्लोचः द्वे आतपाद्यपनयार्थमुपरिबद्धस्य चंद्रकाख्यस्य वाससः "चांदवा इति ख्यातस्य ।" पुंसि वितानः । दूष्यमित्यादिकं वस्त्रवेश्मनि वस्त्ररचितगृहे एकम् । "दूश्यमिति तालव्यमध्यमपि" । आद्यशब्दात्पटकुटी "डेरा राहुटी तंबु" इत्यादि । प्रतिसीरा जवनिका "यमनिका" तिरस्करिणी । तिरस्कारिणी तिरस्क्रियतेऽनया । " त्रयं जवनिकायाः पडदा "कनाथ" इति ख्यातायाः ॥ १२० ॥ परिकर्म अंगसंस्कारः द्वे कुंकुमादिना शरीरे संस्कारमात्रस्य । "परिमलवर्जनार्था क्रिया परिकर्म । प्रतिकर्मेति क्वचित्पाठः । मार्ष्टिः मार्जना मृजा प्रोक्षणादिना देहनिर्मलीकरणस्य । उद्वर्तनं उत्सादनं द्वे पिष्टा-

स्नानं चर्चा तु चार्चिक्यं स्थासकोऽथ प्रबोधनम् ॥
अनुबोधः पत्रलेखा पत्रागुलिरिमे समे ॥ १२२ ॥
तमालपत्रतिलकचित्रकाणि विशेषकम् ॥
द्वितीयं च तुरीयं च न स्त्रियामथ कुंकुमम् ॥ १२३ ॥
काश्मीरजन्माग्निशिखं वरं बाह्लीकँपीतने ॥
रक्तसंकोचपिशुनं धीरं लोहितचंदनम् ॥ १२४ ॥
लाक्षा राक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः ॥
लवंगं देवकुसुमं श्रीसंज्ञमथ जायकम् ॥ १२५ ॥

दिना शरीरमलापकरणस्य । आप्लावः आप्लवः ॥ १२१ ॥ स्नानं त्रीणि स्नानस्य । चर्चा चार्चिक्यं स्थासकः त्रीणि चंदनादिना देहविलेपविशेषस्य उटी इति ख्यातस्य । "चर्चिकैव चार्चिक्यम् । स्वार्थे ष्यञ् ।" प्रबोधनं अनुबोधः द्वयं गतगंधस्य पुनर्गंधव्यक्तीकरणे । यथा कस्तूरिकादेर्मेघादिना । पत्रलेखा पत्रांगुलिः द्वे कस्तूरिकाकेशरादिना कपोलादौ रचितपत्रवल्लयाः । पत्राकृतिर्लेखा पत्रपलेखा । कलिंगादिदेशेषु प्रसिद्धेयम् ॥ १२२ ॥ तमालपत्रम् । तमालस्य पत्रमिव तमालपत्रम् । "तमालपत्रं तापिच्छे तिलके पत्रकेऽपि चेति विश्वः" तिलकं चित्रकं विशेषकं चत्वारि ललाटे कस्तूर्यादिना कृततिलकस्य । "तमालस्तिलके खड्ग इति" विश्वात्तमाल इत्यप्यन्यत्र । अत्र द्वितीयं तिलकमिति तुरीयं विशेषकमिति च द्वे न स्त्रियां किंतु पुन्नपुंसकयोः । कुंकुमम् ॥ १२३ ॥ काश्मीरजन्म अग्निशिखं वरं बाह्लीकं "बाह्लिकम् । बाह्लीकं बाह्लिकं धीरहिंगुनोर्नाश्वदेशयोरिति त्रिकांडशेषः ।" पीतनं रक्तं संकोचं पिशुनं धीरं लोहितचंदनं एकादश कुंकुमस्य । "रक्तं नील्यादिरंजिते । कुंकुम इति हैमः । संकोचो मीनभेदे च बंधे क्लीबं तु कुंकुम इति विश्वमेदिन्यौ । पिशुनं कुंकुमेऽपि चेति मेदिनी" ॥ १२४ ॥ लाक्षा राक्षा जतु यावः अलक्तः द्रुमामयः षट्कं लाक्षायाः । "न लक्तोऽस्मादलक्तः । द्रुमाणामामयो द्रुमामयः ।" लवंगं देवकुसुमं श्रीसंज्ञं त्रीणि लवंगस्य । देवानां कुसुमम् । कुसुमेषु देव इव । देवयोग्यं कुसुमं वा । श्रीसंज्ञं लक्ष्मीपर्यायनामकम् । जायकम् ॥ १२५ ॥ कालीयकं कालानुसार्यं त्रयं जायकाख्यगंधद्रव्यस्य पीतचंदन इति

कालीयकं च कालानुसार्यं चाथ समार्थकम् ॥
वंशिकागुरुराजार्हलोहं कृमिजजोंगकम् ॥ १२६ ॥
कालागुर्वगुरु स्यात्तु मंगल्या मल्लिगंधि यत् ॥
यक्षधूपः सर्जरसो रालसर्वरसावपि ॥ १२७ ॥
बहुरूपोऽप्यथ वृकधूपकृत्रिमधूपकौ ॥
तुरुष्कः पिंडकः सिह्लो यावनोऽप्यथ पायसः ॥१२८॥
श्रीवासो वृकधूपोऽपि श्रीवेष्टसरलद्रवौ ॥

ख्यातस्य। जयति गंधांतरं जायकम्। "कालीयकं च कालेयं वर्णकं कांतिदायकमिति व्याडिः"। वंशिकं "वंशकं" अगुरु राजार्हं लोहं कृमिजं जोंगकम ॥ १२६ ॥ कालागुरु सप्तकं समार्थकम्। कृष्णागुरुणः पर्याया इत्यर्थः। "न गुरुर्यस्मात्तदगुरु। अगुरुर्जोंगके लघाविति हैमादगुरुः पुंस्यपि। अगरुरिति क्वचित्। लोहोऽस्त्री शस्त्रके लौहे जोंगके सर्वतैजस इति मेदिनीकोशाल्लोहं पुंस्यपि।" अगुरु इत्यस्य यच्छब्देन संबंधः। स्यादित्यस्य त्वंतत्वादुत्तरेण संबंधः। यदगुरु मल्लिगंधि सा मंगल्या स्यादित्येकम्। "अत्र जोंगकांतानि अगुरुणः। कालागुर्वादि द्वयं कृष्णागुरुणः। त्वित्यत्र तदिति पाठस्तत्र यदगुरु मल्लिगंधि तन्मंगल्येत्यर्थः"। यक्षधूपः सर्जरसः रालः सर्वरसः ॥ १२७ ॥ बहुरूपः पंच धूपस्य "राळ इति ख्यातस्य। अराल इति वा। रालः सर्जरसोऽरालो धूपको वह्निवल्लभ इति रभसः।" वृकधूपः कृत्रिमधूपकः द्वे अनेकपदार्थकृतधूपस्य। तुरुष्कः पिंडकः सिह्लः यावनः चत्वारि सिह्लाख्यगंधद्रव्यस्य "ऊद, लोबान इति ख्यातस्य। तुरुष्कः सिह्लके म्लेच्छजातौ देशांतरेऽपि चेति विश्वमेदिन्यौ"। पायसः ॥ १२८ ॥ श्रीवासः वृकधूपः श्रीवेष्टः "श्रीपिष्टः। सरलद्रवश्रीपिष्टदधिक्षीरघृताह्वय इति रभसः।" सरलद्रवः पंच सरलद्रवस्य "विशेषनामकधूप इति ख्यातस्य"। पयसो दुग्धस्य क्षीरस्य वा विकारः पायसः। सरलस्य देवदारोर्द्रवः सरलद्रवः। "पायसस्तु क्लीबपुंसोः श्रीवासपरमान्नयोरिति मेदिनी"। मृगनाभिः मृगमदः कस्तूरी त्रयं कस्तूर्याः। मृगनाभिः पुंसि। "मृगनाभिर्मृगमदो मृगः कस्तूरिकापि चेति माधवः। मदो रेतसि कस्तूर्यामिति मेदिनी। मुख्यराट्क्षत्रयोर्नाभिः पुंसि

मृगनाभिर्मृगमदः कस्तूरी चाथ कोलकम् ॥१२९॥
कंकोलकं कोशफलमथ कर्पूरमस्त्रियाम् ॥
घनसारश्चंद्रसंज्ञः सिताभ्रो हिमवालुका ॥ १३० ॥
गंधसारो मलयजो भद्रश्रीश्चंदनोऽस्त्रियाम् ॥
तैलपर्णिकगोशीर्षे हरिचंदनमस्त्रियाम् ॥ १३१ ॥
तिलपर्णी तु पत्रांगं रंजनं रक्तचंदनम् ॥
कुचंदनं चाथ जातीकोशजातीफले समे ॥ १३२ ॥
कर्पूरागरुकस्तूरीकंकोलैर्यक्षकर्दमः ॥

प्राण्यंमके द्वयोः । चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामद इति रभसः ।" कोलकं "कोरकम् । कोरकोऽस्त्री कुड्मले स्यात्कंकोलकमृणालयोरिति मेदिनी" ॥ १२९ ॥ कंकोलकं कोशफलं त्रीणि कंकोळ, गवला इति ख्यातस्य । कर्पूरं घनसारः चंद्रः सिताभ्रः सिताभ इत्यपि । हिमवालुका पंच कर्पूरस्य । चंद्रसंज्ञश्चंद्रपर्यायनामकः । पुंसि कर्पूरः ॥ १३० ॥ गंधसारः मलयजः भद्रश्रीः चंदनः चत्वारि चंदनस्य "मलयागरु मैलागिरि इति ख्यातस्य ।" भद्रश्रियौ । तैलपर्णिकमित्येकं धवलशीतलचंदनविशेषस्य । गोशीर्षमित्येकं उत्पलगंधिचंदनस्य । हरिचंदनमित्येकं कपिलवर्णचंदनस्य । एवं त्रयो भेदाः। तिलपर्णे वृक्षभेदे जाता तैलपर्णी । स्वार्थे कन् । तैलपर्णगोशीर्षौ गिरी आकरावस्येति स्वामी ॥ १३१ ॥ तिलपर्णी पत्रांगं रंजनं रक्तचंदनं कुचंदनं पंच रक्तचंदनस्य । "तिलपर्णी नदी आकरोऽस्यास्ति । अच् ङीष् च ।" जातीकोशं जातीफलम् । जातिकोशं जातिफलमित्यपि पाठः । जातिः जाती वा । कोशं फलं इति पृथगपि । "जातिर्जातिफलेऽपि चेति रभसः । कोशोऽस्त्री कुड्मले पत्रे दिव्ये खड्गपिधानके । जातिकोशे इति मेदिनीविश्वप्रकाशौ । फलं लाभे जातिकोशे बाणाग्रे फलकेऽपि चेति रुद्रः ।" द्वे जायफळ इति ख्यातस्य ॥ १३२ ॥ कर्पूरादिभिः समभागैः पिंडीकृतो लेपविशेषो यक्षकर्दम इत्येकम् । "कर्पूरागरुकस्तूरीकंकोलघुसृणानि च । एकीकृतमिदं सर्वं यक्षकर्दम इष्यत इति व्याडिः । घुसृणं केशरम् । अन्यत्स्पष्टम् । कुंकुमागरुकस्तूरी कर्पूरं चंदनं तथा । महासुगंधिरित्युक्तं नामतो

गात्रानुलेपनी वर्तिर्वर्णकं स्याद्विलेपनम् ॥ १३३ ॥
चूर्णानि वासयोगाः स्युर्भावितं वासितं त्रिषु ॥
संस्कारो गंधमाल्याद्यैर्यः स्यात्तदधिवासनम् ॥१३४॥
माल्यं मालास्रजौ मूर्ध्नि केशमध्ये तु गर्भकः ॥
प्रभ्रष्टकं शिखालंबि पुरोन्यस्तं ललामकम् ॥१३५॥
प्रालंबमृजुलंबि स्यात्कंठाद्वैकक्षिकं तु तत् ॥
यत्तिर्यक्क्षिप्तमुरसि शिखास्वापीडशेखरौ ॥ १३६ ॥
रचना स्यात्परिस्यंद आभोगः परिपूर्णता ॥
उपधानं तूपबर्हः शय्यायां शयनीयवत् ॥ १३७ ॥

यक्षकर्दम इति धन्वंतरिः ॥" गात्रानुलेपनी वर्तिः वर्णकं विलेपनं चत्वारि "गात्रानुलेपयोग्यस्य पिष्टघृष्टसुगंधिद्रव्यस्य उटणें इति ख्यातस्य । गात्रानुलेपनी वर्तिर्विगंध्यथ विलेपनम् । वर्णकं चाथ विच्छित्तिः स्त्री कषायोऽगरागक इति रभसात् । आद्यद्वयमुक्तार्थमेव । वर्णकादिद्वयं घृष्टचंदनादिलेपमात्रस्य । कर्पूरागुरुरित्यपि पाठः" ॥ १३३ ॥ चूर्ण वासयोगः द्वे पटवासादिचूर्णमात्रस्य । "वासे सुगंधिकरणे योग उपायो वासयोगः ।" भावितं वासितं द्वे गंधद्रव्येण वासितस्य वस्तुनः । त्रिषु । गंधमाल्यधूपादिभिर्यः संस्कारः "वस्त्रतांबूलादीनां" सौरभाधानं तदधिवासनमित्युच्यते । एकम् ॥ १३४ ॥ माल्यं माला स्रक् त्रयं मूर्ध्नि धृतायाः कुसुमावलेः उपचारादन्यत्रापि प्रयोगः । केशमध्ये धृता माला गर्भक इत्युच्यते एकम् । यन्माल्यं शिखायां लंबमानं तत्प्रभ्रष्टकमित्येकम् । पुरो न्यस्तं ललाटपर्यंतं क्षिप्तं ललामकमित्येकम् ॥ १३५ ॥ यन्माल्यं कंठादृजुलंबि सरलं लंबमानं तत्प्रालंबमित्येकम् । यन्माल्यं तिर्यगुपवीतमनृजु उरसि क्षिप्तं तत् वैकक्षिकमित्येकं चतुरक्षरम् । "विकक्षमुरस्तत्र भवं वैकक्षकमित्यपि ।" आपीडः शेखरः द्वे शिखासु न्यस्तमाल्यमात्रस्य ॥ १३६ ॥ रचना परिस्यंदः द्वे माल्यादिरचनायाः । "परिस्पंद इत्यपि पाठः ।" आभोगः परिपूर्णता द्वे सर्वोपचारिपरिपूर्णतायाः । उपधानं उपबर्हः द्वे उच्छीर्षस्य "उशी इति ख्यातस्य" । उपधीयते आरोप्यते शिरोऽत्र उपाधानम् । शय्या शयनीयं ॥ १३७ ॥ शयनं त्रीणि शय्यायाः । वदिति उत्तरेण समत्वद्योतनाय । मंचः

शयनं मंचपर्यंकपल्यंकाः खट्वया समाः ॥
गेंदुकः कंदुको दीपः प्रदीपः पीठमासनम् ॥ १३८ ॥
समुद्गकः संपुटकः प्रतिग्राहः पतद्ग्रहः ॥
प्रसाधनी कंकतिका पिष्टातः पटवासकः ॥ १३९ ॥
दर्पणे मुंकुरादर्शौ व्यजनं तालवृंतकम् ॥

इति मनुष्यवर्गः ॥ ६ ॥

---

संततिर्गोत्रजननकुलान्यभिजनान्वयौ ॥
वंशोऽन्ववायः संतानो वर्णाः स्युर्ब्राह्मणादयः ॥ १ ॥

पर्यंकः पल्यंकः खट्वा चत्वारि खट्वायाः "पलंग, बाज इति ख्यातायाः" । गेंदुकः "गेंडुकः गंडूकः" कंदुकः द्वे चेंडू इति ख्यातस्य क्रीडाकारणस्य । "गिरदी, गालउशी इति ख्यातस्येति केचित् ।" दीपः प्रदीपः द्वे दीपस्य । पीठं आसनं द्वे आसनस्य । "विष्टरः पीठमस्त्रियामिति त्रिकांडशेषः" ॥ १३८ ॥ समुद्गकः संपुटकः द्वे संपुटस्य "डबा चौफुला इत्यादिख्यातस्य ।" प्रतिग्राहः "प्रतिग्रहः । प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे । विप्रेभ्यो विधिवद्देये तद्ग्रहे च ग्रहांतर इति मेदिनी ।" पतद्ग्रहः द्वे "पिकदाणी इति ख्यातस्य ।" प्रसाधनी कंकतिका द्वे गजदंतादिरचितायाः केशमार्जन्याः फणी इति ख्यातायाः । कंकतं तु प्रसाधनमिति क्लीबकांडेऽमरमाला । पिष्टातः पटवासकः द्वे बुका इति ख्यातस्य चूर्णविशेषस्य ॥ १३९ ॥ दर्पणः मुकुरः "मकुरः । मकुरः स्यान्मुकुरवद्दर्पणे बकुलद्रुमे । कुलालदंडे इति मेदिनी । मंकुर इत्यपि केचित् ।" आदर्शः त्रीणि दर्पणस्य "आरसा इति ख्यातस्य ।" साहचर्याद्दर्पणः पुंस्येव । आदर्शो दर्पणः प्रोक्त इत्यमरमाला । व्यजनं तालवृंतकं द्वे तालपत्रादिनिर्मितव्यजनस्य । व्यजति वायुरनेन व्यजनम् ॥ इति मनुष्यवर्गः ॥ ६ ॥ संततिः गोत्रं जननं कुलम् । कुलं जनपदे गोत्रे सजातीयगणेऽपि च । भवने च तनौ क्लीबमिति कोशांतरे । अभिजनः अन्वयः वंशः अन्ववायः संतानः नव वंशस्य । तत्र संततिः स्त्री । ब्राह्मणादयो वर्णाः स्युः एकम् ॥ १ ॥ ब्राह्मणक्षत्रियवैश्यशूद्राः वर्णाश्चातुर्वर्ण्यमित्येकम् । राजबीजी

( विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमिति स्मृतम् ॥ ) (१)
राजबीजी राजवंश्यो बीज्यस्तु कुलसंभवः ॥ २ ॥
महाकुलकुलीनार्यसभ्यसज्जनसाधवः ॥
ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये ॥ ३ ॥
आश्रमोऽस्त्री द्विजात्यग्रजन्मभूदेववाडवाः ॥
विप्रश्च ब्राह्मणोऽसौ षट्कर्मा यागादिभिर्वृतः ॥ ४ ॥
विद्वान् विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः ॥
धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पंडितः कविः ॥५॥
धीमान्सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः ॥
दूरदर्शी दीर्घदर्शी श्रोत्रियश्छांदसौ समौ ॥ ६ ॥

राजवंश्यः द्वे राजवंशोत्पन्नस्य । राजबीजिनौ । बीज्यः कुलसंभवः द्वे कुलमात्रोत्पन्नस्य ॥ २ ॥ महाकुलः "माहाकुलः" कुलीनः । महत्कुलमस्य महाकुलः महाकुले भवो माहाकुलः । कुले भवः कुलीनः । आर्यः सभ्यः सज्जनः साधुः षट् सज्जनस्य । ब्रह्मचार्यादयश्चत्वारोऽपि आश्रमशब्दवाच्या इत्यर्थः । कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा ॥ सर्वत्र मैथुनत्यागो ब्रह्मचर्यं तदुच्यते इति । एकम् । "वनमेव प्रस्थः प्रदेशस्तत्र भवः वानप्रस्थः। अत्र भिक्षुर्यतिः ॥ ३ ॥ द्विजातिः अग्रजन्मा भूदेवः वाडवः विप्रः ब्राह्मणः षट् ब्राह्मणस्य । "वडवायां जातो वाडवः । वडवा द्विजयोषितीति मेदिनी ।" असौ ब्राह्मणो यागादिभिर्यजनादिभिर्युक्तः षट्कर्मा स्यात् । तदुक्तम् । इज्याध्ययनदानानि याजनाध्यापने तथा । प्रतिग्रहश्च तैर्युक्तः षट्कर्मा विप्र उच्यत इति । एकम् ॥ ४ ॥ विद्वान् विपश्चित् दोषज्ञः सन् सुधीः कोविदः बुधः धीरः मनीषी ज्ञः प्राज्ञः "प्रज्ञः । प्रज्ञस्तु पंडिते वाच्यलिंगो बुद्धौ तु योषितीति मेदिनी ।" संख्यावान् पंडितः कविः ॥ ५ ॥ धीमान् सूरिः कृती कृष्टिः लब्धवर्णः विचक्षणः दूरदर्शी दीर्घदर्शी द्वाविंशतिः पंडितस्य । विद्वांसौ । विपश्चितौ । संतौ । ज्ञौ । संख्यावंतौ । कृतिनौ । "संख्या विचारणास्त्यस्य संख्यावान् । लब्धो वर्णः स्तुतिर्येन लब्धवर्णः दूरान्दूराद्वा पश्यतीति दूर-

१ इदमर्धं तालपत्रपुस्तके एव नास्ति ॥

("मीमांसको जैमिनीये वेदांती ब्रह्मवादिनि ॥
वैशेषिके स्यादौलूक्यः सौगतः शून्यवादिनि" ॥ १ ॥
"नैयायिकस्त्वक्षपादः स्यात्स्याद्वादिक आर्हकः ॥
चार्वाकलौकायतिकौ सत्कार्ये सांख्यकापिलौ"॥२॥)(१)
उपाध्यायोऽध्यापकोऽथ स्यान्निषेकादिकृद्गुरुः ॥
मंत्रव्याख्याकृदाचार्य आदेष्टा त्वध्वरे व्रती ॥ ७ ॥
यष्टा च यजमानश्च स सोमवति दीक्षितः ॥

दर्शी ।" श्रोत्रियः छांदसः द्वे वेदाध्यायिनः ॥ ६ ॥ मीमांसकमित्यादिपद्यद्वयमत्र केचित्पठंति । तदत्रत्यं नेत्युपेक्षितम् । तस्येयं बालबोधार्थं व्याख्या। मीमांसकः जैमिनीयः द्वे मीमांसाशास्त्रवेत्तुः । वेदांती ब्रह्मवादी द्वे वेदांतशास्त्रज्ञस्य । वैशेषिकः औलूक्यः द्वे सप्तपदार्थवादिनः । ते च पदार्थाः । द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्तेति कणादमतम् । सौगतः शून्यवादी द्वे जगत्कारणं शून्यमिति मतावलंबिनो नास्तिकस्य ॥ १ ॥ नैयायिकः अक्षपादः आक्षपादो वा द्वे न्यायशास्त्रज्ञस्य । प्रमाणप्रमेयसंशयविपर्ययतर्कैरादिषोडशपदार्थवादिनः गोतमस्य । स्याद्वादिकः आर्हकः द्वे मोक्षोऽस्ति स्यान्नास्ति स्यादिति वादिनः । चार्वाकः लौकायतिकः लोकायतिको वा द्वे देहात्मवादिनो बौद्धस्य । सांख्यः कापिलः द्वे तदेवेदं कार्यं जगदिति मानिनः सांख्यशास्त्रज्ञस्य ॥ २ ॥ उपाध्यायः अध्यापकः द्वे "उपेत्याधीयतेऽस्मादुपाध्यायः । अध्यापयतीत्यध्यापकः ।" निषेको गर्भाधानं आदिना पुंसवनादि । तस्य कर्मणः कर्ता पित्रादिर्गुरुः स्यात् एकम् । मंत्रो वेदस्तस्य व्याख्याकृत् आचार्यः स्यात् । उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सांगं च सरहस्यं च तमाचार्यं प्रचक्षते इति । एकम् । व्याख्यालक्षणं तु । पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना । आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं मतमित्युक्तम् । अध्वरे यागविषये य ऋत्विजामादेष्टा स व्रती ॥ ७ ॥ यष्टा यजमानः इति त्रयेणोच्यते । "आदिष्टीत्यपि पाठः" । व्रतिनौ । यष्टारौ । स यजमानः सोमवति यागे आदेष्टा दीक्षित इत्युच्यते एकम् । इज्याशीलः यायजूकः द्वे यजनशीलस्य । "पुनः पुनः भृशं वा यजते यायजूकः।"

१ इदं पद्यद्वयं तालपत्रपुस्तकेऽपि नास्ति ॥

इज्याशीलो यायजूको यज्वा तु विधिनेष्टवान् ॥ ८ ॥
स गीष्पतीष्ट्या स्थपतिः सोमपीथी तु सोमपाः ॥
सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः ॥ ९ ॥
अनूचानः प्रवचने सांगेऽधिती गुरोस्तु यः ॥
लब्धानुज्ञः समावृत्तः सुत्वा त्वभिषवे कृते ॥ १० ॥
छात्रांतेवासिनौ शिष्ये शैक्षाः प्राथमकल्पिकाः ॥
एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः ॥ ११ ॥
सतीर्थ्यास्त्वेकगुरवश्चित्तवानग्निमग्निचित् ॥

विधिना "सोमेन यजेत" इत्यादियागविधायकविधिमात्रेणेष्टवान् यागं कृतवान् स यज्वा स्यात् एकम् । यज्वानौ ॥ ८ ॥ यः गीष्पतीष्ट्या बृहस्पतिसवविधिना इष्टवान् स स्थपतिरित्युच्यते । वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति तद्विधिः एकम् । सोमपीथी "सोमपीती सोमपीवी" सोमपाः "सोमपः" द्वे सोमयाजिनः । सोमपीथिनौ । "सर्ववेदाऽयम्, दीक्षितस्तु तत्कालम् ।" येन सर्वस्वदक्षिणो विश्वजिन्नामा याग इष्टः स सर्ववेदाः स्यात् एकम् । "सर्वस्वं दक्षिणा यत्र । सर्वं वेदयति सर्ववेदाः । विद्लृ लाभे"। सर्ववेदसौ ॥ ९ ॥ सांगे शिक्षाद्यंगोपेते प्रवचने वेदे अधिती कृताध्ययनोऽनूचान इत्येकम् । योऽनूचानो गुरोः सकाशात् गृहस्थाद्याश्रमांतरप्राप्तये लब्धानुज्ञः स समावृतः स्यात् एकम् । अभिषवे स्नाने कृते सति सुत्वा स्यात् । सुयजोर्ङ्वनिबिति सुनोतेर्भूते ङ्वनिप् । सुत्वन् । सुत्वा सुत्वानौ । अभिषवः स्नपने पीडने स्नाने सुरासंधाने च ॥१०॥ छात्रः अंतेवासी "अंतवासीत्यपि" शिष्यः त्रीणि । गुरोर्दोषाच्छादनं छत्रं तच्छीलमस्य छात्रः । शीलमित्यनुवर्तमाने छत्रादिभ्योण इति णप्रत्ययः । अंते समीपे वस्तुं शीलमस्यांतेवासी । शैक्षाः प्राथमकल्पिकाः द्वे आरब्धाध्ययनानां बटूनाम् । शिक्षां लभंते ते शैक्षाः । प्रथमकल्पः आद्यारंभः प्रयोजनं येषां ते प्राथमकल्पिकाः । एकः समानो ब्रह्मव्रताचारो वेदव्रताचरणं येषां ते । एकशाखास्त्राध्यायिनो ब्रह्मचारिणस्ते मिथः परस्परं सब्रह्मचारिण इत्युच्यंते । चरणे ब्रह्मचारिणीति समानस्य सभावः । एकम् ॥ ११ ॥ एकः समानो गुरुर्येषां ते परस्परं सतीर्थ्याः स्युः । समानतीर्थे

पारंपर्योपदेशे स्यादैतिह्यमितिहाव्ययम् ॥ १२ ॥
उपज्ञा ज्ञानमाद्यं स्याज्ज्ञात्वारंभ उपक्रमः ॥
यज्ञः सवोऽध्वरो यागः सप्ततंतुर्मखः क्रतुः ॥ १३ ॥
पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः ॥
एते पंच महायज्ञा ब्रह्मयज्ञादिनामकाः ॥ १४ ॥
समज्या परिषद्गोष्ठी सभासमितिसंसदः ॥
आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ॥१५॥
प्राग्वंशः प्राक् हविर्गेहात्सदस्या विधिदर्शिनः ॥

वासीति यत्प्रत्ययः । तीर्थे ये इति समानस्य सः । एकम् । योऽग्निं चितवान् सोऽग्निचित् एकं कृताग्निचयनस्य । ऐतिह्यं इतिह द्वयं पारंपर्येण लोकपरंपरया य उपदेशस्तस्मिन् । इतिहेत्यव्ययं इतिहेति निपातसमुदायस्तत्र भवमैतिह्यम् ॥१२॥ यत्प्रथमं ज्ञानं सा उपज्ञा स्यात् । यथा ग्रंथस्य पाणिनेरुपज्ञा एकम् । ज्ञात्वा य आरंभः स उपक्रमः । यथा ग्रंथस्योपक्रमः ज्ञानपूर्वक आरंभ इत्यर्थः । एकम् । यज्ञः सवः अध्वरः यागः सप्ततंतुः मखः क्रतुः सप्त यज्ञस्य ॥ १३ ॥ पाठादयः पंच ब्रह्मयज्ञादिनामका महायज्ञाः स्युः एकम् । तत्र पाठो विधिना वेदादेः पठनं स ब्रह्मयज्ञः । होमो वैश्वदेवहोमः स देवयज्ञः । अतिथीनां गृहागतानां सपर्या अन्नादिना तोषणं स मनुष्ययज्ञः । तर्पणं पितॄणामन्नोदकादिना तृप्तिसंपादनं स पितृयज्ञः । बलिः बलिहरणं स भूतयज्ञः । "पठनं पाठः । भावे घञ् । मनुः । अध्यायनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनमिति" ॥ १४ ॥ समज्या परिषत् गोष्ठी सभा समितिः संसत् आस्थानी आस्थानं सदः नव सभायाः। परिषदौ । गोष्ठ्यौ । संसदौ । आस्थान्यौ । सदः सांतं क्लीबे । स्त्रीत्वे तु सदाः । "समजंति गच्छंत्यस्यां समज्या । गावोऽनेका वाचस्तिष्ठंत्यस्यां गोष्ठी । सह समाना वा भांत्यस्यां सभा । सभालक्षणं मनुः । यस्मिन्देशे निषीदंति विप्रा वेदविदस्त्रयः । राज्ञश्चाधिकृतो विद्वान् ब्राह्मणस्तां सभां विदुरिति । संयंति गच्छंत्यस्यां समितिः । संसीदंत्यस्यां संसत् । आतिष्ठंत्यस्यामास्थानी । सीदंत्यस्यां सदः" ॥ १५ ॥ हविर्गेहात्प्राक् पूर्वदेशे सदस्यादीनां यद्गृहं स प्राग्वंश इत्येकम् । यज्ञशालायाः पूर्वपश्चिमस्तंभयोरर्पितं दीर्घ-

सभासदः सभास्तारा: सभ्याः सामाजिकाश्च ते॥१६॥
अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात् ॥
आग्नीध्राद्या धनैर्वार्या ऋत्विजो याजकाश्च ते ॥१७॥
वेदिः परिष्कृता भूमिः समे स्थंडिलचत्वरे ॥
चषालो यूपकपटः कुंबा सुगहना वृतिः ॥ १८ ॥
यूपाग्रं तर्म निर्मंथ्यदारुणि त्वरणिर्द्वयोः ॥
दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः ॥ १९ ॥
अग्नित्रयमिदं त्रेता प्रणीतः संस्कृतोऽनलः ॥
समूह्यः परिचाय्योपचाय्यावग्नौ प्रयोगिणः ॥ २० ॥

काष्ठं प्राग्वंश इति क्वचित् । यज्ञकर्मणि विधिं वेदोक्तक्रियाकलापं ये पश्यंति ते सदस्याः "ऋत्विग्विशेषा इत्यर्थः" एकम् । सभासदः सभास्तारा: सभ्याः सामाजिकाः चत्वारि सभ्येषु । "सभां स्तृणंति सभास्तारा: । स्तृञ् आच्छादने । सभायां साधवः सभ्याः । समाजं रक्षंति सामाजिकाः" ॥ १६ ॥ यजुर्विदृत्विगध्वर्युः एकम् । सामविदुद्गाता एकम् । ऋग्वेदवित् होता एकम् । धनैर्वार्याः यजमानेन धनादि दत्वा वरणीया ये आग्नीध्राद्यास्ते ऋत्विजः याजकाः द्वे "आग्नीध्र आद्यो येषाम् । आद्यशब्दाद्ब्रह्मोद्गातृहो-त्रध्वर्य्वादयः षोडश । ऋतौ यजंति ते ऋत्विजः । कात्यस्तु । वृताः कुर्वंति ये यज्ञमृत्विजो याजकाश्च ते इति" ॥ १७ ॥ परिष्कृता यज्ञार्थं साधिता डमरुकाकारा भूमिर्वेदिरित्युच्यते एकम् । वेदीत्यपि । स्थंडिलं चत्वरं द्वे यथार्थं संस्कृतस्य भूभागस्य । यूपकटकः यूपस्य शिरसि वलयाकारः काष्ठ-विकारश्चषालः स्यात् एकम् । यागभूमावंत्यजादिदर्शनवारणाय सुगहना वृतिर्वेष्टनं कुंबा स्यात् "एकम् । स्त्रियाम्" ॥ १८ ॥ यूपाग्रं तर्म द्वे यूपाग्रे । तर्मणी । निर्मंथ्यदारुणि अग्निसिद्ध्यर्थं निर्मंथनीये काष्ठे अरणिरित्येकम् । स्त्रीपुंसयोः । "अरणीति स्त्रियाम् ।" दक्षिणाग्निः गार्हपत्यः आहवनीयः एते त्रयोऽग्नयः अग्निविशेषाः स्युः एकैकम् । "क्वचित्तु त्रयाणां द्वंद्वः पठ्यते ।" ॥ १९ ॥ इदमग्नित्रयं त्रेता स्यात् एकम् । "त्रित्वं इता" त्रेता । स्त्री । त्रेते । मंत्रादिना संस्कृतोऽग्निः प्रणीत इत्येकम् । समूह्यः परिचाय्यः उपचाय्यः

यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते ॥
तस्मिन्नानाय्योऽथाग्नायी स्वाहा च हुतभुक्प्रिया ॥२१॥
ऋक् सामिधेनी धाय्या च या स्यादग्निसमिंधने ॥
गायत्रीप्रमुखं छंदो हव्यपाके चरुः पुमान् ॥ २२ ॥
आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः ॥
धवित्रं व्यजनं तद्यद्रचितं मृगचर्मणा ॥ २३ ॥
पृषदाज्यं सदध्याज्ये परमान्नं तु पायसम् ॥
हव्यकव्ये दैवपित्र्ये अन्ने पात्रं स्रुवादिकम् ॥ २४ ॥

एते त्रयः अग्नौ प्रयोगोऽस्ति येषां ते। अग्निधारणार्थे स्थलविशेषे प्रयुक्ताः ॥ २० ॥ गार्हपत्यादानीयोद्धृत्य यो दक्षिणाग्निः प्रणीयते प्रवेश्यते तत्र आनाय्य इत्येकम्। अग्नायी स्वाहा हुतभुक्प्रिया त्रयमग्नेः प्रियायाम्। अस्य स्वाहाशब्दस्य नाव्ययत्वं द्रव्यवाचित्वात्। अत एव स्वाहां तु दक्षिणे पार्श्वे इति प्रयोगः संगच्छते ॥ २१ ॥ अग्निसमिंधने समित्प्रक्षेपेण वह्निज्वलने या ऋक् प्रयुज्यते सा सामिधेनी धाय्या च स्यात् द्वे । गायत्र्युष्णिगित्यादि छंदः स्यात् एकम्। सांतं क्लीबम्। हव्यपाकेऽग्निमुखे हूयमानेऽन्ने चरुरित्येकम्। "हव्यस्य पाकः हव्यपाकः। अनवस्रावितांतरूष्मपाक ओदनश्चरुरिति याज्ञिकाः। चर्यते भक्ष्यते इति चरुः। मीमांसकैरपि त्रिवृच्चर्वधिकरणे ऽन्नपरत्वं चरुशब्दस्याभ्युपगतम् । विश्वप्रकाशे तु । चरुर्भांडे च हव्यान्न इत्यनेकार्थतोक्ता। अथ पुमान् चरुर्हव्यान्नभांडयोरिति मेदिनी च" ॥२२॥ शृतं पक्कं च तदुष्णं च तस्मिन् क्षीरे दधियोगतो या विकृतिः सा आमिक्षा स्यात् एकम्। मृगचर्मणा रचितं यद्व्यजनं तद्धवित्रमित्येकम्। "धुवित्रमित्यपि" ॥ २३ ॥ दधियुक्ते घृते पृषदाज्यमित्येकम्। "पृषातकम्। पृषातकं सदध्याज्ये पृषदाज्यं तदुच्यत इति हेमचंद्रः।" परमान्नं पायसं द्वे क्षीरान्नस्य। दैवपित्र्ये देवपितृसंबंधिनि अन्ने क्रमेण हव्यकव्ये स्याताम्। "हूयंते प्रीण्यंते देवा येन हव्यम्। कूयते पितृभ्यः कव्यम्। कु शब्दे।" देवेभ्यो दीयमानमन्नं हव्यम्। पितृभ्यो दीयमानमन्नं कव्यमित्यर्थः। अग्निमुखेन देवेभ्योऽन्नं दीयते। विप्रमुखेन पितृभ्योऽन्नमिति। "पैत्रमित्यपि। तस्येद-

ध्रुवोपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियः ॥
उपाकृतः पशुरसौ योऽभिमंत्र्य क्रतौ हतः ॥ २५ ॥
परंपराकं शमनं प्रोक्षणं च वधार्थकम् ॥
वाच्यलिंगाः प्रमीतोपसंपन्नप्रोक्षिता हते ॥ २६ ॥
सान्नाय्यं हविरग्नौ तु हुतं त्रिषु वषट्कृतम् ॥
दीक्षांतोऽवभृथो यज्ञे तत्कर्मार्हं तु यज्ञियम् ॥ २७ ॥
त्रिष्वथ क्रतुकर्मेष्टं पूर्तं खातादि कर्म यत् ॥
अमृतं विघसो यज्ञशेषभोजनशेषयोः ॥ २८ ॥

मित्यण्" एकैकम् । स्रुवचमसादिकं पात्रं स्यात् एकम् ॥ २४ ॥ ध्रुवा उपभृत् जुहूः एते त्रयः स्रुचो भेदाः । स्त्रियः । स्रुवः एकं पुंसि । "अत्र यथा स्रुवशब्दस्य रूपभेदात्पुंस्त्वे सिद्धे नेति पुंस्त्वविधिस्तथा पूर्वत्र स्त्रिय इति स्त्रीत्वविधिरपि बोध्यः । स्रुवा द्वयोर्होमपात्रे शल्लकीमूर्वयोः स्त्रियामिति मेदिनीकोशे स्त्रीलिंगोऽपि दृश्यते ।" क्रतौ यः पशुरभिमंत्र्य हतः असौ उपाकृतः स्यात् एकम् । "उपाक्रियते हिंस्यत इत्युपाकृतः ।" ॥ २५ ॥ परंपराकं शमनं "शसनं ससनं चेत्यपि" प्रोक्षणं त्रयं वधार्थकं यज्ञियपशुहननवाचीत्यर्थः । प्रमीतः उपसंपन्नः प्रोक्षितः त्रीणि यागार्थं हते पशुमात्रे । वाच्यलिंगानि ॥ २६ ॥ हविर्विशेषः सान्नाय्यं स्यात् एकम् । अग्नौ हुतं याज्यादि वषट्कृतं स्यात् तत्त्रिषु वाच्यलिंगं एकम् । "वषडिति मंत्रोपलक्षणम् । वषण्मंत्रेण कृतं प्रक्षिप्तम् ।" यज्ञे दीक्षांतः दीक्षायाः समापकः इष्टिपूर्वकस्नानविशेषः अवभृथः एकम् । तत्कर्मार्हं यज्ञकर्मयोग्यं वस्तु "द्विजद्रव्यादि" यज्ञियं एकं त्रिषु ॥२७॥ यत्क्रतुकर्म तदिष्टं स्यात् । "क्रतुर्यज्ञः कर्म दानम् । एकाग्निकर्महवनं त्रेतायां यच्च हूयते । अंतर्वेद्यां च यद्दानमिष्टं तदभिधीयत इति मनुः ।" एकम् । खातं वापीकूपादि । आदिना देवालयादि यत्कर्म तत्पूर्तं स्यात् एकम् । "पुष्करिण्यः सभा वापी देवतायतनानि च । आरामश्च विशेषेण पूर्तं कर्म विनिर्दिशेदिति स्मृतिः ।" यज्ञशेषे पुरोडाशादौ अमृतमित्येकम् । भोजनशेषे देवपित्रादि भुक्तशेषे विघस इत्येकम् । यन्मनुः । विघसाशी भवेन्नित्यं नित्यं चामृतभोजनः । विघसो भुक्तशेषं स्यादग्निशेषमथामृतमिति ॥ २८ ॥ यागः

त्यागो विहापितं दानमुत्सर्जनविसर्जने ॥
विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ॥ २९ ॥
प्रादेशनं निर्वपणमपवर्जनमंहतिः ॥
मृतार्थं तदहे दानं त्रिषु स्यादौर्ध्वदेहिकम् ॥ ३० ॥
पितृदानं निवापः स्याच्छ्राद्धं तत्कर्म शास्त्रतः ॥
अन्वाहार्यं मासिकेंऽशोऽष्टमोऽह्नः कुतपोऽस्त्रियाम् ॥३१॥
पर्येषणा परीष्टिश्चान्वेषणा च गवेषणा ॥
सनिस्त्वध्येषणा याच्ञाऽभिशस्तिर्याचनाऽर्थना ॥ ३२ ॥
षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि ॥

विहापितं दानं उत्सर्जनं विसर्जनं विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ॥२९॥ प्रादेशनं निर्वपणं अपवर्जनं अंहतिः त्रयोदश दानस्य । तत्र अंहतिः स्त्री । मृतार्थं मृताय तदहे दानं मरणदिनमारभ्य दशाहपर्यंतं पिंडादिदानं और्ध्वदेहिकं स्यात् । "और्ध्वदेहिकमित्युभयपदवृद्धिरपि ।" तत्त्रिषु । स्त्रियां तु और्ध्वदेहिकी क्रिया । "तदहर्दानमित्यपि पाठः" ॥ ३० ॥ पितृदानं निवापः द्वे पितॄनुद्दिश्य यद्दानं क्रियते तत्र । शास्त्रतस्तत्कर्म पितृसंबंधिकर्म श्राद्धं स्यात् । श्रद्धाऽस्ति यत्र तच्छ्राद्धम् । प्रज्ञाश्रद्धेति णः । मासिकेऽमावास्याश्राद्धेऽन्वाहार्यमित्येकम् । पिंडान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकमिति मनुः । अह्नोऽष्टमोंऽशः कुतपः स्यात् । अंशशब्दोऽत्र मुहूर्तपरः । मुहूर्तात्सप्तमादूर्ध्वं मुहूर्तान्नवमादधः । स कालः कुतपो ज्ञेय इत्युक्तेः । दिवसस्याष्टमे भागे मंदीभवति भास्करे । स कालः कुतपो ज्ञेय इति शातातपः । "क्लीबे तु कुतपम् । शब्दरत्नावल्यां तु कुतुप इति उकारोऽपि" ॥ ३१ ॥ पर्येषणा परीष्टिः द्वे श्राद्धे द्विजभक्तिशुश्रूषायाः । अन्वेषणा गवेषणा द्वे धर्मादिमार्गणस्य । "चतुष्कमपि धर्मान्वेषणस्येत्यपि मतम् ।" सनिः अध्येषणा द्वे यत् गुर्वादेः क्वचिदर्थे प्रार्थनया नियोजनं तत्र । याच्ञा अभिशस्तिः "अभिषस्तिः" याचना अर्थना चत्वारि याचनायाः । याच्ञेत्यत्र चकारञकारसंयोगः ॥ ३२ ॥ षडिति अर्घ्यपाद्यातिथ्यातिथेयावेशिकागंतवं इति षट् शब्दा वाच्यलिंगा इत्यर्थः । अर्घः पूजोपचारस्तदर्थे वारिणि जले

क्रमादातिथ्यातिथेये अतिथ्यर्थेऽत्र साधुनि ॥ ३३ ॥
स्युरावेशिक आगंतुरतिथिर्ना गृहागते ॥
प्राघूर्णिकः प्राघुणकश्चाभ्युत्थानं तु गौरवम् ॥ ३४ ॥
पूजा नमस्याऽपचितिः सपर्याचार्हणाः समाः ॥
वरिवस्या तु शुश्रूषा परिचर्याप्युपासना ॥ ३५ ॥
व्रज्याऽटाऽट्या पर्यटनं चर्या त्वीर्यापथे स्थितिः ॥
उपस्पर्शस्त्वाचमनमथ मौनमभाषणम् ॥ ३६ ॥
( " प्राचेतसश्चादिकविः स्यान्मैत्रावरुणिश्च सः ॥

अर्घ्यमित्येकम् । पादाय पादार्थे वारिणि पाद्यं एकम् । अतिथ्यर्थे आतिथ्यमित्येकम् । अत्रातिथौ यत्साधु तत्र आतिथेयमित्येकम् ॥ ३३ ॥ आवेशिकः आगंतुः अतिथिः गृहागतः चत्वारि गृहागतस्य । ना पुमान् । " त्रिकांडशेषे तु प्राघुणस्त्वतिथिर्द्वयोरित्युक्तम् । स्त्रियां तु अतिथी ।" दूराच्चोपगतं श्रांतं वैश्वदेव उपस्थितम् । अतिथिं तं विजानीयान्नातिथिः पूर्वमागत इति व्यासः । प्राघूर्णिकः प्राघुणकः द्वे अभ्यागतस्य । तिथिपर्वोत्सवाः सर्वे त्यक्ता येन महात्मना । सोऽतिथिः सर्वभूतानां शेषानभ्यागतान्विदुरिति यमः । अभ्युत्थानं गौरवं द्वे उत्थानपूर्वकसत्कारस्य ॥ ३४ ॥ पूजा नमस्या अपचितिः सपर्या अर्चा अर्हणा षट् पूजायाः । वरिवस्या शुश्रूषा परिचर्या उपासना " उपासनमित्यपि । उपासनं शराभ्यासेऽप्युपास्त्यावासनेऽपि चेति विश्वमेदिन्यौ ।" चतुष्कमुपासनस्य । तत्र शुश्रूषाशब्दो गुरुसेवायां लाक्षणिकः । " परिचर्या तूपचर्येति भागुरिः " ॥ ३५ ॥ व्रज्या अटा अट्या पर्यटनं चत्वारि पर्यटनस्य । अटा पर्यटनं भ्रम इति रत्नकोशः । अट्येत्यत्र मूर्धन्यतालव्यसंयोगः । वृथाट्या खलु सा तस्येति प्रयोगः । ईर्यापथे ध्यानमौनादिके योगमार्गे स्थितिः चर्या स्यात् एकम् । चर्यां त्वीर्यां विदुर्बुधा इति ग्रंथांतरे । उपस्पर्शः आचमनं द्वे " उपस्पर्शः स्पर्शमात्रे स्नानाचमनयोरपीति मेदिनी " मौनं अभाषणं द्वे ॥ ३६ ॥ प्राचेतस इत्यादिसार्धश्लोकः क्वचिदस्ति तत्र प्राचेतसादिचतुष्कं वाल्मीकस्य । मैत्रावरुण इत्यपि । वाल्मीकिः " वल्मिकिरिति द्विरूपकोशे । वल्मीकः । अपि वाल्मीः वल्मी-

वाल्मीकश्चाथ गाधेयो विश्वामित्रश्च कौशिकः ॥१॥
व्यासो द्वैपायनः पाराशर्यः सत्यवतीसुतः ") (१)
आनुपूर्वी स्त्रिया वाऽऽवृत्परिपाटी अनुक्रमः ॥
पर्यायश्चातिपातस्तु स्यात्पर्यय उपात्ययः ॥ ३७ ॥
नियमो व्रतमस्त्री तच्चोपवासादि पुण्यकम् ॥
औपवस्तं तूपवासो विवेकः पृथगात्मता ॥ ३८ ॥
स्याद्ब्रह्मवर्चसं वृत्ताध्ययनर्द्धिरथांजलिः ॥
पाठे ब्रह्मांजलिः पाठे विप्रुषो ब्रह्मबिंदवः ॥ ३९ ॥

काविति त्रिकाण्डशेषः । वल्मिक इति शब्दरत्नावल्याम् ।" गाधेयादित्रयं विश्वामित्रस्य । "तत्र कौषिक इत्यपि" ॥ १ ॥ व्यासादिचतुष्कं व्यासस्य । आनुपूर्वी आवृत् परिपाटिः "परिपाटीति ङीषंतापि" अनुक्रमः पर्यायः पंचकमनुक्रमस्य । आनुपूर्व्यमिति पाठो वा "आनुपूर्वमिति च । स्त्रियां वेति पक्षे क्लीबता ।" आवृतः परिपाटेश्च स्त्रीत्वम् । "परिपाटी अनुक्रम इत्यत्र द्विवचनत्वात्प्रगृह्यसंज्ञायां न यण् ।" अतिपातः पर्ययः उपात्ययः त्रीण्यतिक्रमस्य ॥ ३७ ॥ नियमः व्रतं द्वे व्रतमात्रस्य । तच्च व्रतं उपवासचांद्रायणादि यत्पुण्यकं तज्ज्ञेयम् । "अथवा उपवास आदिर्यस्य कृच्छ्रचांद्रायणप्राजापत्यनक्तभोजनादेस्तदुपवासादि व्रतं पुण्यमित्येकमिति ।" औपवस्तं "उपवस्तमित्यपि । क्वचिदौपवस्त्रमिति पाठः । तत्र तृच्प्रत्ययांतादुपवस्तुरिदं कर्मेत्यर्थे तस्येदमित्यण् । उपोषणं उपोषितमित्यपि । भावे क्तः" उपवासः द्वे उपवासस्य । माषान्मधुमसूरांश्च वर्जयेदौपवस्तक इति प्रयोगः । पृथगात्मता पृथक्स्वरूपत्वं विवेकः स्यात् एकम् । यथा चिज्जडयोर्विवेक इति ॥ ३८ ॥ वृत्तं सदाचारपालनं अध्ययनं वेदाभ्यासः तयोर्ऋद्धिः संपत्तिः ब्रह्मवर्चसं एकम् । ब्रह्मणः तपःस्वाध्यायादेर्वर्चस्तेजो ब्रह्मवर्चसमिति स्वामी । पाठे वेदपठने योऽञ्जलिः स ब्रह्मांजलिः । अध्ययनस्यादौ हस्तयोर्हि प्रणवोच्चारपूर्वकमंजलिः क्रियते एकम् । वेदपाठे विप्रुषो मुखात् निर्गतजलकणा ब्रह्मबिंदवः स्युः । "विप्रुष इत्यपि पाठः" एकम् ॥ ३९ ॥ ध्यानयोगयो-

१ इदं सार्धं पद्यं तालपत्रपुस्तकेऽपि नास्ति ॥

ध्यानयोगासने ब्रह्मासनं कल्पे विधिक्रमौ ॥
मुख्यः स्यात्प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः ॥४०॥
संस्कारपूर्वं ग्रहणं स्यादुपाकरणं श्रुतेः ॥
समे तु पादग्रहणमभिवादनमित्युभे ॥ ४१ ॥
भिक्षुः परिव्राट् कर्मंदी पाराशर्यपि मस्करी ॥
तपस्वी तापसः पारिकाक्षी वाचंयमो मुनिः ॥ ४२ ॥
तपःक्लेशसहो दांतो वर्णिनो ब्रह्मचारिणः ॥
ऋषयः सत्यवचसः स्नातकस्त्वाप्लुतो व्रती ॥ ४३ ॥
ये निर्जितेंद्रियग्रामा यतिनो यतयश्च ते ॥

रासने ब्रह्मासनमित्येकम् । एकतानेन मनसा स्मरणं ध्यानमुच्यते । चित्तवृत्तिनिरोधस्तु सद्भिर्योग इति स्मृतः । कल्पः विधिः क्रमः त्रयं नियोगशास्त्रस्य । यः प्रथमः कल्पः आद्यो विधिः स मुख्यः स्यात् । यथा व्रीहिभिर्यजेत । ततो मुख्यादधमो गौणः अनुकल्पः स्यात् । यथा व्रीह्यभावे नीवारैर्यजेत ॥ ४० ॥ संस्कारपूर्वकं श्रुतेर्ग्रहणं उपाकरणं स्यात् एकम् । उपाकर्मणि "संस्कार उपनयनम् ।" पादग्रहणं अभिवादनं द्वे नामगोत्रोक्तिपूर्वकस्य नमस्कारविशेषस्य ॥ ४१ ॥ भिक्षुः परिव्राट् कर्मंदी पाराशरी मस्करी पंच संन्यासिनः । परिव्राजौ, "कर्मंदेन प्रोक्तं भिक्षुसूत्रमधीते कर्मंदी । पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीते पाराशरी । मस्करो ज्ञानं वेणुर्वास्यास्ति मस्करी । मस्करमस्करिणौ वेणुपरिव्राजकयोरिति निपातनात्सुडागमः ।" तपस्वी तापसः पारिकांक्षी त्रयं तपोयुक्तस्य । "पारि ब्रह्मज्ञानं कांक्षति पारिकांक्षी ।" वाचंयमः मुनिः द्वे वाग्यतस्य ॥ ४२ ॥ तपसः क्लेशेऽनुद्विग्नो दांतः स्यात् एकम् । वर्णी ब्रह्मचारी द्वे ब्रह्मचारिणः । ब्रह्म वेदः तदध्ययनार्थं व्रतमपि ब्रह्म तच्चरतीति णिनिः । ऋषिः सत्यवचः द्वे ऋषिसामान्यस्य । तद्भेदास्तु महर्षिदेवर्षिब्रह्मर्षिप्रभृतयः । यो व्रती वेदव्रतवान् आप्लुतः स्नातः कृतसमावर्तन इति यावत् सः स्नातक इत्युच्यते । "आप्लवव्रतीति पाठो वा ।" यदाहुः । गुरवे तु वरं दत्वा स्नायाद्वा तदनुज्ञया । वेदव्रतानि वा पारं नीत्वा ह्युभयमेव वेति ॥ ४३ ॥ निर्जितः स्ववशस्थ इंद्रियसमूहो यैस्ते यतिनः यतयः द्वे । यो नियमवशात् भूमिविशेषे

यः स्थंडिले व्रतवशाच्छेते स्थंडिलशाय्यसौ ॥ ४४ ॥
स्थांडिलश्चाथ विरजस्तमसः स्युर्द्वयातिगाः ॥
पवित्रः प्रयतः पूतः पाखंडाः सर्वलिंगिनः ॥ ४५ ॥
पालाशो दंड आषाढो व्रते रांभस्तु वैणवः ॥
अस्त्री कमंडलुः कुंडी व्रतिनामासनं वृषी ॥ ४६ ॥
अजिनं चर्म कृत्तिः स्त्री भैक्षं भिक्षाकदंबकम् ॥
स्वाध्यायः स्याज्जपः सुत्याऽभिषवः सवनं च सा ॥४७॥
सर्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणम् ॥
दर्शश्च पौर्णमासश्च यागौ पक्षांतयोः पृथक् ॥ ४८ ॥

शेते असौ स्थंडिलशायी ॥ ४४ ॥ स्थांडिलः द्वे । विरजस्तमाः द्वयातिगः द्वे सत्त्वैकनिष्ठेषु व्यासादिषु । "रजस्तमोभ्यां विगतः विरजस्तमाः ।" पवित्रः प्रयतः पूतः त्रयं पवित्रस्य । पाखंडः सर्वलिंगी द्वे बौद्धक्षपणकादिषु दुःशास्त्रवर्तिषु । "तत्र पाखंडः कवर्गद्वितीयमध्यः । पालनाच्च त्रयीधर्मः पाशब्देन निगद्यते । तं खंडयंति ते तस्मात्पाखंडास्तेन हेतुनेति" ॥ ४५ ॥ व्रते ब्रह्मचारिणः पलाशसंबंधी दंड आषाढ इत्युच्यते एकम् । वेणुसंबंधी दंडो रांभ इत्येकम् । रंभशब्दो वेणुवाचकः तस्य विकारः । रंभा कदल्यप्सरसोर्ना वेणौ वानरांतरे इति विश्वः । कमंडलुः कुंडी द्वे व्रतिनां जलपात्रस्य । "क्लीबे कमंडलु । कुंडी स्त्रियाम् । जानपदेति ङीष् ।" कुंड्यौ । व्रतिनां यदासनं सा वृषी एकम् । बृसीति पाठांतरम् । ब्रुवंतोऽस्यां सीदंतीति ॥४६॥ अजिनं चर्म कृत्तिः त्रीणि मृगादेश्चर्मणि । भिक्षाणां समूहो भैक्षम् । स्वाध्यायः जपः द्वे वेदाभ्यासस्य । "सु अतीवावृत्त्या स्वार्थं वाध्ययनं स्वाध्यायः ।" सुत्या अभिषवः सवनं त्रीणि सोमाभिषवस्य । तत्र सुत्या टाबंता । सुवंति सोममस्यां सुत्या । संज्ञायां समजेति क्यप् ॥ ४७ ॥ सर्वैनसां सर्वपापानां नाशकं जप्यं ऋगादि अघमर्षणं स्यात् एकम् । स्त्रियां त्वघमर्षणी । पक्षांतयोरमावास्यायां पौर्णमास्यां च विहितौ यागौ क्रमेण दर्शः पौर्णमासश्च स्यातां एकैकम् ॥ ४८ ॥ शरीरसाधनापेक्षं शरीरमात्रेण साध्यं नित्यं यत्कर्म तद्यमः । आह च । अहिंसा सत्यमस्तेयं ब्रह्मचर्यपरिग्रहौ । यमा इति एकम् ।

शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः ॥
नियमस्तु स यत्कर्म नित्यमागंतुसाधनम् ॥ ४९ ॥
("क्षौरं तु भद्राकरणं मुंडनं वपनं त्रिषु ॥") (१)
उपवीतं ब्रह्मसूत्रं प्रोद्धृते दक्षिणे करे ॥
प्राचीनावीतमन्यस्मिन्निवीतं कंठलंबितम् ॥ ५० ॥
अंगुल्यग्रे तीर्थं दैवं स्वल्पांगुल्योर्मूले कायम् ॥
मध्येऽगुष्ठांगुल्योः पित्र्यं मूले त्वंगुष्ठस्य ब्राह्मम् ॥५१॥
स्याद्ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ॥
देवभूयादिकं तद्वत्कृच्छ्रं सांतपनादिकम् ॥ ५२ ॥

यत्कर्म आगंतुसाधनं आगंतु बाह्यं साधनं यत्र तत् । मृज्जलादिना साध्यमित्यर्थः । नित्यं कृत्रिमं यत्कर्म स नियमः । यदाह । शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधाना नियमा इति । एकम् । "क्वचित्पुस्तके क्षौरं तु इत्यादि दृश्यते तदत्रत्यं नेत्युपेक्षितम् । क्षौरादिचतुष्कं मुंडनस्येत्युपेक्षितसंग्रहः" ॥ ४९ ॥ दक्षिणे करे प्रोद्धृते सति यद्ब्रह्मसूत्रं तदुपवीतं स्यात् एकम् । अन्यस्मिन्वामे करे प्रोद्धृत प्राचीनावीतं स्यात् एकम् । कंठे लंबितं ऋजुभावेन विन्यस्तं तत् ब्रह्मसूत्रं निवीतमित्येकम् ॥ ५० ॥ अंगुलीनामग्रे दैवं तीर्थं ज्ञेयम् । अतो दैवतीर्थेन तर्पयेदित्यत्रांगुल्यग्रेणेति बोध्यम् । स्वल्पांगुल्योरनामिकायाः कनिष्ठिकायाश्च मूले कायम् । कः प्रजापतिर्देवताऽस्य कायं प्राजापत्यमित्यर्थः । अंगुष्ठतर्जन्योर्मध्यभागे पित्र्यम् । "पैत्र्यमित्यपि पैत्रमिति च" । अंगुष्ठस्य मूले तु ब्राह्मं तीर्थम् । यद्याज्ञवल्क्यः । कनिष्ठातर्जन्यंगुष्ठमूलान्यग्रं करस्य च । प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् । एकैकम् ॥ ५१ ॥ ब्रह्मभूयादि त्रयं ब्रह्मभावस्य । "ब्रह्मणो भावः ब्रह्मभूयम्" । तद्वत् देवभूयं देवत्वं देवसायुज्यमिति त्रयं देवभावस्य । सांतपनादिकं कृच्छ्रं स्यात् एकम् । तदुक्तम् । गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकरात्रोपवासश्च कृच्छ्रं सांतपनं स्मृतमिति । आदिना प्राजापत्यादिग्रहः ॥ ५२ ॥ संन्यासपूर्वके

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

संन्यासवत्यनशने पुमान्प्रायोऽथ वीरहा ॥
नष्टाग्निः कुहना लोभान्मिथ्येर्यापथकल्पना ॥ ५३ ॥
व्रात्यः संस्कारहीनः स्यादस्वाध्यायो निराकृतिः ॥
धर्मध्वजी लिंगवृत्तिरवकीर्णी क्षतव्रतः ॥ ५४ ॥
सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ॥
अंशुमानभिनिर्मुक्ताभ्युदितौ च यथाक्रमम् ॥ ५५ ॥
परिवेत्ताऽनुजोऽनूढे ज्येष्ठे दारपरिग्रहात् ॥
परिवित्तिस्तु तज्ज्यायान् विवाहोपयमौ समौ ॥ ५६ ॥
तथा परिणयोद्वाहोपयामाः पाणिपीडनम् ॥
व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम् ॥ ५७ ॥

भोजनत्यागे प्राय इत्येकम् । अदंतः पुंसि । वीरहा नष्टाग्निः द्वे नष्टोऽग्निर्यस्य तस्य । "वीरोऽग्निस्तं हंतीति वीरहा ।" वीरहणौ । लोभात्परधनाद्यभिलाषात् या मिथ्येर्यापथकल्पना दंभेन ध्यानमौनादिसंपादनं सा कुहनेत्येकम् ॥ ५३ ॥ संस्कारेणोपनयनेन गौणकालोत्तरं हीनो व्रात्य इत्यर्थः एकम् । अस्वाध्यायः स्वशाखाध्ययनशून्यो निराकृतिः एकम् । "आकृतेरध्ययनचेष्टाया निर्गतो निराकृतिः ।" धर्मध्वजी लिंगवृत्तिः द्वे जीविकार्थं जटादिधारणवतः । लिंगं धर्मचिह्नं वृत्तिर्जीविका यस्य सः । अवकीर्णी क्षतव्रतः द्वे नष्टब्रह्मचर्यस्य । "अवकीर्णं विक्षिप्तं व्रतमनेनावकीर्णी ।" अवकीर्णिनौ ॥ ५४ ॥ अंशुमान् रविर्यस्मिन् सुप्तेऽस्तमेति सोऽभिनिर्मुक्तः एकम् । "अभि सर्वतः सायंतनं कर्म निश्चयेन मुक्तं येन ।" यस्मिन्सुप्तेंऽशुमानुदेति सोऽभ्युदितः । "अभि सर्वतः उदतिशयेन इतं गतं प्रातस्तनं कर्मास्य" ॥ ५५ ॥ ज्येष्ठे भ्रातर्यकृत-दारपरिग्रहे सति कृतदारपरिग्रहः कनिष्ठः परिवेत्ता स्यात् एकम् । परिवि-दति ज्येष्ठं परित्यज्य भार्यां लभते । विद्लृ लाभे । तस्य परिवेत्तुर्ज्यायान् ज्येष्ठः परिवित्तिः स्यात् एकम् । विवाहः उपयमः ॥ ५६ ॥ परिणयः उ-द्वाहः उपयामः पाणिपीडनं षट् विवाहस्य । व्यवायः ग्राम्यधर्मः मैथुनं नि-धुवनं रतं पंच मैथुनस्य । "नितरां धुवनं हस्तपादादिचालनमत्र निधुवनम् । व्यवायो ग्राम्यधर्मश्च रतं निधुवनं च सेति उत्तरार्धं अन्यथा केचित् पठंति"

त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः ॥
सबलैस्तैश्चतुर्भद्रं जन्याः स्निग्धा वरस्य ये ॥ ५८ ॥

इति ब्रह्मवर्गः ॥ ७ ॥

---

मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट् ॥
राजा राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः ॥ १ ॥
राजा तु प्रणताशेषसामंतः स्यादधीश्वरः ॥
चक्रवर्ती सार्वभौमो नृपोऽन्यो मंडलेश्वरः ॥ २ ॥
येनेष्टं राजसूयेन मंडलस्येश्वरश्च यः ॥
शास्ति यश्चाज्ञया राज्ञः स सम्राडथ राजकम् ॥ ३ ॥
राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात् ॥

॥ ५७ ॥ धर्मो वेदविहितो यागादिः । कामो यथाविधि स्त्रीसेवनम् । अर्थो धनम् । एभिस्त्रिभिः समुदितास्त्रिवर्गः एकम् । समोक्षकैः धर्मार्थकाममोक्षैरित्यर्थः । एतैः समुदितश्चतुर्वर्ग इत्येकम् । तैर्धर्मादिभिः सबलैश्चतुर्भद्रमित्येकम् । "चत्वारि भद्राणि श्रेष्ठानि अत्र ।" वरस्य जामातुर्ये स्निग्धा वयस्याः जन्याः स्युरित्येकम् । जनीं वधूं वहंति प्रापयंति ते ॥ ५८ ॥ इति ब्रह्मवर्गः ॥ ७ ॥ मूर्धाभिषिक्तः राज्यदानसमये मूर्धन्यभिषिच्यते इति प्रसिद्धमेतत् । राजन्यः बाहुजः क्षत्रियः । क्षतात् दुःखात् त्रायते । विराट् पंच क्षत्रियस्य । विराजौ । राजा राट् पार्थिवः क्ष्माभृत् । "क्ष्माभुक्" नृपः भूपः महीक्षित् सप्त राज्ञः । राजानौ । राजौ । क्ष्माभृतौ । महीक्षितौ । राज्ञि राडिति सप्तम्यंतपाठः क्वचित् दृश्यते ॥ १ ॥ प्रणता अशेषसामंता अखिलदेशांतरनृपा यस्य स राजा अधीश्वर इत्येकम् । चक्रवर्ती सार्वभौमः द्वे आसमुद्रक्षितीशस्य । तदन्यो नृपो मंडलेश्वर इत्येकम् ॥ २ ॥ राजसूयाख्यक्रतुविशेषेण येनेष्टं द्वादशमंडलस्येश्वरश्च यः यश्च स्वाज्ञया सर्वभूपान् शास्ति ईदृशविशेषणत्रयेण विशिष्टो राजा सम्राट् स्यात् । "एकैकविशेषणविशिष्टोऽपि सम्राट् इति केचित् । एकम्" ॥ ३ ॥ नृपतीनां गणे राजकमित्येकम् । क्षत्रियाणां गणे राजन्यकमित्येकम् । मंत्री धीसचिवः अमात्यः त्रयं बुद्धिसहायस्य ।

मंत्री धीसचिवोऽमात्योऽन्ये कर्मसचिवास्ततः ॥ ४ ॥
महामात्राः प्रधानानि पुरोधास्तु पुरोहितः ॥
द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ ॥ ५ ॥
प्रतीहारो द्वारपालद्वास्थद्वास्थितदर्शकाः ॥
रक्षिवर्गस्त्वनीकस्थोऽथाध्यक्षाधिकृतौ समौ ॥ ६ ॥
स्थायुकोऽधिकृतो ग्रामे गोपो ग्रामेषु भूरिषु ॥
भौरिकः कनकाध्यक्षो रूपाध्यक्षस्तु नैष्किकः ॥७॥

"धीप्रधानः सचिवो धीसचिवः । अमा सह समीपे वा भवः अमात्यः । अमांतिकसहार्थयोरिति कोशांतरम् । अव्ययात्त्यप् ।" ततो धीसचिवादन्ये कर्मोपयुक्ताः सचिवाः कर्मसचिवाः स्युरित्येकम् ॥ ४ ॥ महामात्राः प्रधानानि द्वे मुख्यानां राजसहायानाम् । "प्रधान इत्यपि" । महामात्रः प्रधानः स्यादिति पुंस्कांडे बोपालितात् । महती मात्रा येषां ते महामात्राः । मात्रा कर्णविभूषायां वित्ते माने परिच्छद इति मेदिनी । पुरोधाः पुरोहितः द्वे । व्यवहाराणां ऋणादिविषये वादिप्रतिवादिनिर्मितविवादानां द्रष्टरि निर्णेतरि प्राड्विवाकः अक्षदर्शकः इति द्वे "न्यायाधीश" इति ख्यातस्य । प्राट् च विवाकश्च प्राड्विवाकौ प्रश्नविवेकावस्य स्तः प्राड्विवाकः । यदुक्तम् । विवादानुगतं पृष्ट्वा पूर्ववाक्यं प्रयत्नतः । विचारयति येनासौ प्राड्विवाकस्ततः स्मृत इति । अक्षाणां व्यवहाराणां दर्शकः । अक्षः कर्षे तुषे चक्रे शकटव्यवहारयोरिति विश्वः" ॥ ५ ॥ प्रतीहारः "प्रतिहारः" द्वारपालः द्वास्थः द्वास्थितः दर्शकः पंच द्वारपालस्य । "द्वाःस्थः द्वाःस्थित इति सविसर्गोऽपि पाठः । द्वाःस्थितदर्शक इति समस्तमपि ।" प्रतीहारेऽपि दर्शक इति रुद्रः । द्वारपो द्वास्थितादर्शी इति रभसः । रक्षिवर्गः अनीकस्थः द्वे राजरक्षकगणस्य । अध्यक्षः अधिकृतः द्वे अधिकारी इति ख्यातस्य । "अधि अधिकं उपरि वा क्रियतेऽस्मात् अधिकृतः" ॥ ६ ॥ एकस्मिन् ग्रामे अधिकृतः स्थायुकः स्यात् "शेखदार इति ख्यातस्य ।" भूरिषु बहुषु ग्रामेष्वधिकृतो गोप इत्येकम् । "गोपो गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि । ग्रामौघाधिकृते पुंसि शारिवाख्यौषधौ स्त्रियामिति मेदिनी ।" भौरिकः कनकाध्यक्षः द्वे स्वर्णाध्यक्षस्य । रूपाध्यक्षः नैष्किकः द्वे रूप्याधिकृतस्य ॥ ७ ॥

अंतःपुरे त्वधिकृतः स्यादंतर्वेशिको जनः ॥
सौविदल्लाः कंचुकिनः स्थापत्याः सौविदाश्च ते ॥८॥
षंढो वर्षवरस्तुल्यौ सेवकार्थ्यनुजीविनः ॥
विषयानंतरो राजा शत्रुर्मित्रमतः परम् ॥ ९ ॥
उदासीनः परतरः पार्ष्णिग्राहस्तु पृष्ठतः ॥
रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः ॥ १० ॥
द्विड्विपक्षाहितामित्रदस्युशात्रवशात्रवः ॥
अभिघातिपरारातिप्रत्यर्थिपरिपंथिनः ॥ ११ ॥

अंतःपुरेऽधिकृतो जनः अंतर्वेशिकः स्यात् एकम् । " अंतर्वेशे नियुक्तः अंतर्वेशिकः । " सौविदल्लाः कंचुकिनः स्थापत्याः सौविदाः चत्वारि राजसन्निधौ " राज्ञां ह्ययगारे वा " वेत्रधराः कंचुकिनः पुरुषास्तिष्ठंति तेषाम् । " सुष्ठु विदं विद्वांसमपि लांति वशं कुर्वंति सुविदल्लास्तासामिमे रक्षकाः सौविदल्लाः । तिष्ठंत्येषु पुरुषाः तेषां स्थानां दाराणां पतयः पालकाः स्थापत्याः । सुविदश्चतुरास्त्रियस्तासां रक्षकाः सौविदाः । तस्येदमित्यण् " ॥ ८ ॥ षंढः " शंढः शंडः षंडः । " वर्षवरः द्वे अंतःपुरचारिणः क्लीबमात्रस्य " खोजा इति ख्यातस्य । यदुक्तम् । ये त्वल्पसत्त्वाः प्रथमाः क्लीबाश्च स्त्रीस्वभाविनः । जात्या न दुष्टाः कार्येषु ते वै वर्षवराः स्मृता इति । " सेवकः अर्थी अनुजीवी त्रीणि सेवकस्य । विषयात्स्वदेशादनंतरोऽव्यवहितो राजा शत्रुः स्यात् एकम् । अतः शत्रोः परं मित्रम् । राजांतरेण व्यवहितो राजा मित्रं स्यादित्यर्थः एकम् ॥ ९ ॥ परतरः शत्रुमित्राभ्यां परो राजा उदासीनः स्यात् । अतिव्यवहित उदासीन इत्यर्थः एकम् । पृष्ठतः पश्चाद्देशे वर्तमानो राजा पार्ष्णिग्राहः । राज्ञि शत्रुजयार्थं पुरतो गते यस्तद्राष्ट्रं जिघृक्षति स पृष्ठवर्ती पार्ष्णिग्राह इत्यर्थः एकम् । रिपुः वैरी सपत्नः अरिः द्विषन् द्वेषणः दुर्हृदः ॥ १० ॥ द्विट् विपक्षः अहितः अमित्रः दस्युः शात्रवः शत्रुः अभिघाती " अभियाती अभियातिश्चापि । द्वेष्योऽभियातिरमित्र इति रत्नकोशः । " परः अरातिः प्रत्यर्थी परिपंथी एकोनविंशतिर्नामानि शत्रोः । " सपत्नारिरिति समस्तमपि । " द्विषंतौ । दुर्हृदौ । द्विषौ । अभिघातिनौ

वयस्यः स्निग्धः सवया अथ मित्रं सखा सुहृत् ॥
सख्यं साप्तपदीनं स्यादनुरोधोऽनुवर्तनम् ॥ १२ ॥
यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः ॥
चारश्च गूढपुरुषश्चाप्तप्रत्ययितौ समौ ॥ १३ ॥
सांवत्सरो ज्योतिषिको दैवज्ञगणकावपि ॥
स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तांतिका अपि ॥ १४ ॥
तांत्रिको ज्ञातसिद्धांतः सत्री गृहपतिः समौ ॥
लिपिकरोऽक्षरचणोऽक्षरचुंचुश्च लेखके ॥ १५ ॥
लिखिताक्षरसंस्थाने लिपिर्लिबिरुभे स्त्रियौ ॥

॥ ११ ॥ वयस्यः स्निग्धः सवयाः सांतः त्रयं तुल्यवयसः प्रियस्य । मित्रं सखा सुहृत् । अत्यागसहनो बंधुः सदैवानुगतः सुहृत् । एकक्रियं भवेन्मित्रं समप्राणः सखा मत इति । त्रीणि मित्रस्य । सखेदंतः । सखायौ । सुहृदौ । सख्यं साप्तपदीनम् । सप्तभिः पदैरवाप्यते यत् द्वे मैत्र्याः । अनुरोधः अनुवर्तनं द्वे आनुकूल्यस्य ॥ १२ ॥ यथार्हवर्णः प्रणिधिः अपसर्पः चरः स्पशः चारः गूढपुरुषः सप्त चारपुरुषस्य गुप्त, बातमीदार, हेर इति ख्यातस्य । यथार्हः वर्ण आकारो यस्य यथार्हवर्णः । स्पशते बाधते परान्स्पशः । आप्तः प्रत्ययितः द्वे विसंवादरहितस्य । प्रत्ययो विश्वासः संजातोऽस्य प्रत्ययितः विश्वासुक इति लोकप्रसिद्धस्य ॥ १३ ॥ सांवत्सरः ज्योतिषिकः दैवज्ञः गणकः मौहूर्तिकः मौहूर्तः ज्ञानी कार्तांतिकः अष्टौ ज्योतिषिकस्य "जोशी इति ख्यातस्य" ॥ १४ ॥ तांत्रिकः ज्ञातसिद्धांतः द्वे शास्त्रवेत्तुः । "ज्ञातः सिद्धांतो येन ज्ञातसिद्धांतः ।" सत्री गृहपतिः द्वे गृहपतेः "सदान्नादिदानकर्तुः ।" लिपिकरः "लिबिकरः लिपिकार इत्यपि । लिपिंकर इति च । लिबिंकर इति भानुदीक्षितटीकायाम् ।" अक्षरचणः अक्षरचुंचुः लेखकः चत्वारि लेखकस्य । अक्षरैर्वित्तोऽक्षरचणः । तेन वित्तश्चुंचुप्चणपौ ॥ १५ ॥ लिखितं अक्षरसंस्थानं लिपिः "लिपी" लिबिः चत्वारि लिखिताक्षरस्य । लिखिताक्षरविन्यास इति पाठे लिखितानामक्षराणां यो विन्यासस्तत्रेत्यर्थः । संदेशहरः दूतः द्वे । संदिश्यत इति संदेशो निरूपणं तद्धरति इति संदेश-

स्यात्संदेशहरो दूतो दूत्यं तद्भावकर्मणी ॥ १६ ॥
अध्वनीनोऽध्वगोऽध्वन्यः पांथः पथिक इत्यपि ॥
स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ॥ १७ ॥
राज्यांगानि प्रकृतयः पौराणां श्रेणयोऽपि च ॥
संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः ॥ १८ ॥
षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमंत्रजाः ॥

हरः । तस्य दूतस्य भावे कर्मणि च दूत्यमित्येकम् । " दौत्यमपि । तद्भागकर्मणी इति त्वपपाठः । " दूतस्य भागकर्मणी इति यच्छांदसत्वात् ॥१६॥ अध्वनीनः अध्वगः अध्वन्यः पांथः पथिकः पंच पांथस्य । " स्त्रियां तु पांथा पथिकी । पथष्कन् षित्त्वात् ङीष् । " स्वामी राजा । अमात्यो मंत्री । सुहृन्मित्रम् । कोशो धनागारम् । राष्ट्रं जनपदवर्तिभूमिः । दुर्गं दुर्गमस्थानम् " पर्वतादि । " बलं सेना ॥ १७ ॥ एतानि सप्त राज्यांगानि स्युः । राज्ञः कर्म राज्यं तस्यांगानि आरंभकाणि । स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत् । परस्परोपकारीदं सप्तांगं राज्यमुच्यत इति कामंदकीये । एतान्येव प्रकृतिशब्दवाच्यानि स्युः द्वे । प्रकृष्टं कुर्वंति राज्यं प्रकृतयः । पौराणां श्रेणयोऽपि प्रकृतयः स्युः । " पौरश्रेणिभिः सहाष्टांगमपि राज्यमित्यर्थः । " यत्कासः । अमात्यश्च तथा पौराः सद्भिः प्रकृतयः स्मृता इति । एकम् । शिल्पोपजीविनां पंक्तिरत्र श्रेणिः । मुख्यः सजातीयसमूहः श्रेणिरित्यन्ये । संधिः संधानं स्वर्णादिना शत्रूणां प्रीत्युत्पादनमिति । संधिशब्दः पुमान् । परमंडले दाहलुंठनादिग्रहणं विग्रहः । शत्रुं प्रति विजिगीषोर्गमनं यानम् । शक्तिप्रतिबंधे सति कालं प्रतीयादिति दुर्गादिकं निर्माय तत्रावस्थानमासनम् । बलिना सह संधिः अबलेन सह विग्रहः इति प्रकारद्वयं द्वैधम् । अरिणा पीड्यमानस्य बलवद्भूपालाद्याश्रयणं आश्रयः । एतेषां भेदास्तु कामंदकीयादौ द्रष्टव्याः ॥ १८ ॥ एते संध्यादयः षट् गुणाः स्युः एकम् । प्रभावोत्साहमंत्रजास्तिस्रः शक्तयः स्युः एकम् । तत्र कोशदंडजं तेजः प्रभावशक्तिः । विक्रमादिनोन्नतिरुत्साहशक्तिः । संधिविग्रहादीनां मंत्रेण यथावत्स्थापनं मंत्रशक्तिः । पंचांगमंत्रो मंत्रशक्तिरित्यन्ये । क्षयः स्थानं वृद्धिरिति त्रयं नीतिवेदिनां त्रिवर्गः स्यात् । नीतिशास्त्रोक्तस्त्रिवर्गः इत्यर्थः एकम् ।

क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ॥१९॥
स प्रतापः प्रभावश्च यत्तेजः कोशदंडजम् ॥
सामदाने भेददंडावित्युपायचतुष्टयम् ॥ २० ॥
साहसं तु दमो दंडः साम सांत्वमथो समौ ॥
भेदोपजापावुपधा धर्माद्यैर्यत्परीक्षणम् ॥ २१ ॥
पंच त्रिष्वषडक्षीणो यस्तृतीयाद्यगोचरः ॥
विविक्तविजनच्छन्ननिःशलाकास्तथा रहः ॥ २२ ॥

अष्टवर्गस्यापचयः क्षयः । तस्यैवोपचयो वृद्धिः । उपचयापचयराहित्येनावस्थानं स्थानम् । अष्टवर्गस्तु । कृषिर्वणिक्पथो दुर्गं सेतुः कुंजरबंधनम् । खानिर्बलं करादानमित्युक्तः ॥ १९ ॥. कोशः अर्थौघः । दंडः दमः । सेना तज्जन्यं तेजः प्रतापः प्रभावश्च स्यात् द्वे । "अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् । प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतमिति भरतः ।" साम प्रियवचनादि । "तदुक्तम् । परस्परोपकाराणां दर्शनं गुणकीर्तनम् । संबंधस्य समाख्यानमायत्याः संप्रकाशनम् ॥ वाचा पेशलया साधु तवाहमिति चार्पणम् । इति सामविधानज्ञैः साम पंचविधं स्मृतमिति ।" दानं धनादेः समर्पणम् । भेदः संहतानां शत्रूणां भेदनेनात्मसात्करणम् । दंडनं दंडः । एतच्चतुष्कं उपायचतुष्टयं स्यात् । "अन्यत्र सप्तोपाया अप्युक्ताः । साम दानं च भेदश्च दंडश्चेति चतुष्टयम् । मायोपेक्षेंद्रजालं च सप्तोपायाः प्रकीर्तिता इति ।" भेदो दंडः साम दानमिति पाठांतरम् ॥ २० ॥ साहसं दमः दंडः त्रीणि दंडस्य । साम सांत्वं "द्वे सलूख इति ख्यातस्य ।" भेदः उपजापः द्वे संहतयोर्द्वैधीकरणस्य फितूर इति लौकिकप्रसिद्धस्य । धर्मार्थकामैर्भयेन च परीक्षणम् अमात्यादीनामाशान्वेषणं उपधा स्यात् । तद्यथा । भावज्ञानाय राज्ञा प्रेरितेनाप्तेन दुष्टोऽयं राजा तदेनमुत्सृज्यान्यमभिषेचयामोऽन्यं वा साधुं नृपं व्रजाम इत्युक्तोऽमात्यादिर्यदि तद्भाषणं न मन्येत तर्हि सत्यं धार्मिकोऽयमिति निश्चयो धर्मपरीक्षणम् । एवमर्थपरीक्षणादि बुध्याद्यादाहर्तव्यम् । एकम् ॥ २१ ॥ अथाषडक्षीणादिनिःशलाकांताः पंच शब्दास्त्रिषु वाच्यलिंगाः । यस्तृतीयाद्यगोचरः तृतीयादिना न ज्ञायते किंतु द्वाभ्यामेव क्रियते स मंत्रादिरषडक्षीण इत्येकम् । अविद्यमानानि षडक्षीण्यत्र स अषड-

रहश्चोपांशु चालिंगे रहस्यं तद्भवे त्रिषु ॥
समौ विस्रंभविश्वासौ भ्रेषौ भ्रंशो यथोचितात् ॥२३॥
अभ्रेषन्यायकल्पास्तु देशरूपं समंजसम् ॥
युक्तमौपयिकं लभ्यं भजमानाभिनीतवत् ॥ २४ ॥
न्याय्यं च त्रिषु षट् संप्रधारणा तु समर्थनम् ॥
अववादस्तु निर्देशो निदेशः शासनं च सः ॥ २५ ॥
शिष्टिश्चाज्ञा च संस्था तु मर्यादा धारणा स्थितिः ॥
आगोऽपराधो मंतुश्च समे तूद्दानबंधने ॥ २६ ॥
द्विपाद्यो द्विगुणो दंडो भागधेयः करो बलिः ॥

क्षीणः । विविक्तः विजनः छन्नः निःशलाकः रहः ॥ २२ ॥ रहः उपांशु सप्त विजनस्य । उपगताः अंशवः किरणाः यत्र । उपांशुर्जपदेशे स्यादुपांशु विजनेऽव्ययमिति । तत्रैकं रहः सांतं क्लीबम् । द्वितीयं रह उपांशु इति च द्वे अलिंगे अव्यये इत्यर्थः । तद्भवे रहोभवे रहस्यमित्येकम् । विस्रंभः "तालव्यमध्योऽपि । विश्रंभः केलिकलहे विश्वासे प्रणयेऽपि चेति मेदिनी ।" विश्वासः द्वे । यथोचितात्स्वरूपाद्भ्रंशः पतनं भ्रेष इत्येकम् ॥ २३ ॥ अभ्रेषः न्यायः कल्पः देशरूपं समंजसं पंचकं नीतेः । "प्रशस्तं देशनं देशरूपम् । प्रशंसायां रूपप् ।" युक्तं औपयिकं लभ्यं भजमानं अभिनीतम् ॥ २४ ॥ न्याय्यं षट् न्यायादनपेतस्य द्रव्यादेः । अभिनीतवदिति वच्छब्दो युक्तादीनां पर्यायत्वद्योतनार्थः । एते षडपि त्रिषु । संप्रधारणा समर्थनं द्वे युक्तायुक्तपरीक्षायाः । अववादः निर्देशः निदेशः शासनम् ॥ २५ ॥ शिष्टिः आज्ञा षट् कर्माज्ञापनस्य । "कार्यमवलंब्य वदनमत्राववादः ।" संस्था मर्यादा । मर्येति सीमार्थेऽव्ययम् तत्रादीयते सा । धारणा स्थितिः चत्वारि न्यायमार्गस्थितेः । आगः अपराधः मंतुः त्रीण्यपराधस्य । आगः सांतं क्लीबे । मंतुः पुंसि । उद्दानं बंधनं द्वे बंधनस्य ॥ २६ ॥ द्विगुणो दंडो द्विपाद्यः स्यात् एकम् । "द्वौ पादौ परिमाणमस्य द्विपाद्यः ।" भागधेयः करः बलिः त्रीणि कर्षकादिभ्यो राजग्राह्यभागस्य "धारा, पट्टी, वसूल इति ख्यातस्य । भाग एव भागधेयः रूपनामभागेभ्यो धेय इत्यनेन स्वार्थे भागशब्दाद्धेयप्रत्ययः ।" घट्टो नदीतीरादिस्थानं कट्टा इति ख्यातम् । आदिना गुल्म-

घट्टादिदेयं शुल्कोऽस्त्री प्राभृतं तु प्रदेशनम् ॥ २७ ॥
उपायनमुपग्राह्यमुपहारस्तथोपदा ॥
यौतकादि तु यद्देयं सुदायो हरणं च तत् ॥ २८ ॥
तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः ॥
सांदृष्टिकं फलं सद्य उदर्कः फलमुत्तरम् ॥ २९ ॥
अदृष्टं वह्नितोयादि दृष्टं स्वपरचक्रजम् ॥
महीभुजामहिभयं स्वपक्षप्रभवं भयम् ॥ ३० ॥
प्रक्रिया त्वधिकारः स्याच्चामरं तु प्रकीर्णकम् ॥
नृपासनं यत्तद्भद्रासनं सिंहासनं तु तत् ॥ ३१ ॥

शुल्मप्रतोल्यादि । तत्र यद्देयं नेतव्यानेतव्यवस्तुसंबंधी राजग्राह्यो भागः स शुल्कः स्यात् । लमध्योऽयम् । एकं "जकात इति ख्यातस्य । क्लीबं शुल्कम् ।" प्राभृतं प्रदेशनम् ॥ २७ ॥ उपायनं उपग्राह्यं उपहारः उपदा षट् नृपगुर्वादिदर्शनादौ समर्प्यमाणस्य वस्तुनः भेट नजराणा इति ख्यातस्य । तत्रोपदा स्त्रियाम् । युतकयोर्वधूवरयोरिदं यौतकम् । आदिना बंधुदेयादि । यद्देयं तत्सुदायः हरणं च स्यात् द्वे "कन्यादानकाले व्रतभिक्षादौ च दीयमानद्रव्यस्य । यौतकमपि । यौतकं यौतुकं च तदिति वाचस्पतिः ।" सुदायः पुंसि ॥ २८ ॥ तत्कालः तदात्वं द्वे "वर्तमानकालस्य ।" स चासौ कालश्च तत्कालः । उत्तर आगामी कालः आयतिः स्यात् एकम् । स्त्री । यत्सद्यः फलं तत्सांदृष्टिकं एकम् । उत्तरं भावि फलं उदर्कः स्यात् एकम् ॥ २९ ॥ वह्निरग्न्युत्पातः तोयमतिवृष्ट्यादिः तत्कृतं यद्भयं तत् अदृष्टमित्येकम् । "आदिना हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा । अतिवृष्टिरनावृष्टिर्मूषकाः शलभादयो गृह्यंते ।" स्वपरराष्ट्रजन्यं चोरादि यद्भयं तत् दृष्टं एकम् । राज्ञां स्वपक्षप्रभवं स्वसहायजन्यं भयं अहिभयं स्यात् एकम् ॥ ३० ॥ प्रक्रिया अधिकारः द्वे व्यवस्थास्थापनस्य । चामरं "चमरमपि चामरेत्यपि । चमरं चामरे स्त्री तु मंजरीमृगभेदयोरिति मेदिनी । चामरा चमरे वालव्यजने रोमगुच्छक इति रभसः ।" प्रकीर्णकं द्वे "चवरी इति ख्यातस्य ।" नृपासनं भद्रासनं द्वे मण्यादिकृतराजासनस्य । तन्नृपासनं स्वर्णनिर्मितं चेत्सिंहासनं स्यात् सिंहाकारमासनमित्यर्थः । एकम् ॥ ३१ ॥ छत्रं आतपत्रं द्वे "छत्रस्य"।

हैमं छत्रं त्वातपत्रं राज्ञस्तु नृपलक्ष्म तत् ॥
भद्रकुंभः पूर्णकुंभो भृंगारः कनकालुका ॥ ३२ ॥
निवेशः शिबिरं षंढे सज्जनं तूपरक्षणम् ॥
हस्त्यश्वरथपादातं सेनांगं स्याच्चतुष्टयम् ॥ ३३ ॥
दंती दंतावलो हस्ती द्विरदोऽनेकपो द्विपः ॥
मतंगजो गजो नागः कुंजरो वारणः करी ॥ ३४ ॥
इभः स्तंबेरमः पद्मी यूथनाथस्तु यूथपः ॥
मदोत्कटो मदकलः कलभः करिशावकः ॥ ३५ ॥
प्रभिन्नो गर्जितो मत्तः समा उद्वांतनिर्मदौ ॥
हास्तिकं गजता वृंदे करिणी धेनुका वशा ॥ ३६ ॥

राज्ञश्चेच्छत्रं तर्हि नृपलक्ष्म स्यात् एकम् । भद्रकुंभः पूर्णकुंभः द्वे पूर्णघटस्य । भृंगारः बिभर्ति जलमिति । कनकालुका द्वे स्वर्णरचितपात्रविशेषस्य " झारी इति ख्यातस्य " ॥ ३२ ॥ निवेशः शिबिरं द्वे सैन्यवासस्थानस्य " सेनेचा तळ इति ख्यातस्य । गोट इति ख्यातस्येति केचित् । " शवंति गच्छंति सैनिका अस्मिन् शिबिरम् । सज्जनं उपरक्षणं द्वे सैन्यरक्षणाय नियुक्तप्रहरिकादिविन्यासस्य " पाहरा, गस्त इति ख्यातस्य " । हस्त्यादिचतुष्टयं सेनांगं स्यात् एकम् । अत्र पादातं पदातिसमूहः । " नाविकाटविकादीनां पदातावंतर्भावः । नौकानां रथेष्वंतर्भावः । महिषादीनां गजेष्वंतर्भाव इति मुकुटः " ॥ ३३ ॥ दंती दंतावलः हस्ती द्विरदः अनेकपः द्विपः मतंगजः गजः नागः । नागो मतंगजे सर्पे पुन्नागे नागकेसरे इति कोशांतरे । कुंजरः वारणः करी ॥ ३४ ॥ इभः स्तंबेरमः पद्मी पंचदश हस्तिनः । " अतिशयितः कुंजो हनुरस्य कुंजरः । " यूथनाथः यूथपः द्वे यूथमुख्यस्य गजस्य । मदोत्कटः मदकलः द्वे मदोन्मत्तस्य । कलभः " करभ इत्यपि " करिशावकः द्वे करिपोतस्य " छावा इति ख्यातस्य " ॥ ३५ ॥ प्रभिन्नः गर्जितः मत्तः त्रीणि क्षरन्मदस्य । उद्वांतः निर्मदः द्वे गतमदस्य । उद्वमति स्म मदं उद्वांतः । हास्तिकं गजता द्वे हस्तिनां वृंदे । करिणी धेनुका वशा त्रीणि हस्तिन्याः । " वशा तालव्यांता " । वशा नार्यां वंध्यगव्यां हस्तिन्यां

गंडः कटो मदो दानं वमथुः करशीकरः ॥
कुंभौ तु पिंडौ शिरसस्तयोर्मध्ये विदुः पुमान् ॥ ३७ ॥
अवग्रहो ललाटं स्यादीषिका त्वक्षिकूटकम् ॥
अपांगदेशो निर्याणं कर्णमूलं तु चूलिका ॥ ३८ ॥
अधः कुंभस्य वाहित्थं प्रतिमानमधोऽस्य यत् ॥
आसनं स्कंधदेशः स्यात्पद्मकं बिंदुजालकम् ॥ ३९ ॥
पार्श्वभागः पक्षभागो दंतभागस्तु योऽग्रतः ॥
द्वौ पूर्वपश्चाज्जंघादिदेशौ गात्रावरे क्रमात् ॥ ४० ॥
तोत्रं वेणुकमालानं बंधस्तंभेऽथ शृंखले ॥

दुहितर्यपीति कोशांतरम् ॥ ३६ ॥ हस्तिनो गंडः कपोलः कटः स्यात् । एकम् । मदः दानं द्वे "मदोदकस्य" । वमथुः करशीकरः द्वे करिकरानिर्गतजलकणस्य । शिरसः पिंडौ कुंभौ स्यातां एकम् । तयोः कुंभयोर्मध्ये आकाशस्थानं विदुः स्यात् एकम् ॥ ३७ ॥ गजस्य ललाटं अवग्रहः "अवग्राह इत्यपि" एकम् । ईषिका "इषीका ईषीका इषिका" अक्षिकूटकं द्वे नेत्रगोलकस्य । हस्तिनः अपांगदेशो निर्याणं एकम् । कर्णस्य मूलं चूलिका स्यात् एकम् । चूलिका नाटकस्यांगे कर्णमूले तु हस्तिनाम् ॥ ३८ ॥ कुंभस्याधोभागे वाहित्थम् । इदं ललाटस्याप्यधो ज्ञेयं एकम् । अस्य वाहित्थस्याधोभागे दंतयोर्मध्यं प्रतिमानं स्यात् एकम् । गजस्य स्कंधदेश आसनं एकम् । आसनं द्विरदस्कंधे पीठे यात्रानिवेशने इति विश्वः । बिंदुजालकं बिंदुसमूहः पद्मकं स्यात् एकम् । पद्ममिव रक्तत्वात्पद्मकम् । हस्तिनो देहे हि प्रायश आरक्तबिंदवः संति ॥ ३९ ॥ गजस्य पार्श्वभागः पक्षभागः स्यात् एकम् । अग्रतो यो भागः स दंतभागः स्यात् एकम् । हस्तिनः पूर्वजंघादिदेशो गात्रं स्यात् । पश्चाज्जंघादिदेशोऽवरं स्यात् । "पवर्गादिमध्यमपि । अपरं तूत्तरार्धे स्यात्पश्चाद्भागे च दंतिनामिति विश्वविश्वप्रकाशौ" एकैकम् ॥ ४० ॥ तोत्रं वेणुकं "वैणुकम्" । वेणुना निर्वृत्तम् । निर्वृत्तेक्षद्यूतादिभ्य इति ठक् । तोत्रं तु प्राजने वैणुकेऽपि चेति मेदिनीविश्वप्रकाशौ ।" द्वे तोदनदंडस्य चाबूक पराणा इत्यादिलौकिकप्रसिद्धस्य । बंधनाधारस्तंभे आलानमित्येकम् ।

अंदुको निगडोऽस्त्री स्यादंकुशोऽस्त्री सृणिः स्त्रियाम् ॥४१॥
दूष्या कक्ष्या वरत्रा स्यात्कल्पना सज्जना समे ॥
प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः ॥ ४२ ॥
वीतं त्वसारं हस्त्यश्वं वारी तु गजबंधनी ॥
घोटके वीतितुरगतुरंगाश्वतुरंगमाः ॥ ४३ ॥
वाजिवाहार्वगंधर्वहयसैंधवसप्तयः ॥
आजानेयाः कुलीनाः स्युर्विनीताः साधुवाहिनः ॥ ४४ ॥

शृंखलं अंदुकः अद्यतेऽनेन । आदि बंधने । निगडः त्रीणि शृंखलस्य । शृंखला पुंस्कटीवस्त्रबंधे च निगडे त्रिष्विति मेदिनी । "अंदूरित्यप्यन्यत्र । अंदूः स्त्रियां स्यान्निगडे प्रभेदे भूषणस्य चेति मेदिनी ।" अंकुशः सृणिः "ताल-व्यादिरपि । शृणिरंकुशवाची च काशश्च तृणवाचक इति शभेदः । द्वे अंकु-शस्य । सृणिः स्त्रियाम् । आरक्षमग्नमवमत्य सृणिं शिताग्रमिति तु माघस्य प्रमादः" ॥ ४१ ॥ दूष्या "चूष्येति मुकुटः" कक्ष्या वरत्रा त्रयं मध्यबंध-नोपयोगिन्याश्चर्मरज्ज्वाः । कक्षायां मध्यदेशे भवा कक्ष्या । कल्पना सज्जना द्वे नायकारोहणार्थं गजसज्जीकरणे । प्रवेणी आस्तरणं वर्णः परिस्तोमः कुथः पंच गजपृष्ठवर्तिन आस्तरणस्य । हत्तीची झूल इति लौकिकभाषायां प्रसिद्धम् । स्त्रियां तु कुथा । "स्त्री प्रवेणी कुथं त्रिष्विति बोपालितः ।" प्रवेणी स्त्रियाम् । "प्रवेणी स्त्री कुथावेण्योरिति मेदिनी" ॥ ४२ ॥ असारं युद्धाद्यक्षमं हस्त्यश्वं हस्ती चाश्वश्च तद्वीतमुच्यते । सेनांगत्वात्समाहारः । गजबंधनी गजालानभूः वारी स्यात् । वार्यतेऽनया वारी एकं गजबंधनस्था-नस्य गजशाला इति ख्यातस्य । घोटकः "घोट इत्यपि । घोटसैंधवगंधर्वा हयवाजितुरंगमा इति रभसः ।" वीतिः "पीतिरित्यपि । पीतिर्नाश्वे स्त्रियां पान इति मेदिनी । पीतिः पाने तुरंगे चेति विश्वप्रकाशः ।" तुरगः तुरंगः अश्वः तुरंगमः ॥ ४३ ॥ वाजी वाहः अर्वा गंधर्वः हयः सैंधवः सप्तिः त्रयोदश घोटकस्य । वीतिरिदंतः । अर्वा नकारांतः । अर्वंतौ । वाजिनौ । ये कुलीनाः प्रशस्तजातिभवा अश्वास्ते आजानेयाः एकम् । "आजेन क्षेपेणानेयाः प्रापणीया आजानेयाः । अश्वशास्त्रं तु । शक्तिभि-र्भिन्नहृदयाः स्खलंतश्च पदे पदे । आजानंति यतः संज्ञामाजानेयास्ततः स्मृता

वनायुजाः पारसीकाः कांबोजा बाह्लिका हयाः ॥
ययुरश्वोऽश्वमेधीयो जवनस्तु जवाधिकः ॥ ४५ ॥
पृष्ठ्यः स्थौरी सितः कर्को रथ्यो वोढा रथस्य यः ॥
बालः किशोरो वाम्यश्वा वडवा वाडवं गणे ॥ ४६ ॥
त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते ॥
कश्यं तु मध्यमश्वानां हेषा ह्रेषा च निस्वनः ॥ ४७ ॥
निगालस्तु गलोद्देशो वृंदे त्वश्वीयमाश्ववत् ॥

इति ”। ये साधुवाहिनः शोभनं वहंति ते विनीताः स्युः एकम् ॥ ४४ ॥ वनायुदेशे जाताः वनायुजाः । एवं पारसीकाः । विदेशजाताः पारसीकादयो हयभेदाः स्युः एकैकम् । “ वनायुजः पारसीक उक्त इति रत्नकोशात् । श्वेताश्वं कर्काख्यं वनायुजमपि पारसीकमिति नाममालायाश्च वनायुजपारसीकौ पर्यायशब्दावपि । बाह्लीकं बाह्लिकं धीरहिंगुनोर्नाश्वदेशयोरिति त्रिकांडशेषाद्दीर्घमध्योऽपि बाह्लीक इति । ” योऽश्वमेधीयः अश्वमेधाय हितोऽश्वः स ययुरित्येकम् । यो जवेन वेगेनाधिकः स जवनः एकम् ॥ ४५ ॥ पृष्ठ्यः प्रशस्तमतिशयितं पृष्ठमस्य । गुण्यवत् । स्थौरी स्थूलस्येदं स्थौरम् । रलयोः सावर्ण्यम् । स्थौरं बलमस्यास्ति । स्थोरीत्यपि द्वे जलादिभारवाहिनोऽश्वस्य । सितः शुक्लोऽश्वः कर्क इत्येकम् । यो रथस्य वोढा स रथ्य इत्येकम् । अस्य बालः किशोर एकं “ शिगरूं इति ख्यातस्य । ” उपचारादन्यत्रापि प्रयोगः । वामी अश्वा वडवा । वडवा द्विजयोषिति । अश्वायां कुंभदास्यां च नारीजात्यंतरेऽपि चेति । त्रीण्यश्वायाः “ घोडी इति ख्यातायाः । ” गणे वडवानां समूहे वाडवं एकम् ॥ ४६ ॥ अश्वेन एकेन दिनेन गम्यते यद्वर्त्म तदाश्वीनं त्रिषु । अश्वस्यैकाहगम इति खञ्प्रत्ययः । एकम् । अश्वानां मध्यं कश्यं एकम् । कशामर्हति कश्यम् । अश्वस्य निस्वनः शब्दः हेषा ह्रेषा च स्यात् द्वे ॥ ४७ ॥ गलोद्देशः गलजत्रुसंधिः निगालः स्यात् एकम् । “ घंटाबंधसमीपस्थो निगालः कीर्तितो बुधैः । तस्मिन्नेव मणिर्नाम रोमजः शुभकृन्मत इत्यश्वशास्त्रम् । ” अश्वीयं आश्वं द्वे अश्वानां वृंदे । वता निर्देशो द्वयोस्तुल्यत्वद्योतनाय । अमूः आस्कंदिताद्याः अश्वानां पंच गतयः धाराख्याः एकम् । यत्र वेगार्तोऽश्वो न शृणोति न पश्यति तादृशी गतिरास्कंदितम् । “ भरपल्ला, भरधांव चाल इति प्रसिद्धम् । केवलगत्यर्थे गृहीते चवडचाल

आस्कंदितं धौरितकं रेचितं वल्गितं प्लुतम् ॥ ४८ ॥
गतयोऽमूः पंच धारा घोणा तु प्रोथमस्त्रियाम् ॥
कविका तु खलीनोऽस्त्री शफं क्लीबे खुरः पुमान् ॥४९॥
पुच्छोऽस्त्री लूमलांगूले वालहस्तश्च वालधिः ॥
त्रिषूपावृत्तलुठितौ परावृत्ते मुहुर्भुवि ॥ ५० ॥
याने चक्रिणि युद्धार्थे शतांगः स्यंदनो रथः ॥
असौ पुष्यरथश्चक्रयानं न समराय यत् ॥ ५१ ॥

इति प्रसिद्धं आस्कंदितमित्यपि मतम्" । चातुर्येण युक्ता सरला गतिर्धौरितकम् । "धोरितकमिति हेमचंद्रः । तुरकी गामचाल इति प्रसिद्धम् ।" मध्यमवेगेन चक्रवक्रमणं रेचितं "दुडकी चाल इति प्रसिद्धम् ।" अग्रकायं समुन्नस्य कुत्सितस्थलादौ कुंचितास्यं विचलनं वल्गितं "बाजी चाल इति प्रसिद्धम् ।" पूर्वापरोन्नमनतः क्रमादारोपणं प्लुतं "चौक चाल इति प्रसिद्धम्" ॥ ४८ ॥ अश्वस्य घोणा नासिका प्रोथमित्येकम् । "पुंसि क्लीबे च ।" कविका खलीनः "खलीनमित्यपि" द्वे लोहादिनिर्मितस्य मुखमध्ये निहितस्य कडियालि "लगाम" इति ख्यातस्य । "कवीसप्यन्यत्र । क्लीबे खलीनम् ।" कवते दंतेन शब्दायते कविका । खे मुखे लीनः खलीनः । शफं खुरः "क्षुर इति भरतमालायां" द्वे "सुंभ इति ख्यातस्य" । खुरति विलिखति क्ष्मां खुरः ॥ ४९ ॥ पुच्छः लूमं लांगूलं "लांगुलमित्यपि" त्रीणि "दांडी इति ख्यातस्य । पुच्छः अस्त्री पुन्नपुंसकम् ।" लूममदंतम् । वालहस्तः वालाः हस्त इव दंशादिनिवारकत्वात् । वालधिः द्वे केशसमूहयुक्तस्य पुच्छाग्रभागस्य । वालधिः पुमान् । उपावृत्तः लुठितः द्वे श्रमनाशार्थं मुहुर्भुवि पार्श्वाभ्यां परावृत्तस्य लुठितस्याश्वस्य ॥ ५० ॥ युद्धमर्थः प्रयोजनं यस्य तस्मिन् चक्रयुक्ते याने शतांगः स्यंदनः रथः इति त्रयम् । यच्चक्रयुतं यानं समराय युद्धार्थं न भवति असौ पुष्यरथः स्यात् एकं संग्रामं विना यत्रोत्सवादौ सुखेन भ्रमणार्थं क्रीडारथस्य । यथा पुष्यनक्षत्रं सुखकरं तद्वद्रथोपीति पुष्परथः । अंतस्थमध्यः । पकारमध्यपाठोऽपि । तत्र कुसुमाकारत्वात्पुष्पमिव रथ इति विग्रहः" ॥ ५१ ॥ कर्णीरथः प्रवहणं डयनं "हयनमित्यपि । हय गतौ" त्रयं स्त्रीणां वाहनार्थं कृतस्योपरिवस्त्रा-

कर्णीरथः प्रवहणं डयनं च समं त्रयम् ॥
क्लीबेऽनः शकटोऽस्त्री स्याद्गंत्री कंबलिवाह्यकम् ॥५२॥
शिबिका याप्ययानं स्याद्दोला प्रेंखादिका स्त्रियाम् ॥
उभौ तु द्वैपवैयाघ्रौ द्वीपिचर्मावृते रथे ॥ ५३ ॥
पाडुकंबलसंवीतः स्यंदनः पांडुकंबली ॥
रथे कांबलवास्त्राद्याः कंबलादिभिरावृते ॥ ५४ ॥
त्रिषु द्वैपादयो रथ्या रथकट्या रथव्रजे ॥
धूः स्त्री क्लीबे यानमुखं स्याद्रथागमपस्करः ॥ ५५ ॥

दिना पिहितस्य रथविशेषस्य "बुरख्याची गाडी इति प्रसिद्धस्य"। यत्त्रयम्। कर्णीरथस्थां रघुनाथपत्नीम्। अनः शकटः द्वे "गाडा इति ख्यातस्य। शकटः पुंसि क्लीबे च। शक्नोति भारं वोढुं शकटः"। अनः सांतम्। अनः क्लीबं जले शोके मातृस्यंदनयोरपीति रभसकोशः। कंबलिभिर्वृषैर्वाह्यं वोढव्यं यच्छकटं सा गंत्री "गांत्रीति मुकुटः" एकं "गाडी इति ख्यातस्य"। स्त्रियाम् ॥ ५२ ॥ शिबिका याप्ययानं याप्यैरधमैर्वाह्यं यानं द्वे पुरुषवाह्यस्य यानविशेषस्य "पालखी इति ख्यातस्य"। दोला "ङीषि दोली" प्रेंखा द्वे दोलायाः हिंदोळा इति ख्यातायाः। "डोली इति ख्यातायाः वा"। आदिशब्दात् शयनखट्वावाह्यादि दोला। द्वीपी व्याघ्रस्तच्चर्मणा मावृते रथे द्वैपः वैयाघ्रः इति द्वयम् ॥ ५३ ॥ पांडुकंबलेन मावृतो रथः पांडुकंबलीत्येकम्। पांडुकंबलादिनिः। वास्त्रः दौकूल इत्यादौ सर्वत्र परिवृतो रथ इत्यनेन सामान्योऽण् प्रत्ययः। कंबलादिभिरादिशब्दाद्वस्त्रदुकूलादिभिरावृते रथे कांबलः वास्त्रः "दौकूलः चार्मः क्षौमः" इत्यादयः एकैकम् ॥ ५४ ॥ द्वैपवैयाघ्रादयस्त्रिषु वाच्यलिंगत्वात् यद्वैपी रथ्या। द्वैपो रथः। रथ्या रथकट्या द्वयं रथसमूहे। धूः यानमुखं द्वे रथादेरग्रभागस्य "धूर इति ख्यातस्य"। धूः स्त्री। धुरौ। रथांगं अपस्करः द्वे रथावयवमात्रस्य ॥ ५५ ॥ चक्रं रथांगं द्वे चक्रस्य "चाक इति ख्यातस्य"। नेमिः "नेमीत्यपि" प्रधिः द्वे तस्य चक्रस्यांते भूस्पर्शिभागे "चाकाची धांव इति लौकिकप्रसिद्धस्य"। पिंडिका "पिंडीकेत्यपि" नाभिः "नाभीत्यपि" द्वे चक्रकाष्ठाधारभूतस्य मंडलाकारस्य चक्रमध्यस्य। नभ्यते हिंस्यतेऽक्षोऽनया नाभिः स्त्री। अक्षस्य नाभिक्षेपस्य

चक्रं रथांगं तस्यांते नेमिः स्त्री स्यात्प्रधिः पुमान् ॥
पिंडिका नाभिरक्षाग्रकीलके तु द्वयोरणिः ॥ ५६ ॥
रथगुप्तिर्वरूथो ना कूबरस्तु युगंधरः ॥
अनुकर्षो दार्वधःस्थं प्रासंगो ना युगाद्युगः ॥ ५७ ॥
सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणम् ॥
परंपरावाहनं यत्तद्वैनीतकमस्त्रियाम् ॥ ५८ ॥
आधोरणा हस्तिपका हस्त्यारोहा निषादिनः ॥
नियंता प्राजिता यंता सूतः क्षत्ता च सारथिः ॥ ५९ ॥

काष्ठस्याग्रे चक्रधारणार्थं यत्कीलकमारोप्यते तत्र अणिरित्येकम् । स्त्रीपुंसयोः । "अणिराणिवदक्षाग्रकीलाश्रीसीमसु द्वयोरिति मेदिनी" ॥ ५६ ॥ रथगुप्तिः वरूथः द्वे शस्त्रादिभ्यः परिरक्षणार्थं रथस्य लोहादिमयं यदावरणं क्रियते तस्य । ना पुमान् । "व्रियते रथोऽनेन वरूथः" । कूबरः युगंधरः द्वे यत्र रथस्याश्वा बध्यंते तस्य काष्ठस्य "दांडी इति ख्यातस्य । युगकाष्ठबंधनस्थानस्यापि च । युगं वोढुर्बंधनकाष्ठं धारयतीति युगंधरः" । रथाधःस्थं काष्ठं अनुकर्षः । "अनुकर्षेति नांतोऽप्ययम् । अनुकर्षा नाऽक्षतलदार्वीति बोपालितात् । एकं रथस्याधःस्थलभागदारुणः" । युगेन अतति युगाद्रथाश्वादिः तस्य युगो युगाद्युगः प्रासंग इति स्यात् । ना पुमान् । काकाक्षिवत् युगाद्युगइत्यस्यापि विशेषणम् । अयमेव युगशब्दः पुंसि न तु युग्मादिवाचीति प्रदर्शनार्थम् । युगान्तरामिति पाठे शकटसंधियुगादन्यो युगः वृषादीनां स्कंधे आसज्जमानः स प्रासंग इत्यर्थः । एकं "जूं जोकड इति ख्यातस्य ।" युगं द्वितीयं प्रासंग इति कासः ॥ ५७ ॥ सर्वं हस्त्यश्वादिवाहनं यानादिशब्दवाच्यम् । यानं युग्यं पत्रं धोरणं चत्वारि यत्परंपरावाहनं नरादिवोढृपरंपरया वाह्यते शिबिकादि तद्वैनीतकं स्यात् । विनीतानां शिक्षितानामिदम् । "पुंसि वैनीतकः । विनीतकमित्यपि" ॥ ५८ ॥ आधोरणाः "अधोरणाः इत्यपि" हस्तिपकाः हस्त्यारोहाः निषादिनः चत्वारि हस्तिपकेषु माहात इति ख्यातेषु । द्वे द्वे भिन्नार्थे इत्येके । तदा आद्ये महामात्रस्य । परे गजारोहस्य । नियंता प्राजिता यंता सूतः क्षत्ता सारथिः ॥ ५९ ॥ सव्येष्ठः दक्षिणस्थः एता अष्टौ संज्ञा आख्याः "रथकुटुंबिनः रथं कुटुंबयितुं शीलमस्य यद्वा रथ एव कुटुंबं यस्य

सव्येष्ठदक्षिणस्थौ च संज्ञा रथकुटुंबिनः ॥
रथिनः स्यंदनारोहा अश्वारोहास्तु सादिनः ॥ ६० ॥
भटा योधाश्च योद्धारः सेनारक्षास्तु सैनिकाः ॥
सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते ॥ ६१ ॥
बलिनो ये सहस्रेण साहस्रास्ते सहस्रिणः ॥
परिधिस्थः परिचरः सेनानीर्वाहिनीपतिः ॥ ६२ ॥
कंचुको वारबाणोऽस्त्री यत्तु मध्ये सकंचुकाः ॥
बध्नंति तत्सारसनमधिकागोऽथ शीर्षकम् ॥ ६३ ॥

सारथेरित्यर्थः । प्राजितारौ । सव्ये वामे तिष्ठति सव्येष्ठः ।" सव्येष्ठेति रूदंत इति केचित् । रथिनः स्यंदनारोहाः द्वे रथानारुह्य युध्यताम् । अश्वारोहाः सादिनः द्वे अश्ववार "स्वार" इति प्रसिद्धानाम् ॥ ६० ॥ भटः योधः योद्धा त्रयं योद्धुः । सेनारक्षाः सैनिकाः द्वे सेनारक्षकाणां प्रहरिकादीनां "पाहरे-करी, गस्तकरी इत्यादिख्यातानाम् ।" सेनां रक्षंति सैनिकाः । ये सेनायां समवेताः संगतास्ते सैन्याः सैनिका इति च स्युः द्वे ॥ ६१ ॥ ये सहस्रेण बलिनः सैन्यवंतः ते साहस्राः सहस्रिणश्च स्युः द्वे । बलं सैन्यं तदस्ति येषां ते । सहस्रं योद्धारः संत्येषां नायकानां ते । परिधिस्थः परिचरः द्वे सेना-नियंतुर्यः समंताच्चरति तस्य दण्डनायकस्य "तलावेदार इति ख्यातस्य ।" परिधौ सेनांते तिष्ठति परिधिस्थः । सेनानीः वाहिनीपतिः द्वे सेनापतेः । सेनान्यौ ॥ ६२ ॥ कंचुकः वारवाणः बाणं वारयति पर्यंतादण् वृणोति वा । राजदंतादित्वात्परनिपातः । "बाणवार इत्यपि" द्वे सन्नाहस्य चोल-कादेः । "क्लीबे तु वारवाणम् ।" सकंचुकाः पुरुषा मध्ये मध्यभागे दाढर्यार्थं कंचुकोपरि यद्बध्नंति तत्सारसनं अधिकांगः द्वे "पचंग पाचंगी वा इति ख्यातस्य । क्वचित्सारसनाधिपांग इति पाठः । तच्च सारसनं ज्ञेयमधिपांगं निबंधनमिति दुर्गः । अधिपांगं सारसनमिति कात्यश्च ।" शीर्षकम् ॥ ६३ ॥ शीर्षण्यं शिरस्त्रं त्रीणि टोप इति ख्यातस्य । "शीर्षे कं सुखमस्माच्छीर्ष-कम् ।" तनुत्रं वर्म दंशनं उरच्छदः कंकटकः जगरः "जागर इत्यपि" कवचः सप्तकं कवचस्य चिलखत इति लोकप्रसिद्धस्य । "क्लीबे तु कवचम्" ॥ ६४ ॥ आमुक्तः प्रतिमुक्तः पिनद्धः अपिनद्धः । वष्टि भागुरीरल्लोपावि-

शीर्षण्यं च शिरस्त्रेऽथ तनुत्रं वर्म दंशनम् ॥
उरश्छदः कंकटको जगरः कवचोऽस्त्रियाम् ॥ ६४ ॥
आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत् ॥
सन्नद्धो वर्मितः सज्जो दंशितो व्यूढकंकटः ॥ ६५ ॥
त्रिष्वामुक्तादयो वर्मभृता कावचिकं गणे ॥
पदातिपत्तिपदगपादातिकपदाजयः ॥ ६६ ॥
पद्गश्च पदिकश्चाऽथ पादातं पत्तिसंहतिः ॥
शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः ॥ ६७ ॥
कृतहस्तः सुप्रयोगविशिखः कृतपुंखवत् ॥
अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः ॥ ६८ ॥

कवचः । चत्वारि परिहितकंचुकादेः । आमुच्यते बध्यते स्म आमुक्तः । सन्नद्धः वर्मितः सज्जः दंशितः व्यूढकंकटः पंच कवचभृतः । सन्नह्यति स्म सन्नद्धः ॥ ६५ ॥ आमुक्तादयस्त्रिषु । यथा आमुक्ता शाटी । आमुक्तः कंचुकः । आमुक्तं वस्त्रम् । एवं सन्नद्धा सज्येत्यादि । वर्मभृतां कवचिनां गणे कावचिकमित्येकम् । पदातिः “ पदातः पादातिः पादातः । पदातिपत्तिपादातपादाविकपदाजय इत्यमरमाला ।” पत्तिः पदगः पादातिकः “ पादातिगः । स्वार्थे कन् । पादाविक इत्यपि पाठः । पादाभ्यां अवति । अव रक्षणादौ ” पदाजिः ॥ ६६ ॥ पद्गः पादिकः सप्त पदातेः । पादाभ्यां अतति गच्छति न तु वाहनेन स पदातिः । पादस्य पदाज्यातीति पदादेशः। पत्तिसंहतिः पदातिसमूहः पादातमित्येकम् । शस्त्राजीवः काण्डपृष्ठः “ कांडस्पृष्ट इति राजमुकुटः । तत्र स्पृष्टं गृहीतं कांडं शस्त्रं येन । वाहिताग्न्यादिष्विति परनिपातः ।” आयुधीयः आयुधिकः चत्वारि आयुधजीविनः ॥ ६७ ॥ कृतहस्तः सुप्रयोगविशिखः कृतपुंखः त्रीणि शरनिक्षेपनिष्णातस्य । “ कृतोऽभ्यस्तो हस्तो यस्य कृतहस्तः ।” लक्ष्याद्वेध्यात् च्युतः सायको यस्य सोऽपराद्धपृषत्कः स्यात् एकम् ॥ ६८ ॥ धन्वी धनुष्मान् धानुष्कः निषंगी अस्त्री धनुर्धरः षट् धनुर्धरस्य । धनुष्मंतौ । कांडवान् कांडीरः द्वे शरधारिणः । अयं केवलकांडव-

धन्वी धनुष्मान्धानुष्को निषंगयस्त्री धनुर्धरः ॥
स्यात्काण्डवास्तु काण्डीरः शाक्तीकः शक्तिहेतिकः ॥ ६९ ॥
याष्टीकपारश्वधिकौ यष्टिपार्श्वधहेतिकौ ॥
नैस्त्रिंशिकोऽसिहेतिः स्यात्समौ प्रासिककौंतिकौ ॥ ७० ॥
चर्मी फलकपाणिः स्यात्पताकी वैजयंतिकः ॥
अनुप्लवः सहायश्चानुचरोऽभिचरः समाः ॥ ७१ ॥
पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः ॥
पुरोगमः पुरोगामी मंदगामी तु मंथरः ॥ ७२ ॥
जंघालोऽतिजवस्तुल्यौ जंघाकरिकजांघिकौ ॥

स्यादुपाधिभेदाद्वा धनुर्धरतो भिन्नः । शाक्तीकः शक्तिहेतिकः "द्वे शक्त्यायुधधारकस्य ।" शक्तिः प्रहरणमस्य शाक्तीकः । शक्तियष्ट्योरीकक् ॥ ६९ ॥ यष्टिहेतिको याष्टीकः एकं "दांडेवाला इति ख्यातस्य ।" परश्वधः परशुः स हेतिर्यस्य सः पारश्वधिकः स्यात् एकं "फरशीकरी गडासेकरी इतिख्यातस्य ।" यष्टिस्वधितिहेतिकाविस्यपि पाठः । असिः खड्गः हेतिः शस्त्रमस्य स नैस्त्रिंशिकः एकं "निमचेकरी इति ख्यातस्य ।" प्रासिकः "एकं प्रासायुधहेतिकस्य भल्लमकरी बिटेकरी सांगकरी इति ख्यातस्य ।" कौंतिकः कुंतहेतिकस्य "भालेकरी इति ख्यातस्यैकम् ।" कुंतो भल्लः ॥ ७० ॥ चर्मी फलकपाणिः द्वे चर्मधारिणः "ढालाईत इति ख्यातस्य ।" फलति विशीर्यते फलकश्चर्म पाणौ यस्य । पताकी वैजयंतिकः द्वे पताकां बिभ्रतः "निशाणकरी, जरीपटकेकरी इति ख्यातस्य ।" वैजयंत्या चरति वैजयंतिकः । अनुप्लवः सहायः अनुचरः अभिचरः चत्वारि अनुचरस्य ॥ ७१ ॥ पुरोगः अग्रेसरः "अग्रसरोऽपि" प्रष्ठः अग्रतःसरः पुरःसरः पुरोगमः पुरोगामी सप्त पुरोगामिनः । प्रातिष्ठते प्रष्ठः । मंदगामी मंथरः द्वे "शनैर्गामिनः" ॥ ७२ ॥ जंघालः "जांघिलः । प्रज्ञालमज्ञिलौ तुल्यौ जंघालजांघिलादय इति वाचस्पतिः ।" अतिजवः "अतिबल इत्यपि" द्वयमतिवेगवतः । जंघाकारिकः जांघिकः "जंघासाध्यत्वादुपचाराद्वृत्तिर्जंघा ।" यो जंघाबलेन जीवति तत्र द्वयम् । तरस्वी त्वरितः वेगी प्रजवी जवनः जवः षट्कं त्वरितगामिनस्य ॥ ७३ ॥ यो जेतुं

तरस्वी त्वरितो वेगी प्रजवी जवनो जवः ॥ ७३ ॥
जय्यो यः शक्यते जेतुं जेयो जेतव्यमात्रके ॥
जैत्रस्तु जेता यो गच्छत्यलं विद्विषतः प्रति ॥ ७४ ॥
सोऽभ्यमित्र्योऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि ॥
ऊर्जस्वलः स्यादूर्जस्वी य ऊर्जातिशयान्वितः ॥ ७५ ॥
स्यादुरस्वानुरसिलो रथिनो रथिको रथी ॥
कामंगाम्यनुकामीनो ह्यत्यंतीनस्तथा भृशम् ॥ ७६ ॥
शूरो वीरश्च विक्रांतो जेता जिष्णुश्च जित्वरः ॥
सांयुगीनो रणे साधुः शस्त्राजीवादयस्त्रिषु ॥ ७७ ॥
ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः ॥
वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम् ॥ ७८ ॥

शक्यते स जय्यः । यथा रामेण रावणो जय्यः । रावणं जेतुं रामः शक्तो-ऽेवेत्यर्थः एकम् । जेय इत्येकं जेतव्यमात्रे । यथा जेयं मनः न तु जय्यम् । जैत्रः जेता द्वे जेतुः ॥ ७४ ॥ यो विद्विषतः शत्रून् प्रति अलं सामर्थ्येन योद्धुं संमुखं गच्छति सः अभ्यमित्र्यः अमित्रीयः अभ्यमित्रीण इति च स्यात् त्रीणि । य ऊर्जस्य पराक्रमस्यातिशयेन युक्तः स ऊर्जस्वलः ऊर्जस्वी इति च स्यात् द्वे । "ऊर्जशब्दोऽदंतः सांतश्च । ऊर्जोऽतिशयान्वित इत्यपि पाठः।" ॥ ७५ ॥ उरस्वान् उरसिलः द्वे "विशालवक्षसः" । उरस्वंतौ । रथिनः "रथिर इत्यपि" रथिकः रथी त्रीणि रथस्वामिनः । रथोऽस्यास्तीति रथिनोऽदंतः। यः कामंगामी यथेच्छं गच्छति तच्छीलः सोऽनुकामीनः स्यात् । "कामगा-मीत्यपि" एकम् । तथेति गामिसमुच्चये । यो भृशंगामी अत्यर्थं गमनशीलः सोऽत्यंतीनः एकम् ॥ ७६ ॥ शूरः वीरः विक्रांतः त्रीणि शूरस्य । जेता जिष्णुः जित्वरः त्रीणि जयनशीलस्य । रणे संयुगे साधुः सांयुगीनः एकं "युद्धकुशलस्य ।" शस्त्राजीवे कांडपृष्ठेति यत्प्रागुक्तं तदादयः "सांयुगी-नांताः" त्रिषु । वाच्यलिंगत्वात् ॥ ७७ ॥ ध्वजिनी वाहिनी सेना पृतना अनीकिनी चमूः वरूथिनी बलं सैन्यं चक्रं अनीकं एकादश सेनायाः । "पुंसि

व्यूहस्तु बलविन्यासो भेदा दंडादयो युधि ॥
प्रत्यासारो व्यूहपार्ष्णिः सैन्यपृष्ठे प्रतिग्रहः ॥ ७९ ॥
एकेभैकरथा त्र्यश्वा पत्तिः पंचपदातिका ॥
पत्त्यंगैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ॥ ८० ॥

अनीकः" ॥ ७८ ॥ बलस्य सैन्यस्य विन्यासो युद्धार्थे रचनाविशेषेण स्थापनं व्यूह इत्येकं "विहू इति ख्यातस्य।" व्यूहलक्षणम्। मुखे रथा हयाः पृष्ठे तत्पृष्ठे च पदातयः ॥ पार्श्वयोश्च गजाः कार्या व्यूहोऽयं परिकीर्तित इति। युधि दंडादयो भेदाः विशेषाः व्यूहस्येति शेषः। सैन्यस्य दंडवत्तिर्यगवस्थानं दंडः। आदिना भोगमंडलादयः। यदाह कामंदकः। तिर्यग्वृत्तिस्तु दंडः स्याद्भोगोऽन्वावृत्तिरेव च। मंडलः सर्वतोवृत्तिः पृथग्वृत्तिरसंहत इति। "तत्र अन्योन्यानुगता वृत्तिर्भोगः सर्पशरीरवदवस्थानं मंडलः। गजादीनां विजातीयैरमिश्रितानां स्थानमसंहतः। एतेषां च शकटमकरपताकासर्वतोभद्रदुर्जयादयो भेदाः प्रत्येकं संति।" प्रत्यासारः व्यूहपार्ष्णिः द्वे व्यूहपश्चाद्भागस्य। प्रत्यासारयति भग्नान्प्रत्यासारः। "प्रत्यासर इत्यपि।" सैन्यपृष्ठः प्रतिग्रहः "परिग्रहः पतद्ग्रह इत्यपि" द्वे सेनायाः पश्चाद्भागस्य। प्रतिगृह्यतेऽवष्टभ्यते सैन्यमनेन प्रतिग्रहः ॥ ७९ ॥ एक इभो यस्यां सा एकेभा। एको रथो यस्यां सा। त्रयोऽश्वा यस्यां सा। पंच पदातयो यत्र सा। एतद्विशेषणचतुष्टयविशिष्टा सेना पत्तिः स्यात्। यदुक्तम्। एको रथो गजश्चैको नराः पंच पदातयः। त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयत इति। एकम्। पत्त्यंगैः पत्तेरवयवैर्गजादिभिस्त्रिगुणैर्यथोत्तरं क्रमात्सेनामुखादय आख्याः स्युः ॥ ८० ॥ तद्यथा। तिसृभिः पत्तिभिः सेनामुखम्। त्रिभिः सेनामुखैर्गुल्मः। गुल्मत्रयेण गणः। त्रिभिर्गणैर्वाहिनी। तिसृभिः वाहिनीभिः पृतना। पृतनात्रयेण चमूः। एतत्त्रयेणाऽनीकिनी। तत्त्रयेण दशानीकिनी। तत्त्रयेण अक्षौहिणी। तथा च। अक्षौहिण्यामित्यधिकैः सप्तत्या ह्यष्टभिः शतैः। संयुक्तानि सहस्राणि गजानामेकविंशतिः २१८७०। एवमेव रथानां तु संख्यानं कीर्तितं बुधैः २१८७०। पंचषष्टिः सहस्राणि षट् शतानि दशैव तु। संख्यातास्तुरगास्तज्ज्ञैर्विना रथतुरंगमैः ६५६१०। नृणां शतसहस्राणि सहस्राणि तथा नव। शतानि त्रीणि चान्यानि पंचाशच्च पदातयः १०९३५०। इत्येकैकम्। भारते

सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ॥
अनीकिनी दशानीकिन्यक्षौहिण्यथ संपदि ॥ ८१ ॥
संपत्तिः श्रीश्च लक्ष्मीश्च विपत्त्यां विपदापदौ ॥
आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियौ ॥ ८२ ॥
धनुश्चापौ धन्वशरासनकोदंडकार्मुकम् ॥
इष्वासोऽप्यथ कर्णस्य कालपृष्ठं शरासनम् ॥ ८३ ॥
कपिध्वजस्य गांडीवगांडिवौ पुन्नपुंसकौ ॥
कोटिरस्याटनी गोधे तले ज्याघातवारणे ॥ ८४ ॥

अक्षौहिणीप्रमाणम् । अक्षौहिण्याः प्रमाणं तु खांगाष्टैकद्विकैर्गजैः । रथैरेतैर्हयैस्त्रिघ्नैः पंचघ्नैश्च पदातिभिः । गजाः २१८७०, रथाः २१८७०, अश्वाः ६५६१०, नराः १०९३५० सर्वमेकीकृत्य २१८७०० अक्षौहिणी भवति । महाक्षौहिणीप्रमाणं तु । खद्वयं ०० निधि ९ वेदा ४ क्षि २ चंद्रा १ क्ष्य २ ग्नि ३ हिमांशुभिः १ । महाक्षौहिणिका प्रोक्ता संख्या गणितकोविदैः । सर्वमेकीकृत्य १३२१२४९०० । एतन्महाक्षौहिणीप्रमाणम् । संपत् ॥ ८१ ॥ संपत्तिः श्रीः लक्ष्मीः चत्वारि संपदः । "संपदेत्यन्यत्र ।" विपत्तिः विपत् आपत् त्रीणि आपदः । "आपत्तिः आपदा इत्यन्यत्र ।" आयुधं प्रहरणं शस्त्रं अस्त्रं चत्वारि शस्त्रमात्रस्य ॥ ८२ ॥ धनुः चापः धन्व शरासनं कोदंडं कार्मुकं इष्वासः सप्त धनुषः । तत्र धनुश्चापे क्लीबे पुंसि च । धन्व नांतं धन्वनी । "धन्वमिति अदंतमपि ।" धनुरुदंतोऽपि । "शरावापो धनुः स्त्री स्यादिति त्रिकांडशेषात् ।" कर्णस्य धनुः कालपृष्ठं स्यात् "एकम् । कालो यम इव पृष्ठमस्य" ॥ ८३ ॥ गांडीवः गांडिवः द्वे अर्जुनस्य धनुषि । "गांडिर्ग्रंथिरस्यास्ति । क्लीबे गांडीवं गांडिवं च । गांड्यजगात्संज्ञायामिति मत्वर्थीयो वप्रत्ययः । गांड्येत्यत्र यणा तंत्रेण ह्रस्वदीर्घयोर्निर्देशः ।" कोटिः "कोटी" अटनी "अटनिः" द्वे अस्य धनुषः प्रांते । गोधा तलं द्वे ज्या मौर्वी तस्या आघातस्ताडनं तद्वारणे चर्मादिकृतबाहुबंधविशेषे । "गोधे तले इति व्यक्तिद्वयाद्वित्वम्" ॥ ८४ ॥ धनुषो मध्यं लस्तक इत्येकम् । मौर्वी ज्या शिंजिनी गुणः चत्वारि धनुर्गुणस्य "चिल्ला इति ख्यातस्य । शिंजिनीशब्दस्वाक-

लस्तकस्तु धनुर्मध्यं मौर्वी ज्या शिंजिनी गुणः ॥
स्यात्प्रत्यालीढमालीढमित्यादि स्थानपंचकम् ॥ ८५ ॥
लक्षं लक्ष्यं शरव्यं च शराभ्यास उपासनम् ॥
पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ॥ ८६ ॥
कलंबमार्गणशराः पत्री रोप इषुर्द्वयोः ॥
प्रक्ष्वेडनास्तु नाराचाः पक्षो वाजस्त्रिषूत्तरे ॥ ८७ ॥
निरस्तः प्रहिते बाणे विषाक्ते दिग्धलिप्तकौ ॥
तूणोपासंगतूणीरनिषंगा इषुधिर्द्वयोः ॥ ८८ ॥
तूण्यां खड्गे तु निस्त्रिंशचंद्रहासासिरिष्टयः ॥

भ्यादिः" मूर्वाख्यस्य तृणस्य विकारो मौर्वी । प्रत्यालीढं आलीढं इत्यादयः पंच धनुर्धराणां स्थितिभेदा इत्यर्थः एकैकम् । आदिना समपदं वैशाखं मंडलं च । तत्र वामजंघाप्रसारपूर्वकदक्षिणजंघासंकोचे प्रत्यालीढम् । दक्षिणजंघाप्रसारपूर्वकवामजंघासंकोचे आलीढम् । पादयोः समत्वेन स्थितिः समपदम् । वितस्त्यंतरेण स्थिते पादद्वये वैशाखम् । मंडलाकारेण पादद्वयधारणं मंडलकम् ॥ ८५ ॥ लक्षं लक्ष्यं शरव्यं त्रीणि वेध्यस्य "निशाण इति ख्यातस्य ।" शराभ्यासः उपासनं द्वे शरक्षेपाभ्यासस्य । "शरस्य शरमोक्षस्याभ्यासः शराभ्यासः" । पृषत्कः बाणः विशिखः अजिह्मगः खगः आशुगः ॥ ८६ ॥ कलंबः मार्गणः शरः "सरः । चित्रपुंखः सरः शर इति त्रिकांडशेषात् ।" पत्री रोपः इषुः द्वादश बाणस्य । तत्रेषुः स्त्रीपुंसयोः । प्रक्ष्वेडनः "प्रक्ष्वेदन इत्यपि" नाराचः द्वे लोहमयस्य बाणस्य । "नरानाचामति नाराचः । अन्येभ्योऽपीति डः । प्रज्ञाद्यण् ।" पक्षः वाजः द्वे कंकादिपक्षस्य । उत्तरे निरस्तादिलिप्तकांतास्त्रिषु ॥ ८७ ॥ प्रहिते क्षिप्ते बाणे निरस्त इत्येकम् । विषाक्तः दिग्धः लिप्तकः त्रीणि विषाक्ते बाणे । तूणः उपासंगः तूणीरः निषंगः इषुधिः ॥ ८८ ॥ तूणी पट्कमिषुधेः बाणठेवण्याचा भाता इति ख्यातस्य । इषवो धीयंते यस्यां भस्त्रायां सा इषुधिः स्त्रीपुंसयोः । तूणी स्त्री । "तूणेषुधी उपासंग इति रत्नकोशे" । खड्गः निस्त्रिंशः चंद्रहासः असिः रिष्टिः "ऋष्टिरित्यपि ।

कौक्षेयको मंडलाग्रः करवालः कृपाणवत् ॥ ८९ ॥
त्सरुः खड्गादिमुष्टौ स्यान्मेखला तन्निबंधनम् ॥
फलकोऽस्त्री फलं चर्म संग्राहो मुष्टिरस्य यः ॥ ९० ॥
द्रुघणो मुद्गरघनौ स्यादीली करवालिका ॥
भिंदिपालः सृगस्तुल्यौ परिघः परिघातिनः ॥ ९१ ॥
द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः ॥
स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका ॥९२॥

ऋष्टिः खड्गस्तरवारीति त्रिकांडशेषः।" कौक्षेयकः मंडलाग्रः करवालः "करपालः इत्यपि" कृपाणः नव खड्गस्य। "तरवार इति ख्यातस्य" । खंडयति परं खड्गः ॥ ८९ ॥ खड्गस्य मुष्टौ त्सरुरित्येकं "थरू, मूठ इति ख्यातस्य"। तकारादिकं पुंसि । आदिना "कटार खंजीर इत्यादि नामक" छुरिकादिग्रहः। तस्य खड्गस्य मुष्टेः चर्मवर्ध्रिकया निबंधनं मेखला स्यात् "एकं डाली इति ख्यातस्य" । यया प्रहरतो हस्तात् न निर्याति खड्गः । फलकः फलं चर्म त्रीणि ढाल इति ख्यातस्य चर्मणः । "क्लीबे फलकम्" । अस्य फलकस्य यो मुष्टिर्ग्रहणस्थानं स संग्राहः एकं "मूठ इति ख्यातस्य" ॥ ९० ॥ द्रुघणः "द्रुघन इत्यपि" मुद्गरः घनः त्रयं मुद्गरस्य "मुद्गल इति ख्यातस्य।" द्रुघणे इति सप्तम्यंतपाठोऽपि । ईली "इली ईलिः" करवालिका "करपालिकेत्यपि" द्वे ह्रस्वखड्गाकृतेरेकधारस्य शस्त्रस्य "खांडा इति ख्यातस्य। गुप्ती इति केचित्" । भिंदिपालः सृगः द्वे अश्मप्रक्षेपसाधनस्य रज्जुमयस्य यंत्रविशेषस्य "गोफण इति ख्यातस्थ । भिंदिर्द्वादशतालं तु दश कुंतोऽभिधीयत इति । तदवच्छिन्नः कालोऽपि भिंदिः तं पालयतीति भिंदिपालः" । परिघः परिघातिनः द्वे लोहबद्धहस्तप्रमाणलगुडस्य ॥ ९१ ॥ कुठारः स्वधितिः परशुः परश्वधः परश्वं दधाति । "परस्वध इत्यपि" चत्वारि कुठारस्य "कुह्राड इति ख्यातस्य" । तत्र कुठारः स्त्रीपुंसयोः । "तत्र स्त्रियां कुठारी। कुठारकः पर्शुरथ च्छुरिका कोशशायिकेति रभसः" । स्वधितिः पुंसि । शस्त्री असिपुत्री छुरिका असिधेनुका चत्वारि छुरिकायाः "सुरी इति ख्यातायाः" ॥ ९२ ॥ शल्यं शंकुः। द्वे बाणाग्रस्य आयुधविशेषस्य "फल इति

वा पुंसि शल्यं शंकुर्ना सर्वला तोमरोऽस्त्रियाम् ॥
प्रासस्तु कुंतः कोणस्तु स्त्रियः पाल्यश्रिकोटयः ॥ ९३ ॥
सर्वाभिसारः सर्वौघः सर्वसन्नहनार्थकः ॥
लोहाभिसारोऽस्त्रभृतां राज्ञां नीराजनाविधिः ॥ ९४ ॥
यत्सेनयाभिगमनमरौ तदभिषेणनम् ॥
यात्रा व्रज्याऽभिनिर्याणं प्रस्थानं गमनं गमः ॥ ९५ ॥
स्यादासारः प्रसरणं प्रचक्रं चलितार्थकम् ॥
अहितान्प्रत्यभीतस्य रणे यानमभिक्रमः ॥ ९६ ॥

ख्यातस्य। शलति शल्यम्। शल गतौ । यच्छाश्वतः । संख्याकीलकयोः शंकुः शंकुः प्रहरणांतर इति। ना पुमान्। सर्वला "शर्वला । शार्दूलशर्वलाशलादुरिति शभेदात्।" तोमरः "द्वे गुरगूंज इति प्रसिद्धस्य मंथदंडाकारशस्त्रभेदस्य। तौर्गता म्रियतेऽनेन तोमरः ।शल्यादिचतुष्कमपि तोमरस्येत्येके।तत्र सर्वला स्त्री।" प्रासः कुंतः "द्वे भाला इति ख्यातस्य।" कोणः पालिः "पाली" अश्रिः "अश्रीः" कोटिः "कोटी" चत्वारि खड्गादिप्रांतभागस्य "टोंक इति ख्यातस्य । तत्र पाल्यादयः स्त्रियाम्" ॥ ९३ ॥ सर्वाभिसारः सर्वौघः सर्वसन्नहनं त्रीणि चतुरंगसैन्यसन्नहनस्य "जमाव इति ख्यातस्य । सर्वसन्नहनमर्थो यस्य" । सर्वेषामभिसरणं सर्वाभिसारः । अस्त्रभृतां राज्ञां महानवम्यां दशम्यां वा नीराजनासमये शस्त्रादिसमर्पणलक्षणः यो विधिः स लोहाभिसार इत्युच्यते एकम्। लोहं शस्त्रं अभिसार्यते प्रस्थाप्यतेऽत्र लोहाभिसारः। "लोहाभिहारोऽपि । लोहस्य शस्त्रस्याभितो हरणम्। लोहाभिहार इत्युक्तो विधिर्नीराजनोत्तर इत्यमरमाला । नीराजनो विधिरिति पाठे निःशेषेण राजन्त्यत्रेति बहुव्रीहिर्बोध्यः" ॥ ९४ ॥ अरौ शत्रुसमीपे यत्सेनया सहाभिगमनं तदभिषेणनं स्यात् एकम्। यात्रा व्रज्या अभिनिर्याणं प्रस्थानं गमनं गमः षट्कं प्रयाणस्य ॥ ९५ ॥ आसारः प्रसरणं "प्रसरणीत्यपि पाठः। प्रसरणिरित्यपि" द्वे सैन्यस्य सर्वतो व्याप्तेः। प्रचक्रं चलितं द्वे प्रस्थितसैन्यस्य। प्रचक्रं चलितं त्रिष्वित्यमरमाला। रणे अहितान्प्रति भयरहितस्य शूरस्य यद्गमनं सोऽभिक्रम इत्येकम्। "अतिक्रम इत्यपि" ॥ ९६ ॥ वैतालिकाः

वैतालिका बोधकराश्चाक्रिका घांटिकाऽर्थकाः ॥
स्युर्मागधास्तु मगधा बंदिनः स्तुतिपाठकाः ॥ ९७ ॥
संशप्तकास्तु समयात्संग्रामादनिवर्तिनः ॥
रेणुर्द्वयोः स्त्रिया धूलिः पांसुर्ना न द्वयो रजः ॥ ९८ ॥
चूर्णे क्षोदः समुत्पिंजपिंजलौ भृशमाकुले ॥
पताका वैजयंती स्यात्केतनं ध्वजमस्त्रियाम् ॥ ९९ ॥
सा वीराशंसनं युद्धभूमिर्याऽतिभयप्रदा ॥

बोधकराः द्वे ये नृपान्स्तुतिपाठेन प्रातर्बोधयंति तेषु । "विविधेन तालेन शब्देन चरंति ते वैतालिकाः ।" चाक्रिकाः घांटिकाः द्वे बंदिविशेषेषु । घंटाघातेन ये शंसंति ते घांटिकाः । यदाहुः । प्रबोधसमये । घंटाशिल्पास्तु घांटिका इति । "चक्रिका घटिकार्थका इति क्वचित्पाठः । तत्र चक्रमस्ति वाद्यत्वेन यस्य । ठन् । घटीं कायंति कै शब्दे द्वे घटिकावादकस्य ।" मागधाः मगधाः "मधुका इति मुकुटः । मधु मधुरं कायंति इति विग्रहः ।" द्वे राजाग्रतो वंशक्रमस्य स्तावकानाम् । यदाहुः । मागधाः सूतवंशजा इति । बंदिनः स्तुतिपाठकाः द्वे राजादिस्तुतिपाठकेषु "भाट इति ख्यातेषु" वंदंते स्तुवंते तच्छीला वंदिनः । "यदुक्तम् । वंदिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तय इति ।" चत्वार एकार्था इत्येके ॥ ९७ ॥ समयाच्छपथाद्धे संग्रामादनिवर्तिनोऽपराङ्मुखास्ते संशप्तकाः स्युरेकम् । रेणुः धूलिः "धूली" पांसुः "पांशुः" रजः चत्वारि धूल्याः धूळ इति ख्यातायाः । "रेणुः स्त्रीपुंसयोः ।" पांसुः पुंसि । रजः क्लीबे ॥ ९८ ॥ चूर्णं क्षोदः द्वे पिष्टस्य रजसः । "पटवास रजस इत्येके । चूर्णः पुंल्लिंगोऽपि । चूर्णो धूलौ क्षारभेदे चूर्णानि वासयुक्तिष्विति मेदिनी । चूर्णानि वासयोगाः स्युश्चूर्णो धूलिः सशर्कर इति शाश्वतश्च ।" समुत्पिंजः पिंजलः द्वे अत्यंतमाकुले सैन्यादौ । पताका वैजयंती केतनं ध्वजं चत्वारि पताकायाः । केतनादि द्वयं पताकादंडस्येत्येके । "पुंसि ध्वजः" ॥ ९९ ॥ या युद्धभूमिः खंडितैर्गजादिभिरतिभयप्रदा सा वीराशंसनं स्यात् "एकम् । वीरा आशंसंतेऽत्र वीराशंसनम् । आङ्ः शसि इच्छायाम् ।" अहं पूर्वमहं पूर्वं अहमग्रे भवामीत्याग्रहपुरःसरं पूर्वं युद्धं अहंपूर्विका स्यात् । सुप्सुपेति समासे स्वार्थे कन् । स्त्रियां टाप् ।

अहंपूर्वमहंपूर्वमित्यहंपूर्विका स्त्रियाम् ॥ १०० ॥
आहोपुरुषिका दर्पाद्या स्यात्संभावनात्मनि ॥
अहमहमिका तु सा स्यात्परस्परं यो भवत्यहंकारः ॥१०१
द्रविणं तरः सहोबलशौर्याणि स्थाम शुष्मं च ॥
शक्तिः पराक्रमः प्राणो विक्रमस्त्वतिशक्तिता ॥ १०२ ॥
वीरपानं तु यत्पानं वृत्ते भाविनि वा रणे ॥
युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ॥ १०३ ॥
मृधमास्कंदनं संख्यं समीकं सांपरायिकम् ॥
अस्त्रियां समरानीकरणाः कलहविग्रहौ ॥ १०४ ॥
संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः ॥

एकम् । स्त्रियाम् ॥ १०० ॥ दर्पादात्मविषये या संभावना सामर्थ्याविष्करणं सा आहोपुरुषिकेत्युच्यते । अहंपुरुष इत्यहंकारवानहोपुरुषस्तद्भाव आहोपुरुषिका एकम् । यः परस्परमहं शक्तोऽहं शक्त इत्यहंकारः सा अहमहमिका स्यात् । अहमहंशब्दोऽस्त्यत्र । वीप्सायां द्विर्वचनम् । एकं षडक्षरम् ॥ १०१ ॥ द्रविणं तरः सहः बलं शौर्यं स्थाम शुष्मं शक्तिः पराक्रमः प्राणः दश पराक्रमस्य । तरसी । सहसी । स्थामनी । शुष्ममदंतम् । "सह इत्यदंतोऽपि । सहोऽस्त्रियां बले न स्त्रीति रभसः । सहो बले न स्त्रियां स्यादिति मेदिनी च" । विक्रमः अतिशक्तिता द्वे अतिपराक्रमस्य ॥ १०२ ॥ रणे वृत्ते सति तच्छ्रमशांत्यर्थं अथवा भाविनि भविष्यति रणे तदुत्साहवृद्ध्यर्थं यद्वीराणां मद्यपानं तद्वीरपानं स्यात् । "वीरपाणमित्यपि । वा भावकरणयोरिति णत्वम्" । युद्धं आयोधनं जन्यं प्रधनं प्रविदारणम् ॥ १०३ ॥ मृधं आस्कंदनं संख्यं समीकं सांपरायिकं "संपरायिकं" कन् । समरः अनीकः रणः कलहः विग्रहः ॥ १०४ ॥ संप्रहारः अभिसंपातः कलिः संस्फोटः "संस्फेटः" संयुगः अभ्यामर्दः "अभिमर्द इत्यपि" । "अभिमर्दस्तु पुंसि स्यादवमर्दे संपराये चेति मेदिनी ।" समाघातः संग्रामः अभ्यागमः आहवः ॥ १०५ ॥ समुदायः संयत् समितिः आजिः समित् युत् एकत्रिंशद्युद्धस्य । संख्यं व्यनुस्वारम् ।

अभ्यामर्दसमाघातसंग्रामाभ्यागमाहवाः ॥ १०५ ॥
समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः ॥
नियुद्धं बाहुयुद्धेऽथ तुमुलं रणसंकुले ॥ १०६ ॥
क्ष्वेडा तु सिंहनादः स्यात्करिणां घटना घटा ॥
क्रंदनं योधसंरावो बृंहितं करिगर्जितम् ॥ १०७ ॥
विस्फारो धनुषः स्वानः पटहाडंबरौ समौ ॥
प्रसभं तु बलात्कारो हटोऽथ स्खलितं छलम् ॥१०८॥
अजन्यं क्लीबमुत्पात उपसर्गः समं त्रयम् ॥
मूर्छा तु कश्मलं मोहोऽप्यवमर्दस्तु पीडनम् ॥ १०९ ॥
अभ्यवस्कंदनं त्वभ्यासादनं विजयो जयः ॥
वैरशुद्धिः प्रतीकारो वैरनिर्यातनं च सा ॥ ११० ॥

समरादित्रयं अस्त्रियाम् । संयतौ समितौ । युधौ । नियुद्धं बाहुयुद्धं द्वे बाहुयुद्धस्य । तुमुलं इत्येकं रणस्य संकुले परस्परसंबाधे वर्तते ॥ १०६ ॥ क्ष्वेडा सिंहनादः द्वे वीराणां सिंहनादतुल्यनादविशेषस्य । क्ष्वेडा टाबंता । करिणां घटना युद्धे संघट्टनं घटा स्यात् । योधानां संरावः आक्रोशपूर्वकः शब्दः क्रंदनं स्यात् अन्योन्यस्पर्धया योधानामाह्वानस्य एकम् । करिणां गर्जितं बृंहितं स्यात् एकम् ॥ १०७ ॥ धनुषः शब्दो विस्फारः एकम् । पटहः आडंबरः द्वे संग्रामध्वनेः । प्रसभं बलात्कारः हठः त्रीणि बलात्कारस्य । "प्रगता सभा विचारोऽस्मात्प्रसभम् । बलात्करणं बलात्कारः" । स्खलितं छलं द्वे युद्धमर्यादायाश्चलनस्य ॥ १०८ ॥ अजन्यं उत्पातः उपसर्गः त्रयमुत्पातस्य "शुभाशुभसूचकस्य । न जने साधु अजन्यम्" । मूर्च्छा कश्मलं मोहः त्रीणि मूर्छायाः । अवमर्दः पीडनं द्वे सस्यादिसंपन्नस्य देशस्य यत्परचक्रेण पीडनं तत्र ॥ १०९ ॥ अभ्यवस्कंदनं अभ्यासादनं द्वे छलादाक्रमणस्य धाड इति ख्यातस्य । छापा इत्यपि । विजयः जयः द्वे शत्रुपराङ्मुखीकरणेन लब्धस्योत्कर्षस्य । वैरशुद्धिः प्रतीकारः वैरनिर्यातनं त्रीणि वैरप्रतीकारस्य ॥११०॥ प्रद्रावः उद्द्रावः संद्रावः संदावः विद्रवः

प्रद्रावोद्रावसंद्रावसंदावा विद्रवो द्रवः ॥
अपक्रमोऽपयानं च रणे भंगः पराजयः ॥ १११ ॥
पराजितपराभूतौ त्रिषु नष्टतिरोहितौ ॥
प्रमापणं निबर्हणं निकारणं विशारणम् ॥ ११२ ॥
प्रवासनं परासनं निषूदनं निहिंसनम् ॥
निर्वासनं संज्ञपनं निर्ग्रंथनमपासनम् ॥ ११३ ॥
निस्तर्हणं निहननं क्षणनं परिवर्जनम् ॥
निर्वापणं विशसनं मारणं प्रतिघातनम् ॥ ११४ ॥
उद्वासनप्रमथनक्रथनोज्जासनानि च ॥
आलंभपिंजविशरघातोन्माथवधा अपि ॥ ११५ ॥
स्यात्पंचता कालधर्मो दिष्टांतः प्रलयोऽत्ययः ॥
अंतो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम् ॥११६॥
परासुप्राप्तपंचत्वपरेतप्रेतसंस्थिताः ॥

द्रवः अपक्रमः अपयानं अष्टौ पलायनस्य । यः रणे भंगः स पराजय इत्येकम् ॥ १११ ॥ पराजितः पराभूतः द्वे निर्जितस्य । नष्टः तिरोहितः द्वे निलीनस्य । त्रिष्विति काकाक्षिवदुभयत्र युज्यते । प्रमापणादिवधांतानि त्रिंशन्नामानि वधस्य । "तानि । प्रमापणं प्रमापनं वा । निबर्हणं निर्बर्हणं वा । निकारणं विशारणं निशारणं वा ॥ ११२ ॥ प्रवासनं परासनं निषूदनं निसूदनमिति वा । निर्हिंसनं निर्वासनं संज्ञपनं "मारणतोषणनिशामनेषु ज्ञा" "ज्ञप मिच्च" इति वा । निर्ग्रंथनं निर्ग्रंधनं वा । अपासनम् ॥११३॥ निस्तर्हणं निहननं क्षणनं परिवर्जनं निर्वापणं विशसनं मारणं प्रतिघातनम्" ॥ ११४ ॥ उद्वासनं प्रमथनं क्रथनं उज्जासनम् । प्रमापणमित्यारभ्योज्जासनपर्यंतं भावल्युडंताः । आलंभः पिंजः विशरः घातः उन्माथः "उन्मथो वा" वधः इति ॥ ११५ ॥ पंचता "पंचत्वं" कालधर्मः दिष्टांतः प्रलयः अत्ययः अंतः नाशः मृत्युः मरणं निधनः दश मरणस्य । तत्र मृत्युर्द्वयोः । निधनमस्त्रियाम् ॥ ११६ ॥ परासुः प्राप्तपंचत्वः परेतः प्रेतः संस्थितः मृतः प्रमीतः

मृतप्रमीतौ त्रिष्वेते चिता चित्या चितिः स्त्रियाम् ॥११७॥
कबंधोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम् ॥
श्मशानं स्यात्पितृवनं कुणपः शवमस्त्रियाम् ॥ ११८ ॥
प्रग्रहोपग्रहौ बंद्या कारा स्याद्बंधनालये ॥
पुंसि भूम्न्यसवः प्राणाश्चैवं जीवोऽसुधारणम् ॥ ११९ ॥
आयुर्जीवितकालो ना जीवातुर्जीवनौषधम् ॥

॥ इति क्षत्रियवर्गः ॥ ८ ॥

---

ऊरव्या ऊरुजा अर्या वैश्या भूमिस्पृशो विशः ॥

सप्त मृतस्य । एते वाच्यलिंगाः । चिता चित्या चितिः "त्रयं प्रेतदाहाधारचुल्लेः सरण इति ख्यातस्य" ॥ ११७ ॥ अपमूर्ध मस्तकहीनं नर्तकक्रियायुक्तं यत्कलेवरं "धड इति ख्यातं" स कबंधः स्यात् । कबंधं सलिले तुंडे कबंधो राहुरक्षसोरित्युक्तम् । एकम् । युद्धे सहस्रपूरणः कबंधो नृत्यते । उपचारान्नर्तनरहितेऽपि प्रयोगः । श्मशानं पितृवनं द्वे प्रेतभूमेः "मसणवटी इति ख्यातायाः ।" शवः शेतेऽस्मिन् श्मशानं "द्वितालव्यम् ।" कुणपः शवं द्वे निर्जीवशरीरस्य । "पुंसि तु शवः" ॥ ११८ ॥ प्रग्रहः उपग्रहः बंदी "बंदिरित्यपि" त्रीणि "चोरादेराकर्षणस्य बंदी अटकाव इति कैद इत्यपि ख्यातस्य ।" बंधनगेहे कारेत्येकं स्त्रियाम् । असवः प्राणाः द्वे प्राणानां । भूम्नि बहुत्वे । एवंशब्दात्प्राणा अपि नित्यं पुंसि भूम्नि च । प्राणो नाम वायुरित्येके तत्तु वायुमात्रविवक्षया । जीवः असुधारणं द्वे प्राणधारणस्य ॥ ११९ ॥ जीवितावच्छिन्नः काल आयुः स्यात् एकम् । उसंतं क्लीबे । जीवितस्यौषधं रक्षणोपायो जीवातुः स्यात् । ना पुमान् एकम् ॥ इति क्षत्रियवर्गः ॥ ८ ॥ ऊरव्यः ब्रह्मण ऊरोर्जातः । शरीरावयवाद्यत् ओर्गुणः अवादेशः । ऊरुजः अर्यः वैश्यः भूमिस्पृक् विट् । षट् वैश्यस्य । आजीवः जीविका वार्ता वृत्तिः वर्तनं जीवनं षट् जीविकामात्रस्य ॥ १ ॥ कृषिः कर्षणम् । पशुपालस्य कर्म पशुपाल्यं गोरक्षणादि । वणिजां कर्म वाणिज्यं क्रयविक्रयादि । "वणिज्यम् । वणिजेत्यपि ।" एवं त्रयो वृत्तयो वैश्यानां

आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने ॥ १ ॥
स्त्रिया कृषिः पाशुपाल्यं वाणिज्यं चेति वृत्तयः ॥
सेवा श्ववृत्तिरनृतं कृषिरुंछशिलं त्वृतम् ॥ २ ॥
द्वे याचितायाचितयोर्यथासंख्यं मृतामृते ॥
सत्यानृतं वणिग्भावः स्याहणं पर्युदंचनम् ॥ ३ ॥
उद्धारोऽर्थप्रयोगस्तु कुसीदं वृद्धिजीविका ॥
याच्ञयाप्तं याचितकं निमयादापमित्यकम् ॥ ४ ॥

जीवितका भेदा इत्यर्थः । कृषिगोरक्षवाणिज्यं वैश्यकर्मस्वभावजमिति महाभारते भगवद्गीतायाम् । अथ मृतामृताभ्यां जीवेत मृतेन प्रमृतेन वा । सत्यानृताभ्यामपि वा न श्ववृत्त्या कथंचनेत्यादिस्मृत्युक्तान्वृत्तिभेदान्व्युत्पादयति । सेवा परचित्तानुवर्तनं सा श्ववृत्तिः । "शुनो वृत्तिरिव शुन इव वृत्तिर्वा । शुनो वृत्तिः स्मृता सेवा गर्हितं तद्द्विजन्मनाम् । हिंसादोषप्रधानत्वादनृतं कृषिरुच्यते इत्युक्तम् ।" श्ववृत्तिर्नीचसेवनमिति श्रीभागवते । एकम् । कृषिः कर्षणं तदनृतं स्यात् । अनृतं कर्षणं स्मृतमिति स्मृतेः । "प्रनृतमिति क्वचित्पाठः । प्रनृतं कर्षणं स्मृतमिति मनूक्तेः ।" एकम् । उंछश्च शिलं च उंछशिलं समाहारद्वंद्वः । आपणादौ पतितकणानामेकशो ग्रहणमुंछः । क्षेत्रादौ स्वामित्यक्तकणिशानां ग्रहणं शिलम् । एतद्द्वयं ऋतमित्युच्यते । "उंछः कणश आदानं कणिशाद्यर्जनं शिलमिति यादवः । पुमानुंछः शिलं त्वृतमिति बोपालितः ।" एकम् ॥ २ ॥ याचिते प्रत्यहं तंडुलादियाच्ञायां मृतमित्येकम् । मृतं तु नित्ययाच्ञा स्यादित्युक्तेः । अयाचिते अजगरवर्तनवद्याच्ञां विनैव लब्धे अमृतमित्येकम् । वणिग्भावो वाणिज्यं क्रयविक्रयादि तत्सत्यानृतं स्यात् एकम् । किंचित्सत्यं किंचिदसत्यं सत्यानृतम् । ऋणं पर्युदंचनम् ॥ ३ ॥ उद्धारः त्रयमृणस्य । "उद्धारश्चोद्धृतावृण इति विश्वः ।" अर्थप्रयोगः कुसीदं "कुशीदं कुषीदं चेत्यपि ।" वृद्धिजीविका त्रीणि ऋणसंबंधिकालांतरद्रव्येण लोके "व्याज इति ख्यातेन" जीविकायाम् । याच्ञया यदाप्तं तद्याचितकं "एकं जायां आणलेला जायजाणा जिन्नस इति ख्यातस्य ।" निमयात्परिवर्तादाप्तं आपमित्यकम् । अपमित्य आप्तं "अपमित्ययाचिताभ्यां कक्कनौ । परिवर्तो

उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमात् ॥
कुसीदिको वार्धुषिको वृद्ध्याजीवश्च वार्धुषिः ॥ ५ ॥
क्षेत्राजीवः कर्षकश्च कृषिकश्च कृषीवलः ॥
क्षेत्रं व्रैहेयशालेयं व्रीहिशाल्युद्भवोचितम् ॥ ६ ॥
यव्यं यवक्यं षष्टिक्यं यवादिभवनं हि यत् ॥
तिल्यं तैलीनवन्माषोमाणुभंगा द्विरूपता ॥ ७ ॥
मौद्गीनकौद्रवीणादिशेषधान्योद्भवक्षेत्रम् ॥

विनिमय इति मेदिनी ।" निमयः परिवर्तः स्यादिति मनुः ॥ ४ ॥ प्रयोक्ता ऋणस्य दाता उत्तमर्ण इत्येकं सावकार इति प्रसिद्धस्य । "उत्तमं ऋणमस्य ।" ऋणस्य ग्राहकोऽधमर्ण इत्येकं कर्जदार इति प्रसिद्धस्य । कुसीदिकः वार्धुषिकः वृद्ध्याजीवः वार्धुषिः चत्वारि ऋणं दत्वा तद्वृद्ध्याजीविनः पुरुषस्य । "कुसीदार्थं प्रयच्छति कुसीदिकः । वृद्धिं गर्ह्यां प्रयच्छति वार्धुषिकः" ॥५॥ क्षेत्राजीवः कर्षकः "कार्षको वा" कृषिकः कृषीवलः चत्वारि कृषीवलस्य शेतकरीति लौकिकभाषायाम् । कृषिरस्यास्तीति कृषीवलः । वले इति दीर्घः । व्रीह्युद्भवोचितं व्रीहीणामुद्भवे योग्यं क्षेत्रं व्रैहेयं एकम् । शाल्युद्भवोचितं क्षेत्रं शालेयं एकम् ॥ ६ ॥ यवादीनां भवनं उद्भवोचितं यत्क्षेत्रं तत् यव्यादि । यथा यवानां भवनं क्षेत्रं यव्यम् । यवका अल्पयवास्तेषां भवनं क्षेत्रं यवक्यम् । "यवकः शूकधान्यो यवः" । षष्टिकाः षष्टिरात्रेण पच्यंते तेषां भवनं क्षेत्रं षष्टिक्यं एकैकम् । तिल्यं तैलीनवन्माषादेः क्षेत्रविषये द्विरूपता स्यात् । यथा तिल्यं तैलीनं द्वे तिलानां भवने क्षेत्रे । एवं माष्यं माषीणं द्वे माषाणां भवने क्षेत्रे । उमा अतस्यस्तासां क्षेत्रं उम्यं औमीनं द्वे । अणुर्धान्यभेदस्तत्क्षेत्रे अणव्यं आणवीनं द्वे । भंगा मातुलानी तत्क्षेत्रं भंग्यं भांगीनं द्वे ॥७॥ शेषाणां व्रीह्यादिभ्य उक्तेभ्योऽन्येषां मुद्गादीनां धान्यानामुद्भवोचितं क्षेत्रं मौद्गीनादि स्यात् । शेषधान्योद्भवोचितमिति वा पाठः । यथा मुद्गानां भवनं क्षेत्रं मौद्गीनम् । एवं कौद्रवीणम् । आदिना चाणकीनम् । "गौधूमीनम् । कालायीनम् । कौलत्थीनम् । प्रैयंगवीनमित्यादि । धान्यानां भवने क्षेत्रे खञ् ईनादेशः । एकैकम् ।" शाकशाकटं शाकशाकिनं द्वयं शाकक्षेत्रादिके क्लीबम् । भवने क्षेत्रे शाकटशाकिनाविति वार्तिकेन सिद्धमेतत् । आदौ

("शाकक्षेत्रादिके शाकशाकटं शाकशाकिनम्") (१)
बीजाकृतं तूप्तकृष्टे सीत्यं कृष्टं च हल्यवत् ॥ ८ ॥
त्रिगुणाकृतं तृतीयाकृतं त्रिहल्यं त्रिसीत्यमपि तस्मिन् ॥
द्विगुणाकृते तु सर्वं पूर्वं शंबाकृतमपीह ॥ ९ ॥
द्रोणाढकादिवापादौ द्रौणिकाढकिकादयः ॥
खारीवापस्तु खारीक उत्तमर्णादयस्त्रिषु ॥ १० ॥
पुन्नपुंसकयोर्वप्रः केदारः क्षेत्रमस्य तु ॥
कैदारकं स्यात्कैदार्यं क्षेत्रं कैदारिकं गणे ॥ ११ ॥

उप्तं पश्चात्कृष्टं क्षेत्रमुप्तकृष्टं तत्र बीजाकृतमित्येकम् । "बीजेन सह कृतं कृष्टं बीजाकृतम् । कृञो द्वितीयेति डाच् ।" सीत्यं कृष्टं हल्यं त्रीणि कृष्टमात्रस्य । सीतया हललेखया संमितं सीत्यम् । "शीत्यमित्यपि ।" हलेन कृष्टं हल्यम् ॥ ८ ॥ त्रिगुणाकृतं तृतीयाकृतं त्रिहल्यं त्रिसीत्यं चत्वारि वारत्रयकृष्टस्य । त्रिगुणं "त्रिवारं" कृतं कृष्टं क्षेत्रं त्रिगुणाकृतम् । संख्यायाश्चेति डाच् । तस्मिन् त्रिगुणाकृते इत्यर्थः । द्विगुणाकृतेऽपि सर्वं पूर्वं योज्यम् । यथा । द्विगुणाकृतं द्वितीयाकृतं द्विहल्यं द्विसीत्यं चत्वारि वारद्वयकृष्टस्य । इह द्विःकृष्टे शंबाकृतमित्यपि नाम । "शंबशब्दो द्वितीयकर्षणे वर्तते इति रामाश्रमः । सिद्धांतकौमुद्यां तु शंबशब्दः प्रतिलोमे । अनुलोमं कृष्टं क्षेत्रं प्रतिलोमं कर्षतीत्यर्थः । संबाकृतमिति दंत्यादिरपि ।" एवं पंच ॥ ९ ॥ उप्यतेऽस्मिन्निति वापः क्षेत्रम् । द्रोणादिपरिमितधान्यस्य वापादौ द्रौणिकादयः स्युः । यथा द्रोणस्य वापः क्षेत्रं द्रौणिकः । आढकस्य वापः आढकिकः । आदिशब्दात्प्रस्थस्य वापः प्रास्थिकः । "कौडविकः" इत्यादि । वापादावित्यादिशब्दात्पचादिग्रहः । द्रोणस्य पचो द्रौणिकः कटाहः॥ खारीवापः खारीपरिमितं यत्रोप्यते स खारीकः एकम् । उत्तमर्णादयः खारीकांताः त्रिलिंग्याम् । वाच्यलिंगत्वात् ॥ १० ॥ वप्रः केदारः क्षेत्रं त्रीणि क्षेत्रस्य "शेत इति ख्यातस्य ।" वप्रः प्राकाररोधसोः । क्षेत्रे ताते चये रेणाविति हैमः । अस्य क्षेत्रस्य गणे समूहे कैदारकं कैदार्यं "कैदारं" क्षेत्रं कैदारिकं इति चत्वारि ॥ ११ ॥ लोष्टं लेष्टुः द्वे मृत्तिकाखंडस्य । "ढेंकुळ,

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

लोष्टानि लेष्टवः पुंसि कोटिशो लोष्टभेदनः ॥
प्राजनं तोदनं तोत्रं खनित्रमवदारणे ॥ १२ ॥
दात्रं लवित्रमाबंधो योत्रं योक्त्रमथो फलम् ॥
निरीशं कुटकं फालः कृषको लांगलं हलम् ॥१३॥
गोदारणं च सीरोऽथ शम्या स्त्री युगकीलकः ॥
ईषा लांगलदंडः स्यात्सीता लांगलपद्धतिः ॥ १४ ॥

डिफळ इति ख्यातस्य । लोष्टं पुंस्यपि । लेष्टुः षंढेऽपि लोष्टः स्यादिति बोपालितः ।" कोटिशः कोटीश इत्यपि" लोष्टभेदनः द्वे लोष्टभंजनमुद्गरस्य "कुळव, डिफळा इति ख्यातस्य।" प्राजनं तोदनं तोत्रं त्रीणि वृषादेस्ताडनोपयोगिनस्तोत्रस्य "आंसूड, चाबूक इति ख्यातस्य ।" तुद्यतेऽनेन तोत्रम् । यत्तु-क्ष्यम् । तोत्रवेत्रैकपाणये । खनित्रं अवदारणं द्वे कुद्दालादेः "कुदळ इति ख्यातस्य" ॥ १२ ॥ दात्रं लवित्रं द्वे । लुनाति छिनत्ति अनेन लवित्रं "इळा कोयता" इति प्रसिद्धम् । आबंधः योत्रं योक्त्रं त्रीणि युगबंधनोपयोगिन्यां रज्जौ "जुंपणी जोतें इति ख्यातायाम् ।" फलं निरीशं "निरीषमिति" कुटकम् । "दीर्घादिरिति मुकुटः" फालः कृषकः "कृषिकः । कृषिकाकृषिकौ फालकृषकाविति रुद्रात्स्त्रियामपि" पंच लांगलस्याधः स्थिते काष्ठे यस्याग्रं लोहेन प्रबध्यते । "आद्यत्रयं यत्र काष्ठे फालो निबध्यते तस्य । अंत्यद्वयं फालस्येत्यपि मतम् ।" फलति विशीर्यते भूमिरनेन फालः । लांगलं हलं "हालः । हालः फालवहः सीतेति विक्रमादित्यः । हालो हले पुमान् हाला मदिरायां च योषितीति मेदिनी" ॥ १३ ॥ गोदारणं सीरः "शीर इत्यपि" चत्वारि हलस्य । शम्या युगकीलकः द्वे युगस्य कीलके खीळ इति ख्याते । शम्यते वृषादिरनया शम्या । लांगलस्य दंड ईषा स्यात् । "ईशा" । प्रभुशंकरयोरीशः स्त्रियां लांगलदंडक इति तालव्यांते रुद्रभसौ । ईशः स्वामिनि रुद्रे च स्यादीशा हलदंडक इति शांतेषु विश्वः । एकं इसाड इति ख्यातस्य । लांगलपद्धतिः, हलराचितारेखा सीता स्यात् । "शीता । शीता नभःसरिति लांगलपद्धतौ च शीता दशाननरिपोः सहधर्मिणी च । शीतं स्मृतं हिमगुणे च तदन्विते च शीतोऽलसे च बहुवाररतौ च दृष्ट इति तालव्यादौ धरणिः । एकं नांगराचें तास

पुंसि मेधिः खलेदारु न्यस्तं यत्पशुबंधने ॥
आशुर्व्रीहिः पाटलः स्याच्छितशूकयवौ समौ ॥ १५ ॥
तोक्मस्तु तत्र हरिते कलायस्तु सतीनकः ॥
हरेणुरेणुकौ चास्मिन्कोरदूषस्तु कोद्रवः ॥ १६ ॥
मंगल्यको मसूरोऽथ मकुष्टकमयुष्टकौ ॥
वनमुद्गे सर्षपे तु द्वौ तंतुभकदंबकौ ॥ १७ ॥

इति ख्यातस्य" ॥ १४ ॥ पशुबंधने वृषादिबंधननिमित्ते यत्काष्ठं न्यस्तं निखातं तत्र मेधिः "मेथिरित्यपि" खलेदारु इति द्वे "मेढ इति ख्यातस्य।" खलेदार्विति हलदंतादिति सप्तम्या अलुक् । यद्वा खले धान्यमर्दनस्थले यद्दारु इति पृथक्पदं वा । आशुः व्रीहिः पाटलः "पाटलिरित्यपि । पाटलो वर्णोऽस्यास्तीति" त्रयं व्रीहेः । "पाटलो व्रीहिपाटल उच्यते इति नामद्वयमिति सुभूतिः ।" तत्र आशु क्लीबे "पुंस्यपि । आशुस्तु व्रीहिशीघ्रयोरिति हेमचंद्रः । आशुव्रीहिरित्येकं पदमिति सुभूतिः । अशुव्रीहौ पाटलो ना श्वेतरक्तेऽन्यलिंगवानिति रुद्रोऽपि" । व्रीह्यादिः पुंसि । धान्यमात्रेऽपि व्रीहिं वक्ष्यंति । शितशूकः यवः द्वे जव इति ख्यातस्य । "शितशूको द्वितालव्यः । मध्यतालव्योऽपि" ॥ १५ ॥ तत्र यवे हरिते हरिद्वर्णे तोक्म इत्येकं "निःशूकयवस्य ।" कलायः सतीनकः । "सातीनक इति माधवः । मञ्जाद्यण् । सतीलक इति मेदिनी ।" हरेणुः रेणुकः चत्वारि "वाटाणा इति ख्यातस्य ।" कोरदूषः कोद्रवः "काद्रव इत्यपि" द्वे हरीक इति ख्यातस्य ॥ १६ ॥ मंगल्यकः मसूरः । "मसुरा मसूरा । वेश्यायां व्रीहिभेदे च मसूरा मसुरा स्त्रियाम् । मसूरमसुरौ पुंसि द्वावेतावपि चैतयोरिति रभसः। मसूरा मसुरा वा ना वेश्याव्रीहिप्रभेदयोरिति मेदिनी च । द्वे मसूर इति ख्यातस्य ।" मकुष्टकः "मकूष्ठकः मुकुष्ठकः । विश्वमेदिन्योस्तु मुकुष्ठो व्रीहिभेदे नेति टवर्गद्वितीयांतः ।" मयुष्ठकः "मयष्ठकः । मपष्ठकः । मपष्ठोऽपि मपुष्ठकः मपुष्ठोऽप्यन्यत्र ।" वनमुद्गः "त्रीणि मठ, मटकी इति ख्यातस्य ।" सर्षपः तंतुभः तुंतुभोऽपि ।" कदंबकः त्रयं सांसव "शिरस" इति ख्यातस्य । " सर्षपः स्यात्सरिषप इति त्रिकांडशेषः" ॥ १७ ॥ एष सर्षपो धवलः शुभ्रश्वेतसिद्धार्थ इत्येकम् । गोधूमः

१ आशुनामा व्रीहिः पाटल उच्यते इति नामद्वयम्-इति सुभूतिः-इति रामाश्रम्याम् ॥

सिद्धार्थस्त्वेष धवलो गोधूमः सुमनः समौ ॥
स्याद्यावकस्तु कुल्माषश्चणको हरिमंथकः ॥ १८ ॥
द्वौ तिले तिलपेजश्च तिलपिंजश्च निष्फले ॥
क्षवः क्षुताऽभिजननो राजिका कृष्णिकाऽऽसुरी ॥१९॥
स्त्रियौ कंगुप्रियंगू द्वे अतसी स्यादुमा क्षुमा ॥
मातुलानी तु भंगाया व्रीहिभेदस्त्वणुः पुमान् ॥२०॥
किंशारुः सस्यशूकं स्यात्कणिशं सस्यमंजरी ॥
धान्यं व्रीहिः स्तंबकरिः स्तंबो गुच्छस्तृणादिनः॥२१॥

सुमनः द्वे गहूं इति ख्यातस्य । सुमनोऽदंतः । यावकः कुल्माषः "कुल्मास इति दंसांतः" द्वे अर्धस्विन्नस्य यवादेः । "अर्धशिजे यवादिक घुगऱ्या इति ख्यातस्य" । धान्यभेदस्येत्येके । "शूकशून्ययवादेरित्यन्ये" । चणकः हरिमंथकः हरिमंथज इत्यपि "द्वे हरबरा इति ख्यातस्य" ॥ १८ ॥ तिलपेजः तिलपिंजः । तिलान्निष्फलात्पिंजपेजाविति वार्तिकेणेमौ साधू । द्वे निष्फले तिले "वांझे तीळ रानतीळ इति ख्याते । जर्तिल इत्यप्यस्य नाम । जर्तिलः कथ्यते सद्भिररण्यप्रभवस्तिल इत्युक्तेः" । क्षवः क्षुताभिजननः राजिका कृष्णिका आसुरी पंच राजसर्षपाख्यस्य कृष्णसर्षपस्य "मोहरी, राई इति ख्यातस्य"। क्षुतमभिजायतेऽनेनेति क्षुताभिजननः । "क्षुधाभिजनन इत्यपि । तत्र क्षुधामभिजनयतीति विग्रहः" ॥ १९ ॥ कंगुः "कंगूरित्यपि" प्रियंगुः द्वे कांग, "राळे" इति ख्यातस्य । अतसी उमा क्षुमा त्रयं जवस इति ख्यातस्य धान्यभेदस्य । मातुलानी भंगा द्वे भांग, तागाचें बीं इति च ख्यातस्य । "तरंगभेदयोर्भंगो भंगा सस्यशणाह्वय इति रुद्रः" । व्रीहिभेदः अणुः स्यात् एकम् ॥ २० ॥ सस्यस्य शूकं सूक्ष्मं सूचितुल्यमग्रं किंशारुः स्यादेकं पुंसि "कूंस इति ख्यातस्य" । सस्यस्य मंजरी निर्गतनूतनशिरः कणिशं एकम् । कणाः संत्यस्य कणिशम् । "कणिशो धान्यशीर्षक इति तालव्यांते रत्नकोशः । मूर्द्धन्यांतोऽपि" । धान्यं व्रीहिः स्तंबकरिः त्रयं व्रीहियवादेः । स्तंबकरिरिदंतः पुंसि । तृणयवादेर्गुच्छो नालादिपुंजः स्तंबः स्यात् एकं "थोंब इति प्रसिद्धस्य" ॥ २१ ॥ अस्य गुच्छस्य यः कांडः स नाडी नालं च स्यात् द्वे ।

नाडी नालं च कांडोऽस्य पलालोऽस्त्री स निष्फलः ॥
कडंगरो बुसं क्लीबे धान्यत्वचि तुषः पुमान् ॥ २२ ॥
शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे शमी शिंबा त्रिषूत्तरे ॥
ऋद्धमावसितं धान्यं पूतं तु बहुलीकृतम् ॥ २३ ॥
माषादयः शमीधान्ये शूकधान्ये यवादयः ॥
शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी ॥ २४ ॥
तृणधान्यानि नीवाराः स्त्री गवेधुर्गवेधुका ॥

स कांडो गृहीतफलत्वान्निष्फलः पलालः स्यात् एकं "सरम, कडबा, बाटूक इति ख्यातस्य । क्लीबे पलालम्" । कडंगरः "करंकर इति हरदत्त-पाठः" । बुसं "बुषत्रेषतुषारतोषा इति षभेदान्मूर्धन्यांतमपि" द्वे पलाला-दिक्षोदस्य भूस इति ख्यातस्य । तुष इत्येकं व्रीह्यादेस्त्वचि "कोंडा" इति ख्यातायाम् ॥ २२ ॥ श्लक्ष्णं कृशं तीक्ष्णं निशितं एतादृशं यदग्रं यवादेस्तत्र शूक इत्येकम् । "क्लीबे शूकम् ।" शमी शिंबा "शिंबिः शिंबी चेत्यपि दंत्यादिर्वा" द्वे शेंग इति प्रसिद्धस्य माषादिफलस्य । उत्तरे ऋद्धादयश्च-त्वारो वाच्यलिंगाः । ऋद्धं आवसितं "अत्रसितम् । अवसितमृद्धे ज्ञानेऽपीति विश्वः । द्वे अपनीततृणस्य राशीकृतस्य धान्यस्य । पूतं बहुलीकृतं द्वे अप-नीतबुसस्य धान्यस्य । शूर्पादिना शोधितस्येत्येके ॥ २३ ॥ शमीप्रभवं धान्यं तत्र माषमुद्गादयो भेदाः । "यदुक्तं रत्नकोशे । मुद्गो माषो राजमाषः कुलि-त्थश्चणकस्तिलः । कलायस्तूवर इति शमीधान्यगणः स्मृत इति" एकम् । शूकसहितं धान्यं शूकधान्यं तत्र यवगोधूमादयो ज्ञेयाः एकम् । बृहन्नालो बहुलजलोत्पन्नो व्रीहिविशेषः कलमः । एतदपेक्षया किंचिदपकृष्टः षष्टिरात्रेण पच्यमानः षष्टिकः । आदिशब्दाद्रक्तादिराजशाल्यादयः एते शालयः स्युः एकम् । अमी माषयवशालिकलमषष्टिकाद्याः पुंसि ॥ २४ ॥ नीवारो मुन्य-न्नभेदः नेर "देवभात" इति प्रसिद्धः । बहुवचनात् श्यामाकादयो गृह्यंते । एते तृणधान्यानि स्युः एकम् । गवेधुः "गवेडुरित्यपि" गवेधुका द्वे मुन्य-न्नविशेषस्य "कसईचें बीं इति प्रसिद्धस्य । इदं कसाड, कसा इति कोंकणे प्रसिद्धम् । गवा जलेन तत्र वा एधते । एध वृद्धौ" । अयोग्रं मुसलः "द्वे

अयोग्रं मुसलोऽस्त्री स्यादुदूखलमुलूखलम् ॥ २५ ॥
प्रस्फोटनं शूर्पमस्त्री चालनी तितउः पुमान् ॥
स्यूतप्रसेवौ कंडोलपिटौ कटकिलिंजकौ ॥ २६ ॥
समानौ रसवत्यां तु पाकस्थानमहानसे ॥
पौरोगवस्तदध्यक्षः सूपकारास्तु बल्लवाः ॥ २७ ॥
आरालिका आंधसिकाः सूदा औदनिका गुणाः ॥
आपूपिकः कांदविको भक्ष्यंकार इमे त्रिषु ॥ २८ ॥

मुसळ इति ख्यातस्य । क्लीबे मुसलम् "। उदूखलं उलूखलं द्वे उलूखल "उखळ इति प्रसिद्धस्य" ॥२५॥ प्रस्फोटनं शूर्प "सूर्पमिति दंत्यादिरपि" द्वे "सूप इति ख्यातस्य"। चालनी तितउः द्वे "चाळण इति प्रसिद्धस्य"। क्षुद्रच्छिद्रशतोपेतं चालनं तितउः स्मृत इति कात्यः । "चालनं तितउ प्रोक्तमिति क्लीबकांडे रत्नकोशः । न स्त्री तितउ चालनीति त्रिकांडशेषः"। तनोति सारं तितउः तनोतेर्डउः सन्वच्चेति । स्यूतः प्रसेवः द्वे धान्यादिभरणार्थं कृतस्य वस्त्रभांडस्य पिशवी "गोणी, थैली इति ख्यातस्य ।" सीव्यते स्म स्यूतः । "स्योनप्रसेवावित्यपि पाठः । स्योनस्यूतप्रसेवकाविति रभसः।" कंडोलः पिटः "पिड इत्यपि । पिंडो बोले बले सांद्रे देहागारैकदेशयोः । देहमात्रे निवापे च गोलसिह्लकयोरपीति मेदिनी ।" द्वे वेणुदलादिरचितभांडस्य "पाटी, कणिग इत्यादिख्यातस्य ।" कटः किलिंजकः द्वे वंशादिविकारस्य "करंडा इत्यादिख्यातस्य ।" कटत्यावृणोतीति कटः ॥ २६ ॥ समानाविति स्यूतादिभिर्युगलैः संबध्यते । रसवती पाकस्थानं महानसं त्रीणि पाकस्थानस्य "पाकघर, पाकशाला इति ख्यातस्य । तस्य पाकस्थानस्याध्यक्षः अधिकृतः पौरोगवः स्यात् एकं "वांकनीस इति ख्यातस्य। पुरः पूजिता गौर्भूमिः पुरोगवी तस्येदमित्यण् । पौरोगवः" सूपकारः बल्लवः ॥ २७ ॥ आरालिकः आंधसिकः । अंधः ओदनं शिल्पं येषां ते । ठक् । सूदः औदनिकः गुणः सप्त पाककर्तुः "आचारी इति ख्यातस्य । आद्यं द्वयं व्यंजनकारस्येति क्षीरस्वामी । आपूपिकः कांदविकः भक्ष्यकारः "भक्ष्यंकारः भक्षकार इत्यपि" त्रीणि भक्ष्यकारस्य । भक्ष्यं तैलपक्वादि । इमे पौरोगवाद्याः वाच्यलिंगाः ॥ २८ ॥ अश्मंतं उद्धानं "उध्मानमित्यपि"

अश्मंतमुद्धानमधिश्रयणी चुल्लिरंतिका ॥
अंगारधानिकाऽगारशकट्यपि हसंत्यपि ॥ २९ ॥
हसन्यप्यथ न स्त्री स्यादंगारोऽलातमुल्मुकम् ॥
क्लीबेंऽबरीषं भ्राष्ट्रो ना कंदुर्वा स्वेदनी स्त्रियाम् ॥३०॥
अलंजरः स्यान्माणिकः कर्कर्यालुर्गलंतिका ॥
पिठरः स्थाल्युखा कुंडं कलशस्तु त्रिषु द्वयोः ॥३१॥
घटः कुटनिपावस्त्री शरावो वर्धमानकः ॥

उत् ध्मायते । ल्युट् । "उद्धारमित्यपि ।" अधिश्रयणी चुल्लिः "चुल्लीत्यपि" अंतिका । "अंदिकेत्यपि । अंद्यतेऽत्र । अति अदि बंधने । ण्वुल् ।" पंच चुल्लेः "चूल इति ख्यातायाः । अश्मनोऽप्यंतोऽत्राश्मंतः ।" श्रीञ् पाके । अधिश्रियेतास्यां अधिश्रयणी । अंगारधानिका अंगारशकटी हसंती ॥ २९ ॥ हसनी चतुष्कमंगारशकट्याः आगटी, "शेगडी" इति ख्यातायाः । अंगारः अलातं उल्मुकं त्रीणि प्रज्वलत्काष्ठस्य । "आद्यमेकं निखारा इति ख्यातस्य । अग्रिमद्वयं कोलीत इति ख्यातस्येत्यपि मतम् । अंगारमुल्मुके न स्त्री पुंलिंगस्तु महीसुत इति विश्वः" ॥ अंबरीषं भ्राष्ट्रः द्वे चणकादिभर्जनपात्रस्य "खापर, रान्हे इति ख्यातस्य ।" भृज्यतेऽस्मिन् भ्राष्ट्रः । कंदुः स्वेदनी द्वे मद्यनिर्माणोपयोगिनो भाटीति प्रसिद्धपात्रस्य । कंदुर्वा ना विकल्पेन पुमान् पक्षे स्त्री ॥ ३० ॥ अलंजरः "आलिंजर इत्यपि" मणिकः द्वे महाकुंभस्य "माठ, डेरा इति ख्यातस्य ।" कर्करी आलुः "आलूरित्यपि" गलंतिका त्रयं तंडुलादिप्रक्षालनोपयोगिन्याः गलंतिकायाः "गळती इति ख्याताया वा, रोवळी इति लौकिकप्रसिद्धिः । अथवा झारी इत्यपि प्रसिद्धायाः" गलत्यंभोऽस्या गलंतिका । पिठरः स्थाली उखा "उषेत्यपि" कुंडं चत्वारि स्थाल्याः । "पिठरः स्थाल्यां न क्लीबमिति मेदिनी । स्थालं भाजनभेदेऽपि स्थाली स्यात्पाटलोखयोरिति मेदिनी । कुंडी कमंडलौ जारात्पतिवत्नीसुते पुमान् । पिठरे तु न नेति विश्वमेदिन्यौ ।" कलशः । "दंत्यांतोऽपि । केन जलेन लसति कलसः" ॥ ३१ ॥ घटः कुटः निपः चत्वारि कलशस्य । कलशं कलशी । द्वयोरिति घटेन संबध्यते । घटी । अस्त्रीति शरावेण संबध्यते । शरावः "सराव इति दंत्यादिरपि" वर्धमानकः द्वे पात्रभेदस्य "मालटी

ऋजीषं पिष्टपचनं कंसोऽस्त्री पानभाजनम् ॥ ३२ ॥
कुतूः कृत्तेः स्नेहपात्रं सैवाल्पा कुतुपः पुमान् ॥
सर्वमावपनं भांडं पात्रामत्रं च भाजनम् ॥ ३३ ॥
दर्विः कंबिः खजाका च स्यात्तर्दूर्दारुहस्तकः ॥
अस्त्री शाकं हरितकं शिग्रुरस्य तु नाडिका ॥ ३४ ॥
कलंबश्च कडंबश्च वेषवार उपस्करः ॥
तिंतिडीकं च चुक्रं च वृक्षाम्लमथ वेल्लजम् ॥ ३५ ॥

इति प्रसिद्धस्य ।" ऋजीषं "ऋचीषमित्यपि ।" ऋच शब्दे । बाहुलकात्कीषच् । पिष्टपचनं द्वे पिष्टपाकोपयोगिनः पात्रस्य ".तवा, कढई इति ख्यातस्य ।" कंसः पानभाजनं "द्वे क्षीरादिपानपात्रस्य" ॥ ३२ ॥ कृत्तेश्चर्मणः स्नेहपात्रं तैलाद्याधारपात्रं कुतूः स्यात् एकं "बुधला इति ख्यातस्य ।" स्त्रियाम् । सैव कुतूरल्पा ह्रस्वा चेत्कुतुपः । कुत्वा डुपच् । बुधली डपकी इति लौकिकभाषायाम् । सर्वं "स्यूतादि पिठरादि च" पात्रमात्रं आवपनादिसंज्ञम् । आवपनं भांडं पात्रं अमत्रं भाजनं पंच "भांडें आयधण इति ख्यातस्य । पिबत्यनेन पात्रम्" ॥ ३३ ॥ दर्विः "दर्वी" कंबिः "कंबी" खजाका त्रयं स्त्रियां दर्व्याः "पळी इति ख्यातायाः ।" खजति मथ्नाति पाकं खजाका । तर्दूः दारुहस्तकः द्वे दर्वीभेदस्य "डवली इति ख्यातस्य । दारुणो हस्तको दारुहस्तकः" । तर्दूः पुंसि । अयं परिवेषणाद्युपयोगी । शाकं हरितकं शिग्रुः त्रयं वास्तुकादेः शाकस्य । शक्यते भोक्तुमनेन शाकम् । शिग्रुः पुंसि । सौभांजनेऽपि शिग्रुरुक्तः । अस्य शाकस्य नाडिका नालम् ॥ ३४ ॥ कलंबः कडंब इति च स्यात् द्वे "देंट इति ख्यातस्य" । वेषवारः "वेसवारः वेशवार इत्यपि" उपस्करः द्वे शाकादिसंस्कारार्थं रचितहरिद्रासर्षपमरीचादिचूर्णस्य । "आत्रेयसंहितायामुक्तम् । चित्रकं पिप्पलीमूलं पिप्पली चव्यनागरम् । धान्याकं रजनीश्वेततंडुलाश्च समांशकाः । वेसवार इति ख्यातः शाकादिषु नियोजयेदिति" "दश पलानि हरिद्रायाः । विंशतिपलानि धान्याकस्य । पंच पलानि शुद्धजीरकस्य । सार्द्धद्वयपलं मेथिकायाः । एतच्चतुष्टयं भर्जितमेव ग्राह्यम् । त्रीणि पलानि मरीचस्य । अर्द्धपलं हिंगोः ।

मरीचं कोलकं कृष्णमूषणं धर्मपत्तनम् ॥
जीरको जरणोऽजाजी कणा कृष्णे तु जीरके ॥३६॥
सुषवी कारवी पृथ्वी पृथुः कालोपकुंचिका ॥
आर्द्रकं शृंगबेरं स्यादथ छत्रा वितुन्नकम् ॥ ३७ ॥
कुस्तुंबरु च धान्याकमथ शुंठी महौषधम् ॥
स्त्रीनपुंसकयोर्विश्वं नागरं विश्वभेषजम् ॥ ३८ ॥
आरनालकसौवीरकुल्माषाभिषुतानि च ॥
अवंतिसोमधान्याम्लकुंजलानि च कांजिके ॥ ३९ ॥

एतत्सर्वमेकत्र संयोज्य संमर्दितं वेसवार इत्यन्ये"। तिंतिडीकं "तितिडीकमित्यपि" चुक्रं वृक्षाम्लं त्रयं तिंतिडीकस्याम्लभेदस्य "आमसोल इति ख्यातस्य"। वेल्लजम् ॥ ३५ ॥ मरीचं "मरिचमित्यपि" कोलकं कृष्णं ऊषणं धर्मपत्तनं षट्कं मरीचस्य मिरिं इति ख्यातस्य । ऊषणं दीर्घाद्यम् । "ह्रस्वाद्यपि । उषणं मरिचे क्लीबमिति मेदिनी"। जीरकः जरणः अजाजी कणा चत्वारि जीरकस्य । अजाजी स्त्री ॥ ३६ ॥ सुषवी कारवी पृथ्वी पृथुः काला उपकुंचिका षट्कं कृष्णवर्णे जीरके "काळें जिरें, काळेरें इति ख्याते ।" आर्द्रकं शृंगबेरं द्वे आर्द्रकस्य । शुंठ्याः पूर्वरूपमिदम् । "आलें इति ख्यातम् ।" छत्रा वितुन्नकम् ॥ ३७ ॥ कुस्तुंबरु "कुस्तुंबरीति भरतमालायाम् ।" धान्याकं "धन्याकम् । ह्रस्वादीति मुकुटः । धन्याकं धान्यकं धन्यं कुस्तुंबुरु धनीयकमिति रभसः । धनेयकमित्यपि" चत्वारि कोथिंबिरि "धणे" इति ख्यातस्य ।" शुंठी "शुंठिरिति ह्रस्वांतोऽपि । सधन्याशुंठिसैंधवमिति वैद्यकम् ।" महौषधं विश्वं नागरं विश्वभेषजं पंच शुंठ्याः । स्त्रियां तु विश्वा । "विश्वस्य दोषस्य भेषजम् ॥ ३८ ॥ आरनालकं सौवीरं कुल्माषाभिषुतं अवंतिसोमं धान्याम्लं कुंजलं कांजिकं सप्तकं कांजिकस्य । कुल्माषैरर्धस्विन्नैर्यवादिभिरभिषूयते स्म कुल्मषाभिषुतम् । कुल्माषमिति पृथग्वा । कुल्माषं कांजिकेऽपि चेति विश्वः । "कुल्‍ अर्धस्विन्नः माषोऽस्मिन्कुल्माषः ।" अवंत्या सूयते अवंतिसोमम् । आह च "धन्वंतरिः ।" कांचिकं कांजिकं वीरं कुल्माषाभिषुतं तथा । अवंतिसोमं धान्याम्लमारनालं महारसम् ।

सहस्रवेधि जतुकं बाह्लीकं हिंगु रामठम् ॥
तत्पत्री कारवी पृथ्वी वाष्पिका कबरी पृथुः ॥४०॥
निशाख्या कांचनी पीता हरिद्रा वरवर्णिनी ॥
सामुद्रं यत्तु लवणमक्षीवं वशिरं च तत् ॥ ४१ ॥
सैंधवोऽस्त्री शीतशिवं माणिमंथं च सिंधुजे ॥
रौमकं वसुकं पाक्यं बिडं च कृतके द्वयम् ॥ ४२ ॥
सौवर्चलेऽक्षरुचके तिलकं तत्र मेचके ।

सौवीरं च सुवीराम्लं तथा चुक्रं तुषोदकमिति ॥ ३९ ॥ सहस्रवेधि जतुकं बाह्लीकं "बाह्लिकं" हिंगु रामठं पंच हिंगुवृक्षस्य निर्यासे । सहस्रं विध्यति गंधेन सहस्रवेधि । इन्नंतं क्लीबे । तस्य हिंगुनः पत्री तत्पत्री । "त्वक्पत्री । तत्पत्री त्वचमाख्यातं त्वक्पत्री कारवीति चेति रुद्रः । त्वक्पत्रीति च कारव्यामिति हैमः।" कारवी पृथ्वी बाष्पिका "बाष्पीकेत्यपि पाठः" कबरी पृथुः पंचकं हिंगुतरोः पत्र्यामित्यर्थः ॥४०॥ निशा कांचनी पीता हरिद्रा वरवर्णिनी पंच हरिद्रायाः । निशाख्या निशापर्यायवाच्येत्यर्थः । तेन रजनी रात्रिरित्याद्यपि । निशाह्वेति क्वचित्पाठः । यत्सामुद्रं समुद्रभवं लवणं तत् अक्षीवं "अक्षिवमित्यपि" वशिरं "वसिरमित्यपि" द्वे ॥ ४१ ॥ सैंधवः शीतशिवं "सित-शिवं सितं शुभ्रं च तच्छिवं च" माणिमंथं सिंधुजं चत्वारि सिंधुजे लवणे "शेंदेलोण इति ख्याते" । सिंधुदेशे भवं सैंधवम् । मणिमंथपर्वते भवं माणिमंथम् । मणिबंधमित्यपि पाठः । रौमकं वसुकम् । "वसूकमिति हेमचंद्रः । वस्तकम् । वस्त इव वस्तकम् अजगंधित्वात् । रौमके वस्तकं बस्त्विति नाममाला ।" द्वे शांभरलवणस्य । शांभरिदेशे रुमानामको लवणाकरः तत्र भवं रौमकम् । "सांभरलोण इति ख्यातम् । पाक्यं बिडं द्वयं द्वे नामनी कृतके कृत्रिमे लवणे "बिडलोण इति ख्याते ।" पाके साधु पाक्यम् । क्षारमृत्तिकां हि पाचयित्वा लवणं कुर्वंति ॥४२॥ सौवर्चलः अक्षं रुचकं त्रीणि मधुरलवणस्य लवणभेदस्य । हृद्यगंधमेतत् "संचळखार इति ख्यातम् ।" तत्र सौवर्चले मेचके कृष्णवर्णे तिलकमित्येकम् । यद्वैधाः । कृष्णसौवर्चलगुणा लवणे गंधवर्जित इति । मत्स्यंडी फाणितं "द्वे राब काकबी इति ख्यातस्य ।"

मत्स्यंडी फाणितं खंडविकारः शर्करा सिता ॥ ४३ ॥
कूर्चिका क्षीरविकृतिः स्याद्रसाला तु मार्जिता ॥
स्यात्तेमनं तु निष्ठानं त्रिलिंगा वासितावधेः ॥ ४४ ॥
शूलाकृतं भटित्रं स्याच्छूल्यमुख्यं तु पैठरम् ॥
प्रणीतमुपसंपन्नं प्रयस्तं स्यात्सुसंस्कृतम् ॥ ४५ ॥
स्यात्पिच्छिलं तु विजिलं संमृष्टं शोधितं समे ॥
चिक्कणं मसृणं स्निग्धं तुल्ये भावितवासिते ॥ ४६ ॥

खंडविकारः शर्करा सिता त्रीणि शर्करायाः "खडी साकर, पिठी साकर इति भेदभिन्नायाः।" पंचापि शर्कराया इत्येके ॥ ४३ ॥ दध्यादिना क्षीरस्य विकृतिः कूर्चिका। यदाहुः। दध्ना सह पयः पक्वं यत्तत्स्याद्दधिकूर्चिका। तक्रेण पक्वं यत्क्षीरं सा भवेत्तक्रकूर्चिकेति। एकम्। रसाला मार्जिता द्वे दधिमधुशर्करामरीचाद्र्यादिभिः कृतस्य लेह्यस्य "श्रीखंड इति ख्यातस्य। यदुक्तं सूपशास्त्रे। अर्धाढकः सुचिरपर्युषितस्य दध्नः खंडस्य षोडश पलानि शशिप्रभस्य। सर्पिष्पलं मधु पलं मरिचं द्विकर्षं शुंठ्याः पलार्धमपि चार्धपलं चतुर्णाम्। सूक्ष्मे पटे ललनया मृदुपाणिघृष्टा कर्पूरधूलिसुरभीकृतपात्रसंस्था। एषा वृकोदरकृता सरसा रसाला या स्वादिता भगवता मधुसूदनेनेति।" तेमनं निष्ठानं द्वे व्यंजनस्य दध्यादेः "कढी इति ख्यातस्य।" तिमत्यार्द्रीभवत्यन्नमनेन तेमनम्। सूपाद्यपि तेमनमुपचारात्। इतः परं वासितांता वाच्यलिंगाः ॥४४॥ शूलाकृतं भटित्रं शूल्यं त्रयं शूलेन संस्कृतस्य मांसादेः। शूलेन पक्वं शूलाकृतम्। शूलात्पाक इति डाच्। शूलं लोहशलाका। उख्यं पैठरं द्वे स्थालीसंस्कृतस्यान्नादेः। प्रणीतं उपसंपन्नं द्वे रसादिसंपन्नस्य व्यंजनादेः। प्रयस्तं सुसंस्कृतं द्वे प्रयत्ननिष्पन्नस्य घृतपक्वादेः ॥ ४५ ॥ पिच्छिलं विजिलं विज्जलं "विज्जनं चेत्यपि" द्वे मंडयुक्तदध्यादेः "साई सुद्धां दहीं मह्य इति ख्यातस्य।" संमृष्टं शोधितं द्वे केशकीटाद्यपनयनेन शोधितस्यान्नादेः। चिक्कणं मसृणं स्निग्धं त्रीणि स्निग्धस्य। चिमिति अव्यक्तं कणति चिक्कणम्। कण शब्दे। भावितं वासितं द्वे पुष्पादिद्रव्यांतरेणाधिवासितस्य। यथा धूपेन भाविताास्तिलाः। वास्यते द्रव्यांतरेण मिश्रीक्रियते धूप-

आपक्कं पौलिरभ्यूषो लाजाः पुंभूम्नि चाक्षताः ॥
पृथुकः स्याच्चिपिटको धाना भ्रष्टयवे स्त्रियः ॥४७॥
पूपोऽपूपः पिष्टकः स्यात्करंभो दधिसक्तवः ॥
भिःसा स्त्री भक्तमंधोऽन्नमोदनोऽस्त्री सदीदिविः ॥४८॥
भिःसटा दग्धिका सर्वरसाग्रे मंडमस्त्रियाम् ॥
मासराचामनिस्रावा मंडे भक्तसमुद्भवे ॥ ४९ ॥
यवागूरुष्णिका श्राणा विलेपी तरला च सा ॥

पुष्पादिना वाऽधिवास्यते वासितमिति स्वामी । धूपितं वासितं विदुरिति मुनिः ॥ ४६ ॥ आपक्कम् ईषत् पक्कम् । आङ् ईषदर्थेऽत्र । पौलिः अभ्यूषः "अभ्युषः अभ्योषश्चापि ।" त्रयं "अर्द्धस्विन्नयवादेर्घृतादिना भर्जितयवादेर्वा घृतपक्कान्नस्य पोळी इत्यादिप्रसिद्धस्य ।" लाजाः भर्जितव्रीहयः । पुंभूम्नि पुंसि बहुत्वे च । एवमक्षता अपि पुंभूम्नि । अक्षता यवा इति पुराणम् । एकैकस्याभिधानं पुंबहुत्वविधानार्थम् । "लाजः स्यादार्द्रतंडुले । नपुंसकमुशीरेऽथ स्त्रियां पुंभूम्नि चाक्षता इति मेदिनी । अक्षतं न द्वयोः पंढे लाजेषु त्रिष्वहिंसिते । यवेऽपि क्वचिदिति मेदिनी ।" पृथुकः चिपिटकः द्वे आर्द्रभ्रष्टव्रीहितंडुलस्य "पोहे इति प्रसिद्धस्य ।" धाना इत्येकं भ्रष्टयवे वर्तते । नित्यं स्त्रियां बहुत्वे च ॥ ४७ ॥ पूपः अपूपः पिष्टकः त्रीणि तंडुलपिष्टरचितस्य भक्ष्यभेदस्य "वडा, घारगा इत्यादिख्यातस्य ।" अपूपः पिष्टपूपः स्यादिति मुनिः । यच्छ्लक्ष्यम् । चंद्रांशुनिर्मलाः पूपाः शालितंडुलनिर्मिता इति । दधियुक्ताः सक्तवो दधिसक्तवः करंभः स्यात् । "करंब इत्यपि । केन जलेन रंबते । रबि शब्दे । एकम् । सक्तवस्तु धानाचूर्णम् ते च प्रायेण पुंभूम्नि । भिःसा भक्तं अंधः अन्नं ओदनः दीदिविः षट्कमन्नस्य । अंधः सांतम् । ओदनोऽस्त्री । दीदिविः पुंसि ॥ ४८ ॥ भिःसटा दग्धिका द्वे दग्धान्नस्य "करप इति ख्यातस्य" । सर्वेषां रसानां द्रवद्रव्याणां अग्रं अग्रिमो द्रवः मंडः स्यात् । "क्लीबे मंडम् । एकं निवळी इति ख्यातस्य ।" मासरः आचामः निस्रावः "विस्राव इति मुकुटः" त्रीणि भक्तसमुद्भवे मंडे नीस "पेज" इति ख्याते ॥ ४९ ॥ यवागूः उष्णिका श्राणा विलेपी तरला पंच द्रवदोदनस्य "आटवल, पातळ भात, कढेरी

("म्रक्षणाभ्यंजने तैलं कृसरस्तु तिलौदनः"॥)(१)
गव्यं त्रिषु गवां सर्वं गोविट् गोमयमस्त्रियाम्॥५० ॥
तत्तु शुष्कं करीषोऽस्त्री दुग्धं क्षीरं पयः समम् ॥
पयस्यमाज्यदध्यादि द्रप्सं दधि घनेतरत् ॥ ५१ ॥
घृतमाज्यं हविः सर्पिर्नवनीतं नवोद्धृतम् ॥
तत्तु हैयंगवीनं यत् ह्योगोदोहोद्भवं घृतम् ॥ ५२ ॥
दंडाहतं कालशेयमरिष्टमपि गोरसः ॥
तक्रं ह्युदश्विन्मथितं पादांब्वर्धांबु निर्जलम् ॥ ५३ ॥

इति ख्यातस्य।" यवागूर्दीर्घांता। "म्रक्षणेत्यर्धं क्षेपकम्। म्रक्षणं अभ्यंजनं द्वे तैलस्य। तिलमिश्र ओदनः कृसरः स्यादेकम्"। गवां सर्वं गोरिदं गवि भवं गोविकार इत्याद्यर्थेषु यत्क्षीरादि तद्गव्यं स्यात् एकम्। "त्रिषु। दधिदुग्धादेः"। गोविट् गोमयं द्वे गोः पुरीषे "शेण इति ख्याते"। गोविट् षांता स्त्री ॥ ५० ॥ तद्गोमयं शुष्कं करीषं स्यात् एकं "गोवरी इति ख्यातस्य"। दुग्धं क्षीरं पयः त्रीणि "दूध इति ख्यातस्य"। पयः सांतम्। पयसो विकारो यदाज्यदध्यादि तत्पयस्यम्। "आदिना तक्रं नवनीतम्"। यद्घनादितरत् श्लथं दधि तत् द्रप्सं स्यात्। "द्रप्स्यमिति भरतमालायाम्। द्रप्सः पुंस्यपि। एकं पातळ दहीं इति प्रसिद्धस्य" ॥ ५१ ॥ घृतं आज्यं हविः सर्पिः चत्वारि घृतस्य। हविषी सर्पिषी "हविः सर्पिषि होतव्ये इति हैमः"। अंजनीयमाज्यम्। आङ्पूर्वादंजेः संज्ञायां क्यप्। नवनीतं नवोद्धृतं द्वे "लोणी इति ख्यातस्य"। मथिताद्दध्नो नवं तत्कालमुद्धृतं ह्योगोदोहोद्भवं पूर्वदिनप्राप्तगोक्षीरघृतं हैयंगवीनं स्यात्। एकं "एकरात्रपर्युषिताद्दध्न उत्पन्नस्य घृतस्य"। ह्यः पूर्वदिने यो गोदोहस्तस्मादुद्भवो यस्य तत्। हैयंगवीनं संज्ञायाम्। ह्यो गोदोहस्य हियंगुरादेशः विकारार्थे खञ् च निपात्यते ॥ ५२ ॥ दंडाहतं कालशेयं अरिष्टम्। अरिष्टमशुभे तक्रे सूतिकागार आसवे। शुभे मरणचिह्ने चेति विश्वः। गोरसः चत्वारि दंडमंथितस्य गोरसमात्रस्य। तद्विशेषमाह। पादांबु चतुर्थांशमुदकं यत्र तद्दंडाहतं तक्रमित्युच्यते। अर्धांबु अर्धमुदकं यत्र गोरसे तदुदश्वित्। तांतम्। "उदकेन श्वयति वर्द्धते इति विग्रहः। टुओश्वि गतिवृद्धयोः।" निर्जलं जलरहितं दधिमंथन-

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

मंडं दधिभवं मस्तु पीयूषोऽभिनवं पयः ॥
अशनाया बुभुक्षा क्षुद्ग्रासस्तु कवलः पुमान् ॥ ५४ ॥
सपीतिः स्त्री तुल्यपानं सग्धिः स्त्री सहभोजनम् ॥
(उदन्या तु पिपासा तृट् तर्षो जग्धिस्तु भोजनम्॥५५॥)(१)
जेमनं लेह आहारो निघासो न्याद इत्यपि ॥
सौहित्यं तर्पणं तृप्तिः फेला भुक्तसमुज्झितम् ॥ ५६ ॥
कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् ॥
गोपे गोपालगोसंख्यगोधुगाभीरबल्लवाः ॥ ५७ ॥

मात्रेण मथितमित्युच्यते । एकैकम् ॥ ५३ ॥ दधिभवं मंडं अग्रिमं मस्तु स्यात् । एकम् क्लीबे । "दध्न उपरिभागस्य । वस्त्रनिस्रुतदधिजलस्येत्यपि मतम्" । अभिनवं पयः नवप्रसूतायाः गोः क्षीरं सप्तदिनावधि पीयूषः स्यात् । पीयूषं सप्तदिवसावधि क्षीरे तथाऽमृत इति विश्वमेदिन्यौ । "पेयूषमिति मुकुटः" तत्कथितं सत्पीयूषशब्दवाच्यमित्येके । एकम् । अशनाया बुभुक्षा क्षुत् त्रयं क्षुधः । क्षुत्स्त्री धकारांतः । "अशनस्य इच्छा अशनाया । क्षुधेत्यन्यत्र" । ग्रासः कवलः द्वे "घांस इति ख्यातस्य । कवलार्थक इत्यपि पाठः" ॥ ५४ ॥ सपीतिः तुल्यपानं द्वे सहपानस्य । सग्धिः सहभोजनं द्वे "सहभोजनस्य" तत्र सग्धिः स्त्री । उदन्या पिपासा तृट् तर्षः चत्वारि तृषः । तृट् षांता । तर्षः पुंसि । "तृषा लिप्सातृषोः स्त्रियामिति विश्वः" । जग्धिः भोजनम् ॥ ५५ ॥ जेमनं "जमनमिति द्विरूपकोशः" लेहः "लेपः । लेपस्तु लेपने । अशने च सुरायां चेति हेमचंद्रः ।" आहारः निघासः "निघस इत्यपि" न्यादः सप्त भोजनस्य । जग्धिः स्त्री । सौहित्यं तर्पणं तृप्तिः त्रीणि तृप्तेः । पूर्वं भुक्तं पश्चात्समुज्झितं भुक्तसमुज्झितं भुक्त्वोत्सृष्टमिति यावत् सा फेला स्यात् । फेलीरिति जटाधरः" एकम् ॥ ५६ ॥ कामं प्रकामं पर्याप्तं निकामं इष्टं यथेप्सितं षट्कं यथेप्सितस्य । क्रियाविशेषणान्येतानि । यथा कामं भुंक्ते स्म । गोपः गोपालः गोसंख्यः गोधुक् "गोदुहः । गोपगोदुहबल्लवा इति त्रिकांडशेषः ।" आभीरः "अभीर इत्यपि । अभि ईरयति ईर गत्यादौ ।" बल्लवः षट् गोपालस्य । गोदुहौ ॥ ५७ ॥ गोमहि-

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

गोमहिष्यादिकं पादबंधनं द्वौ गवीश्वरे ॥
गोमान्गोमी गोकुलं तु गोधनं स्याद्गवां व्रजे ॥५८॥
त्रिष्वाशितंगवीनं तद्गावो यत्राशिताः पुरा ॥
उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः ॥ ५९ ॥
अनड्वान्सौरभेयो गौरुक्ष्णां संहतिरौक्षकम् ॥
गव्या गोत्रा गवां वत्सधेन्वोर्वात्सकधैनुके ॥ ६० ॥
वृषो महान्महोक्षः स्याद्वृद्धोक्षस्तु जरद्गवः ॥
उत्पन्न उक्षा जातोक्षः सद्यो जातस्तु तर्णकः ॥ ६१ ॥
शकृत्करिस्तु वत्सः स्याद्दम्यवत्सतरौ समौ ॥

ष्यादिकं पादबंधनमित्युच्यते । पादेन पादे वा बंधनमस्येति । यादवं धनमित्येके पेठुः । तत्र, गवादि यादवं वित्तमिति कोशांतरप्रमाणम् । आदिना खराजाविकादेर्ग्रहणम् । गोमान् गोमी द्वौ शब्दौ गवीश्वरे गवां स्वामिनि । गोमंतौ । गोमिनौ । गोकुलं गोधनं द्वे गवां व्रजे गोसंबंधिसमूहे ॥ ५८ ॥ यत्र पुरा गाव आशिताः भोजिताः तत्स्थानं आशितंगवीनं एकम् । त्रिषु लिंगत्रये । उक्षा भद्रः बलीवर्दः "बरीवर्दः" ऋषभः वृषभः वृषः ॥ ५९ ॥ अनड्वान् । अनः शकटं वहतीति । अनः क्लीबं जले शोके मातृस्यंदनयोरपीति रभसः । सौरभेयः गौः नव वृषभस्य । उक्षाणौ । अनड्वाहौ । गावौ । "स्त्रियां अनड्वाही । आमनडुहः स्त्रियां वा । अनुडुहीत्यपि ।" उक्ष्णां वृषभाणां संहतिः समूह औक्षकं स्यात् एकम् । गवां संहतिः गव्या गोत्रा द्वे । वत्सानां संहतिर्वात्सकम् । धेनूनां संहतिर्धैनुकम् । एकैकं क्रमेण ॥ ६० ॥ महान्वृषो महोक्षः एकं "महावृषस्य । अचतुरेति साधुः । वृद्धोक्षः जरद्गवः द्वे वृद्धवृषभस्य । यन्मालायाम् । महोक्षः स्यादुक्षतरः स्कांधिकः स्कंधवाहकः । षोडन्वद्दशनो वत्सः कूटो भग्नविषाणक इति ।" उत्पन्नः बलीवर्दभावं प्राप्तः उक्षा जातोक्षः स्यात् एकम् । सद्यो जातो वृषस्तर्णकः स्यात् एकम् ॥ ६१ ॥ शकृत्करिः वत्सः द्वे । दम्यः वत्सतरः द्वे स्पष्टतारुण्यस्य । वत्सत्वं स्वल्पमस्य वत्सतरः । षंडता गोपतित्वं तद्योग्य आर्षभ्यः एकम् । षंडः "शंढ इत्यपि" गोपतिः इट्चरः "इत्वर इत्यपि" त्रीणि स्वेच्छाचारिणो

आर्षभ्यः षंडतायोग्यः षंडो गोपतिरिट्चरः ॥ ६२ ॥
स्कंधदेशे त्वस्य वहः सास्ना तु गलकंबलः ॥
स्यान्नस्तितस्तु नस्योतः प्रष्ठवाड् युगपार्श्वगः ॥ ६३ ॥
युगादीनां तु वोढारो युग्यप्रासंग्यशाकटाः ॥
खनति तेन तद्वोढाऽस्येदं हालिकसैरिकौ ॥ ६४ ॥
धूर्वहे धुर्यधौरेयधुरीणाः सधुरंधराः ॥
उभावेकधुरीणैकधुरावेकधुरावहे ॥ ६५ ॥
स तु सर्वधुरीणः स्याद्यो वै सर्वधुरावहः ॥
माहेयी सौरभेयी गौरुस्रा माता च शृंगिणी ॥ ६६ ॥

वृषभस्य पोळ इति ख्यातस्य । सनोति ददाति गर्भं षंडः । इषा इच्छया चरति इट्चरः ॥ ६२ ॥ अस्य वृषभस्य स्कंधदेशे वहः स्यात् एकं "खांदा इति ख्यातस्य ।" सास्ना गलकंबलः । द्वे गोः कंठे लंबमानस्य चर्मणः "सांकळी, कांबळ इति ख्यातस्य" । नस्तितः नस्योतः "नस्तोत इत्यपि पाठः" द्वे स्यूतनासिकस्य "वेसण्या बैल इति ख्यातस्य ।" नस्ये नासारंध्रे ऊतः रज्ज्वा प्रोतः नस्योतः । प्रष्ठवाट् "पष्ठवाडिति रेफरहितमिति स्वामी ।" युगपार्श्वगः द्वे दमनार्थं युग्येन सह स्कंधे बद्धकाष्ठस्य । युगस्य स्कंधकाष्ठस्य पार्श्वं गच्छतीति युगपार्श्वगः ॥ ६३ ॥ युगस्य वोढा युग्यः । वत्सानां दमनकाले स्कंधे काष्ठमासज्यते स प्रासंगः तस्य वोढा प्रासंग्यः "लोढण्या बैल इति ख्यातः ।" शकटस्य वोढा शाकटः एकैकम् । तेन खनतीत्याद्यर्थे हालिकः सैरिकश्च स्यात् । यथा हलेन खनति हालिकः । एवं हलस्य वोढा हलस्यायं वा हालिकः । एवं सीरेण खनति सीरस्य वोढा सीरस्यायं वा सैरिकः । सीरो हलस्य पर्यायः द्वे "नांगऱ्या बैल इति ख्यातस्य" ॥ ६४ ॥ धूर्वहः धुर्यः धौरेयः धुरीणः धुरंधरः । धुरंधरेण सहिताः सधुरंधराः एते पंच शब्दाः धुरंधरवृषभस्य वाचकाः । "धूर्वहशब्दो दीर्घादिः । र्वोरुपधाया इति दीर्घः" [ धुर्य इत्यत्र तु "न भकुर्छुराम्" इति दीर्घनिषेधः ] । एकधुरीणः एकधुरः एकधुरावहः त्रयं य एकामेव धुरं वहति तस्य ॥ ६५ ॥ यः सर्वामपि धुरं वहति स सर्वधुरीणः एकम् । माहेयी

अर्जुन्यघ्न्या रोहिणी स्यादुत्तमा गोषु नैचिकी ॥
वर्णादिभेदात्संज्ञाः स्युः शबलीधवलादयः ॥ ६७ ॥
द्विहायनी द्विवर्षा गौरेकाब्दा त्वेकहायनी ॥
चतुरब्दा चतुर्हायण्येवं त्र्यब्दा त्रिहायणी ॥ ६८ ॥
वशा वंध्याऽवतोका तु स्रवद्गर्भाऽथ संधिनी ॥
आक्रांता वृषभेणाथ वेहद्गर्भोपघातिनी ॥ ६९ ॥
काल्योपसर्या प्रजने प्रष्ठौही बालगर्भिणी ॥
स्यादचंडी तु सुकरा बहुसूतिः परेष्टुका ॥ ७० ॥

सौरभेयी गौः उस्रा माता शृंगिणी ॥ ६६ ॥ अर्जुनी अघ्न्या रोहिणी नवकं गवि । गावौ । मातरौ । या गोषु उत्तमा सा गौर्नैचिकीत्येकम् । "निचिकी । नैचकी गौरुत्तमा तु निचिकी सा प्रकीर्तितेति नाममाला । नीचिका नीचिकी चेति द्विरूपकोशः" नीचैश्चरति नैचिकी । वर्णावयवप्रमाणादीनां भेदात् शबलीधवलादयो गवां संज्ञाः । शबली चित्रवर्णा "शबलापि" धवला शुक्लवर्णा "धवल्यपि" । आदिना कपिला पाटलेत्यादि । अवयवभेदात् लंबकर्णा वक्रशृंगीत्यादि । "प्रमाणभेदात् दीर्घा खर्वा वामनीत्यादि ।" एकैकम् ॥६७॥ वयोभेदात्संज्ञाभेदमाह । द्विवर्षा द्वे वर्षे प्रमाणमस्याः सा गौर्द्विहायनी एकम् । एकाब्दा गौः एकहायनी एकम् । चतुरब्दा गौः चतुर्हायणी एकम् । त्रिवर्षा त्रिहायणी स्यात् एकम् । त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम् ॥ ६८ ॥ वशा वंध्या द्वे "वांझ इति ख्यातायाः ।" अवतोका "वतोकेत्यपि" स्रवद्गर्भा द्वे अकस्मात्पतितगर्भायाः । मृतवत्सा स्रवद्गर्भेति माला । वृषभेण मैथुनार्थे आक्रांता संधिनी । संधा गर्भाधानमस्त्यस्याः संधिनी वा एकम् । वृषोपगमनाद्गर्भोपघातिनी वेहदित्युच्यते एकम् । तांतं स्त्रियाम् । विहंति गर्भं वेहत् । वेहद्वृषोपगतेति भागुरिः ॥ ६९ ॥ प्रजने गर्भग्रहणे काल्या प्राप्तकाला सा गौरुपसर्या एकम् । बाला चासौ गर्भिणी च बालगर्भिणी सा प्रष्ठौही । "पष्ठौहीत्यपि पाठः । तत्र पृषोदरादित्वात् रलोपः" एकम् । अचंडी सुकारा द्वे अकोपनायाः । बहुसूतिः परेष्टुका द्वे बहुप्रसवायाः ॥ ७० ॥ चिरप्रसूता "बष्कयणी बष्कायिणीत्यपि । बष्कयस्तरुणवत्सः

चिरप्रसूता बष्कयणी धेनुः स्यान्नवसूतिका ॥
सुव्रता सुखसंदोह्या पीनोध्नी पीवरस्तनी ॥ ७१ ॥
द्रोणक्षीरा द्रोणदुग्धा धेनुष्या बंधके स्थिता ॥
समांसमीना सा यैव प्रतिवर्षं प्रसूयते ॥ ७२ ॥
ऊधस्तु क्लीबमापीनं समौ शिवककीलकौ ॥
न पुंसि दाम संदानं पशुरज्जुस्तु दामनी ॥ ७३ ॥
वैशाखमंथमंथानमंथानो मंथदंडके ॥
कुठरो दंडविष्कंभो मंथनी गर्गरी समे ॥ ७४ ॥

सोऽस्त्यस्याः । बष्कयस्त्वेकहायनो वत्स इति शाकटायनः ” द्वे दीर्घकालेन प्रसूतायाः । धेनुः नवसूतिका द्वे नूतनप्रसूतायाः । सुव्रता सुखसंदोह्या “ सुखसंदुह्येत्यपि ” द्वे सुशीलायाः “ निसकीन्न इति ख्यातायाः ” । पीनोध्नी पीवरस्तनी द्वे स्थूलस्तन्याः ॥ ७१ ॥ द्रोणक्षीरा द्रोणदुग्धा द्वे द्रोणपरिमितदुग्धदात्र्याम् । बंधकं आधिस्तत्र स्थिता ऋणशुद्धिपर्यंतं उत्तमर्णगृहे दोहनार्थं स्थापितेति यावत् सा धेनुष्या एकम् । बंधकं स्याद्विनिमय इति विश्वः । बंधकं आधिर्नाम गाहाण इति लौकिकभाषायाम् । या वर्षे वर्षे प्रसूयते सा समांसमीनेत्येकं पंचाक्षरम् ॥ ७२ ॥ ऊधः आपीनं द्वे गोस्तनस्य “ कांस इति ख्यातस्य । ” ऊधः सांतं क्लीबम् । शिवकः कीलकः द्वे गवां बंधनार्थं निखातस्य काष्ठस्य “ मेढ इति ख्यातस्य ” । दाम संदानं द्वे बंधनरज्जोः “ दावें इति ख्यातायाः । ” संदीयते बध्यतेऽनेन संदानम् । दाम नांतम् । स्त्रियां तु दामा दामानौ । पशुरज्जुः दामनी “ बंधनीत्यपि पाठः ” द्वे यस्यामेकस्यां बहुग्रंथियुतायां बहवो वृषा बध्यंते तस्या रज्जोः “ दावण इति ख्यातायाः । ” चरणपाशस्येत्येके ॥ ७३ ॥ वैशाखः मंथः मंथानः मंथाः मंथदंडकः पंच मंथनदंडस्य “ रवी इति ख्यातस्य । ” मंथाः मंथानौ । कुठरः । “ कुटर इति पाठे तु कुट कौटिल्ये बाहुलकादरः । ” दंडविष्कंभः द्वे यत्र मंथदंडो बध्यते तस्य स्तंभस्य “ घुसळखांब इति ख्यातस्य ।” मंथनी गर्गरी द्वे मथ्यमानदधिपात्रस्य । मंथतेऽस्यां मंथनी । कलशीत्यपि पाठः ॥ ७४ ॥ उष्ट्रः क्रमेलकः मयः महांगः चत्वारि उष्ट्रस्य उष्ट्रस्य ।

उष्ट्रे क्रमेलकमयमहांगाः करभः शिशुः ॥
करभाः स्युः शृंखलका दारवैः पादबंधनैः ॥ ७५ ॥
अजा छागी शुंभच्छागबस्तच्छगलका अजे ॥
मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके ॥ ७६ ॥
उष्ट्रोरभ्राजवृंदे स्यादौष्ट्रकौरभ्रकाजकम् ॥
चक्रीवंतस्तु बालेया रासभा गर्दभाः खराः ॥ ७७ ॥
वैदेहकः सार्थवाहो नैगमो वाणिजो बणिक् ॥
पण्याजीवो ह्यापणिकः क्रयविक्रयिकश्च सः ॥ ७८ ॥
विक्रेता स्याद्विक्रयिकः क्रायकक्रयिकौ समौ ॥
वाणिज्यं तु वणिज्या स्यान्मूल्यं वस्नोऽप्यवक्रयः ॥ ७९ ॥

शिशुः करभ इत्येकम् । दारवैः काष्ठमयैः पादबंधनैरुपेताः करभाः शृंखलकाः स्युरेकम् ॥ ७५ ॥ अजा छागी द्वे "शेळी इति ख्यातायाः" । शुभः "तुभः स्तभः स्तुभश्चेत्यपि" । छागः बस्तः छगलकः अजः पंचकमजस्य "बोकड इति ख्यातस्य" । मेढ्रः उरभ्रः उरणः ऊर्णायुः मेषः वृष्णिः एडकः "सप्तकं मेंढरू एडका इति ख्यातस्य" । अविरित्यपि । ऊर्णायुरदंतः ॥ ७६ ॥ उष्ट्राणां वृंदे औष्ट्रकम् । उरभ्राणां वृंदे औरभ्रकम् । अजानां वृंदे आजकम् । क्रमादेकैकम् । चक्रीवान् बालेयः रासभः गर्दभः खरः पंच गर्दभस्य "गाढव इति ख्यातस्य" ॥ ७७ ॥ वैदेहकः सार्थवाहः नैगमः "निगमः । निगमो वाणिजे पुर्यामिति विश्वः" । वाणिजः वणिक् पण्याजीवः आपणिकः क्रयविक्रयिकः अष्टौ क्रयविक्रयाभ्यां वर्तमानस्य "वाणी इति ख्यातस्य । वणिक् स्त्रियां वणिज्यायां पुमान्वाणिजकेऽपि च इति विश्वः" । वणिजौ ॥ ७८ ॥ विक्रेता विक्रयिकः द्वे वस्त्रपात्रादि दत्वा तन्मूल्यं गृह्णतः "विकणारा इति ख्यातस्य । विक्रयेण जीवति विक्रयिकः" । क्रायकः क्रयिकः द्वे मूल्येन वस्त्रादि गृह्णतः "विकत घेणारा इति प्रसिद्धस्य । क्रयेण जीवति क्रयिकः" । वाणिज्यं वणिज्यमपि । दूतवणिग्भ्यां चेति यः" । वणिज्या द्वे वणिजां कर्मणि "वाणीपणा इति ख्याते । वणिजां कर्म वाणिज्यम्" । मूल्यं वस्नः अवक्रयः त्रयं विक्रेयवस्तूनां मूल्यस्य "मोल इति

नीवी परिपणो मूलधनं लाभोऽधिकं फलम् ॥
परिदानं परीवर्तो नैमेयनिमयावपि ॥ ८० ॥
पुमानुपनिधिर्न्यासः प्रतिदानं तदर्पणम् ॥
क्रये प्रसारितं क्रय्यं क्रेयं क्रेतव्यमात्रके ॥ ८१ ॥
विक्रेयं पणितव्यं च पण्यं क्रय्यादयस्त्रिषु ॥
क्लीबे सत्यापनं सत्यंकारः सत्याकृतिः स्त्रियाम् ॥८२॥
विपणो विक्रयः संख्याः संख्येये ह्यादश त्रिषु ॥

ख्यातस्य"। वसत्यस्मिन्वस्तुप्राप्तिरिति वस्नः ॥ ७९ ॥ नीवी "नीविरित्यपि" परिपणः मूलधनं क्रयविक्रयादिव्यवहारे यन्मूलधनं तस्य भांडवल इति ख्यातस्य। नीवी स्त्री। परिपण्यते वृद्ध्यर्थं प्रयुज्यते परिपणः। मूलधनादधिकं निष्पन्नं कालांतरेण स लाभः स्यात् एकं "नफा इत्यादिख्यातस्य"। परिदानं "प्रतिदानमित्यपि" परीवर्तः "परिवर्त इत्यपि" नैमेयः "वैमेयोऽपि" निमयः "विमय इत्यपि" चत्वारि परिवर्तनस्य "मोबदला इति प्रसिद्धस्य।" मेङ् प्रणिदाने। निमानं निमयः ॥ ८० ॥ उपनिधिः न्यासः द्वे निक्षेपस्य "ठेव, पुरलेलें द्रव्य इति प्रसिद्धस्य" स्मृतौ तेषां भेदो नास्ति। तस्य निक्षेपस्य निक्षेप्त्रे अर्पणं प्रतिदानमित्युच्यते। एकम्। प्रतीपं दानं प्रतिदानम्। क्रये "क्रयविषये ग्राहका गृह्णीयुरिति बुद्ध्या" यदापणे प्रसारितं वस्तु तत् क्रय्यं एकम्। यत्क्रेतव्यमात्रं यत्र क्वापि वर्तते तत्क्रेयम् ॥ ८१ ॥ एवं विक्रेयं पणितव्यं पण्यं त्रयं विक्रेयस्य वस्तुनः। क्रय्यादयो वाच्यलिंगाः। सत्यापनं "सत्यापना। सत्यापना सत्याकृतिरिति त्रिकांडे बोपालितात्"। सत्यंकारः सत्याकृतिः त्रयं अवश्यं मयैतत्क्रेतव्यमित्यादिरूपस्य सत्यस्य करणे "सई करणें इति ख्याते। सत्यंकारस्तु लोके सचूकार, विसार इत्यादिप्रसिद्धः।" सत्यस्य कृतिः सत्याकृतिः। सत्यादशपथ इति डाच् ॥ ८२ ॥ विपणः विक्रयः द्वे "विकणें इति ख्यातस्य"। आदश "दशशब्दमभिव्याप्य" एकाद्या अष्टादशांता संख्याशब्दाः संख्येये वर्तमानास्त्रिषु। यथा एका शाटी। एकः पटः। एकं वस्त्रम्। दश स्त्रियः। दश पुरुषाः। दश कुलानि। "न तु विप्रस्यैक इत्यादि" एवं अष्टादशपर्यंताः उदाहर्तव्याः। तत्र चतुष्पर्यंता वाच्यलिंगाः। शेषं त्रिषु

विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः ॥८३॥
संख्यार्थे द्विबहुत्वे स्तस्तासु चानवतेः स्त्रियः ॥
पंक्तेः शतसहस्रादि क्रमाद्दशगुणोत्तरम् ॥ ८४ ॥
यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम् ॥
मानं तुलांऽगुलिप्रस्थैर्गुंजाः पंचाद्यमाषकः ॥ ८५ ॥

समानम् । द्विशब्दादेषां संख्येये एव वृत्तिर्न तु संख्यायामिति सूचितम् । विंशत्याद्याः विंशतिमारभ्य परार्द्धपर्यंताः सर्वाः संख्याः सदैकत्वे नित्यमेकवचनांताः । संख्येये संख्यायां च वर्तंते । तत्र संख्येये यथा । एकोनविंशतिः पटाः । विंशत्या पुरुषैः कृतम् । संति शतं गाव इत्यादि । संख्यायां यथा । पटानां विंशतिः । गवां शतम् ॥ ८३ ॥ संख्यार्थे द्विबहुवचने स्तः । संख्यांतरार्थे वर्तमानाया विंशत्यादिसंख्यायाः द्विवचने बहुवचने अपि भवत इत्यर्थः । यथा द्वे विंशती । गवां शतानि । "तिस्रो विंशतय इत्यादि । तासु विंशत्यादिषु नवतिपर्यंताः स्त्रियाम् ॥" पंक्तेरिति । पंक्तिर्दशसंख्या तामारभ्य दशगुणं उत्तरं यत्र तादृशं संख्यानं क्रमात् शतसहस्रादि स्यात् । पंक्तिर्दशाक्षरच्छंदो दशसंख्यावलिष्वपि इति विश्वः । यथा दशगुणा पंक्तिः शतं स्यात् । शतं दशगुणं सहस्रं स्यात् । एवमयुतादि । यदाहुः । एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः । अर्बुदमब्जं खर्वनिखर्वमहापद्मशंकवस्तस्मात् । जलधिश्चांत्यं मध्यं परार्धमिति दशगुणोत्तराः संज्ञाः । संख्यायाः स्थानानां व्यवहारार्थं कृताः पूर्वैरिति ॥ ८४ ॥ यौतवं द्रुवयं पाय्यं इति त्रयं मानर्थकम् मानमर्थो यस्य तत् । परिमाणवाचकमित्यर्थः । यौतवं ओष्ठ्यांतवर्णम् । पाय्यं तालव्यसंयुक्तांतम् । तन्मानं तुलांगुलिप्रस्थैर्भिद्यते । तुलामानं अंगुलिमानं प्रस्थमानंचेति त्रिविधमित्यर्थः । एतदेवोन्मानप्रमाणपरिमाणशब्दैः क्रमेण व्यवह्रीयते । "यदुक्तम् । ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात्संख्याभिन्ना तु सर्वत इति" । पंच गुंजाः आद्यमाषकः शास्त्रीयो माषकः स्यात् । यथा च शास्त्रं पंचकृष्णलो माष इति । एकम् । आद्येति विशेषणं द्विकृष्णलस्य राजतमाषस्य व्यावृत्त्यर्थम् । तस्य शास्त्रे प्रायशो व्यवहाराभावात् ॥ ८५ ॥ ते षोडश माषा अक्षः कर्षश्च स्यात् । "अस्त्री पुंसि क्लीबे च" द्वे "तोळा इति ख्यातस्य ।" कर्षचतुष्टयं पलं स्यात् एकम् । सुवर्णः बिस्तः द्वे हेम्नः सुव-

ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम् ॥
सुवर्णबिस्तौ हेम्नोऽक्षे कुरुबिस्तस्तु तत्पले ॥ ८६ ॥
तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः ॥
आचितो दश भाराः स्युः शाकटो भार आचितः॥८७॥
कार्षापणः कार्षिकः स्यात्कार्षिके ताम्रिके पणः ॥
अस्त्रियामाढकद्रोणौ खारी वाहो निकुंचकः ॥ ८८ ॥
कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक् ॥

र्णस्याक्षे अशीतिगुंजाभिस्तुलिते सुवर्ण एवेत्यर्थः । "रुद्रस्तु । सुवर्णं स्वर्णबिस्तयोरिति क्लीबमाह ।" तस्य हेम्नः पले कुरुबिस्त इत्येकम् ॥ ८६ ॥ पलानां शतं तुला स्यात् "एकं स्त्रियाम् । विंशतिस्तुलाः एको भारः स्यात् एकम् । भारः स्याद्वीवधे विष्णौ पलानां द्विसहस्रक इति कोशांतरम् ।" पुरुषेण हि द्वे पलसहस्रे वोढुं शक्येते । भ्रियत इति भारः । दश भाराः आचित इति स्युः । यः शाकटः शकटेन वोढुं शक्यो भारः सोऽप्याचित इत्येकम् । "आचितः शकटोन्मेये पलानामयुतद्वय इति विश्वः" ॥ ८७ ॥ कार्षापणः कार्षिकः द्वे राजतकर्षपरिमितरूपकस्य "रुपया इति ख्यातस्य । कार्षापणोऽस्त्री कार्षिके पणषोडशिकेऽपि चेति कोशांतरम् ।" ताम्रिके ताम्रसंबंधिकर्षप्रमाणे तस्मिन्कार्षिके पण इत्येकं पैसा इति ख्यातस्य । इति तुलामानमुक्तम् । अंगुलिमानं हस्तादि तु नृवर्गे उक्तम् । प्रस्थमानं त्वाह । आढकादयः शब्दाः परिमाणार्थकाः परिमाणविशेषवाचकाः पृथक् प्रत्येकं भिन्ना इत्यर्थः । "तत्र आढक इत्येकं पायली इति ख्यातस्य । द्रोण इत्येकं अदमणी इति ख्यातस्य । द्वे अप्यस्त्रियाम् । खारी इत्येकं दीडमणी इति ख्यातस्य । खार इति पुंसि वा । खारिरिति ह्रस्वांतोऽपि स्त्रियाम् । वाह इत्येकं बारामणी इति ख्यातस्य । निकुंचक इत्येकं मूठ इति ख्यातस्य" ॥ ८८ ॥ "कुडव इत्येकं पावशेर इति ख्यातस्य । कुटप इति मुकुटः । कुडपो वा । कुडवप्रमाणं तु । मृद्वेणुकाष्ठलोहादेः पात्रं यच्चतुरंगुलम् । विस्तीर्णं च तथोच्चं च तन्मानं कुडवं वदेत् ॥ प्रस्थ इत्येकं शेर इति ख्यातस्य ।" आद्यशब्दाच्छूर्पभारादिग्रहः । यदाहुः । पलं प्रकुंचकं मुष्टिः कुडवस्तच्चतुष्टयम् । चत्वारः कुडवाः प्रस्थश्चतुष्प्रस्थं तथाऽऽढकम् । अष्टाढको

पादस्तुरीयो भागः स्यादंशभागौ तु वंटके ॥ ८९ ॥
द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु ॥
हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि ॥ ९० ॥
स्यात्कोशश्च हिरण्यं च हेमरूप्ये कृताकृते ॥
ताभ्यां यदन्यत्तत्कुप्यं रूप्यं तद्द्वयमाहतम् ॥ ९१ ॥
गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः ॥
शोणरत्नं लोहितकः पद्मरागोऽथ मौक्तिकम् ॥ ९२ ॥
मुक्ताऽथ विद्रुमः पुंसि प्रवालं पुन्नपुंसकम् ॥

भवेद्द्रोणो द्विद्रोणः शूर्प उच्यते । सार्धशूर्पो भवेत्खारी द्विशूर्पा द्रोण्युदाहृता । तावेव भारं जानीयाद्वाहो भारचतुष्टयमिति । " अन्यच्च । अष्टमुष्टिर्भवेत्कुंचिः कुचयोऽष्टौ तु पुष्कलम् । पुष्कलानि तु चत्वारि आढकः परिकीर्तितः । चतुराढको भवेद्द्रोण इत्येतन्मानलक्षणमित्युक्तम् । " अत्र पलादित्रयं अभिन्नम् । तत्तद्देशभेदात्संख्यान्यथात्वं च । यथा मगधदेशे । द्रोणस्तु खार्याः खलु षोडशांशः स्यादाढको द्रोणचतुर्थभाग इत्यादि । रूपकादेश्चतुर्थभागः पाद इत्युच्यते एकं "पावली इत्यादि ख्यातस्य" अंशः भागः घंटकः त्रीणि भागमात्रस्य "घांटा इति ख्यातस्य" ॥ ८९ ॥ द्रव्यं वित्तं स्वापतेयं रिक्थं ऋक्थं धनं वसु हिरण्यं द्रविणं द्युम्नं अर्थः राः विभवः त्रयोदश धनस्य । तत्र अर्थादित्रयं पुंसि । रा द्वयोर्विभवे स्वर्णे इति रुद्रः । रायौ रायः ॥ ९० ॥ कोशः हिरण्यं द्वे अपि घटिताघटितयोर्हेमरूप्ययोः । कोशस्तालव्यांतो मूर्द्धन्यांतो वा । ताभ्यां हेमरूप्याभ्यां यदन्यत्ताम्रादिकं तत्कुप्यं स्यात् । एकम् । कुप्यं ह्रस्वादि । गुपेरादेः कत्वं च संज्ञायामित्यनेनं गकारस्य ककारः । अर्थाद्धिरण्यं रूप्यं चाकुप्यं । तद्द्वयं कुप्यमकुप्यं च आहतं "मुद्रितं चेत्" रूप्यं "एकं नाणें इति ख्यातस्य ।" रूपमाहन्यतेऽस्य रूप्यम् । रूपादाहत इति यप् । रूप्यं स्यादाहतस्वर्णरजतं रजतेऽपि चेति विश्वः ॥ ९१ ॥ गारुत्मतं मरकतं अश्मगर्भः हरिन्मणिः चत्वारि पाच इति प्रसिद्धस्य मणेः । शोणरत्नं लोहितकः पद्मरागः त्रीणि पद्मरागस्य "माणीक इति ख्यातस्य" । मौक्तिकम् ॥ ९२ ॥ मुक्ता द्वे "मोती इति प्रसिद्धस्य ।" मुच्यते शुक्ति-

१ अस्मिन् पादेऽक्षराणि नव भवन्तीति चिन्त्यमिदम् ॥ २ इत्यनेनेति । इदमयुक्तम् । "राजसूयसूर्य०"—(३।१।११४)—इति सूत्रेण गुपेः क्यप् गुपेरादेः कत्वं च संज्ञायां निपात्यते—इति तु युक्तं वक्तव्यम् ॥

रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च ॥ ९३ ॥
स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् ॥
तपनीयं शातकुंभं गांगेयं भर्म कर्बुरम् ॥ ९४ ॥
चामीकरं जातरूपं महारजतकांचने ॥
रुक्मं कार्तस्वरं जांबूनदमष्टापदोऽस्त्रियाम् ॥ ९५ ॥
अलंकारसुवर्णं यच्छृंगीकनकमित्यदः ॥
दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपि ॥ ९६ ॥
रीतिः स्त्रियामारकूटो न स्त्रियामथ ताम्रकम् ॥
शुल्बं म्लेच्छमुखं द्व्यष्टवरिष्ठोदुंबराणि च ॥ ९७ ॥

भिर्मौक्तिकम् । विद्रुमः प्रवालः "द्वे पोंवळें इति ख्यातस्य । क्लीबे प्रवालम् ।" रत्नं मणिः द्वे अश्मजातौ मरकतादौ मुक्तादिकेऽपि वर्तेते । तत्र मणिः स्त्रीपुंसयोः । "स्त्रियां क्लीषंतोऽपि मणी ।" आदिशब्दाद्विद्रुमेऽपि । रमंतेऽस्मिन् रत्नम् । कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् । एतानि पंच रत्नानि रत्नशास्त्रविदो विदुः । सुवर्णं रजतं मुक्ता राजावर्तं प्रवालकम् । रत्नपंचकमाख्यातं शेषं वस्तु प्रचक्षते इति वा । मुक्ताफलं हिरण्यं च वैडूर्यं पद्मरागकम् ॥ पुष्परागं च गोमेदं नीलं गारुत्मकं तथा । प्रवालयुक्तान्युक्तानि महारत्नानि वै नवेति" ॥ ९३ ॥ स्वर्णाद्येकोनविंशतिः सुवर्णस्य । तत्र हेमभर्मणी नांते ॥ ९४ ॥ अष्टापदं क्लीबपुंसोः । शातकौंभमिति द्विरूपकोशः । कर्बूरमिति दीर्घमध्यं शब्दरत्नावल्याम् । "कर्चूरम् । कर्चूरः स्यात्पुमान् शट्यां सुवर्णे पुंनपुंसकमिति मेदिनी । भर्ममिसदंतमपि द्विरूपकोशे" । गांगेयं नाम गंगायाः अपत्यम् । तदुक्तं वायुपुराणे ॥ यं गर्भं सुषुवे गंगा पावकाद्दीप्ततेजसम् । तदुल्बं पर्वते न्यस्तं हिरण्यं समपद्यत इति । जातरूपमित्यत्र प्रशस्तं जातं जातरूपम् । प्रशंसायां रूपम् ॥ ९५ ॥ यदलंकाररूपं सुवर्णं तत् शृंगीकनकमित्येकम् । शृंगीति पृथगपि । यन्माला—भूषणं कनकं शृंगीति । दुर्वर्णादिपंचकं रजतस्य । "तत्र खर्जूरं ह्रस्वोकारामिति रामनाथः ।" अपिशब्दात्तारं कलधौतमित्यपि ॥ ९६ ॥ रीतिः आरकूटः द्वे पित्तलस्य "तत्र रीतिः स्त्रियाम् । रीतीत्यपि । आरकूटः पुंसि क्लीबे

लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिंडं कालायसायसी ॥
अश्मसारोऽथ मंडूरं सिंहाणमपि तन्मले ॥ ९८ ॥
सर्वं च तैजसं लोहं विकारस्त्वयसः कुशी ॥
क्षारः काचोऽथ चपलो रसः सूतश्च पारदे ॥ ९९ ॥
गवलं माहिषं शृंगमभ्रकं गिरिजामले ॥
स्रोतोंजनं तु सौवीरं कापोतांजनयामुने ॥ १०० ॥

च ।" ताम्रकं शुल्बं म्लेच्छमुखं द्व्यष्टं "द्विष्टमपि" वरिष्ठं उदुंबरं "औदुंबरं भवेत्ताम्रे फलादौ यज्ञशाखिन इत्यजयः ।" षट् ताम्रस्य ॥ ९७ ॥ लोहः शस्त्रकं तीक्ष्णं पिंडं कालायसं "कृष्णायसमिति रत्नमाला ।" अयः अश्मसारः सप्त लोहस्य । "अश्मसारं च शस्त्रकमित्यमरमाला ।" मंडूरं सिंहाणं "सिहानमित्यपि पाठः ।" "सिंघाणमित्यपि" द्वे लोहमलस्य लोहकीट इति ख्यातस्य । मंडूरं टवर्गमध्यम् ॥ ९८ ॥ सर्वमपि तैजसं सुवर्णरजतादिकं लोहमित्युच्यते । "प्रज्ञाद्यणि लौहमित्यपि" । यद्वा सर्वं स्वर्णादि तैजसं लोहं च स्यात् । तेजसो विकारस्तैजसम्" । यदुक्तम् । सुवर्णं रजतं ताम्रं रीतिः कांस्यं तथा त्रपु । सीसं कालायसं चैवमष्टौ लोहानि चक्षत इति । अयस्तु विशेषाल्लोहसंज्ञम् । अयसो विकारः फालाख्यः कुशी स्यात् । यच्छाश्वतः । कुशी वला कुशी फाले इति । एकं स्त्रीलिंगम् । क्षारः काचः द्वे काचस्य "कांच बांगडखार इति ख्यातस्य" क्षरति क्षारः । चपलः रसः सूतः पारदः । "पारतः । रसेंद्रः पारदः प्रोक्तः पारतोऽपि निगद्यत इति वारपालः । पारतस्तु मनाक्पांडुः सूतस्तु रहितो मलात् । पारदस्तु मनाक् शीतः सर्वे तुल्यगुणाः स्मृता इति शब्दार्णवः" । चत्वारि पारदस्य "पारा इति ख्यातस्य" ॥ ९९ ॥ यन्माहिषं शृंगं तद्गवलमित्येकम् । पारदो हि प्रायेण गवले निधाप्यते तत्र तदभिधानम् । अभ्रकं गिरिजामलं द्वे "अभ्रक इति ख्यातस्य ।" अभ्रस्य प्रतिकृतिरभ्रकम् । गिरिजम् । अमलमिति कश्चित् । तन्मते त्रीणि । "गिरिजं गिरिजाबीजममलं गवलध्वजमिति वाचस्पतिः" स्रोतोंजनं सौवीरं कापोतांजनं यामुनं चत्वारि सौविरांजनस्य "सुरमा इति ख्यातस्य ।" यमुनास्रोतसो जातमंजनं स्रोतोंजनम् । सुवीरदेशे भवं सौवीरम् । धन्वंतरिस्तु । अंजनं मेचकं कृष्णसौवीरं स्यात्सुवी-

तुत्थाञ्जनं शिखिग्रीवं वितुन्नकमयूरके ॥
कर्परी दार्विकाक्काथोद्भवं तुत्थं रसांजनम् ॥ १०१ ॥
रसगर्भं तार्क्ष्यशैलं गंधाश्मनि तु गंधिकः ॥
सौगंधिकश्च चक्षुष्याकुलाल्यौ तु कुलत्थिका ॥ १०२ ॥
रीतिपुष्पं पुष्पकेतु पुष्पकं कुसुमांजनम् ॥
पिंजरं पीतनं तालमालं च हरितालके ॥ १०३ ॥
गैरेयमर्थ्यं गिरिजमश्मजं च शिलाजतु ॥
बोलगंधरसप्राणपिंडगोपरसाः समाः ॥ १०४ ॥
डिंडीरोऽब्धिकफः फेनः सिंदूरं नागसंभवम् ॥

रजम् । कापोतकं यामुनं च स्रोतोंजनमुदाहृतमिति ॥ १०० ॥ तुत्थांजनं शिखिग्रीवं वितुन्नकं मयूरकं कर्परी पंच तुत्थांजनस्य मोरचूद इति ख्यातस्य । तुदत्यक्षिरोगान् तुत्थम् । तुत्थं च तदंजनं च । दार्विका दारुहरिद्रा तत्काथोद्भवम् । तस्याः क्वाथे "समभागेन अजादुग्धेन" संस्कृतं तुत्थं तुत्थांजनं रसांजनादिसंज्ञं स्यात् । "दर्विकेत्यपि ।" रसांजनम् ॥ १०१ ॥ रसगर्भं तार्क्ष्यशैलं त्रीणि । केचित्तुत्थरसांजनमिति समस्तं पेठुः । गंधाश्मा गंधिकः "गंधक इत्यपि" सौगंधिकः त्रीणि गंधकस्य । चक्षुष्या कुलाली कुलत्थिका त्रयं "तुत्थविशेषस्य निळा सुरमा इति ख्यातस्य ।" चक्षुषे हिता चक्षुष्या । कुले तिष्ठति तस्माकृतिः कुलत्थिका ॥ १०२ ॥ रीतिपुष्पं पुष्पकेतु पुष्पकं "पौष्पकमित्यपि" कुसुमांजनं चत्वारि संतप्तपित्तलादुत्पन्नस्य" जस्ताचें फूल इति ख्यातस्य ।" पुष्पकेतु उदंतं क्लीबे । पिंजरं पीतनं तालं आलं "अलम् । हरितालमलं तालवर्णकं नटभूषणमिति माधवः ।" हरितालकं पंच हरितालस्य ॥ १०३ ॥ गैरेयं अर्थ्यं गिरिजं अश्मजं शिलाजतु पंच शिलाजतुनः "शिलाजित इति ख्यातस्य" । अर्थ्यते रसायनार्थिभिरर्थ्यम् । शिलायां स्रवल्लाक्षाकृतित्वाच्छिलाजतु । बोलः गंधरसः "रसगंध इति स्वामी । राजदंतादित्वात् ।" प्राणः पिंडः गोपरसः पंच गंधरसस्य । "रक्त्या बोळ इति ख्यातस्य" । गोपः रसश्चेति पृथगपि । अत्र गोस इति मुकुटः । गां जलं स्यति । षोंऽतकर्मणि । गोप इति स्वामी । गंधप्रधानो रसोऽस्य गंधरसः ॥ १०४ ॥ डिंडीरः । "हिंडीर इत्यपि" । हिंडिर इति

नागसीसकयोगेष्टवप्राणि त्रपु पिच्चटम् ॥ १०५ ॥
रंगवंगे अथ पिचुस्तूलोऽथ कमलोत्तरम् ॥
स्यात्कुसुंभं वह्निशिखं महारजनमित्यपि ॥ १०६ ॥
मेषकंबल ऊर्णायुः शशोर्णं शशलोमनि ॥
मधु क्षौद्रं माक्षिकादि मधूच्छिष्टं तु सिक्थकम् ॥ १०७ ॥
मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका ॥
नैपाली कुनटी गोला यवक्षारो यवाग्रजः ॥ १०८ ॥
पाक्योऽथ सर्जिकाक्षारः कापोतः सुखवर्चकः ॥

शब्दरत्नावल्याम् । अब्धिकफः फेनः त्रयं सागरमलाख्यस्य समुद्रफेनस्य । सिंदूरं नागसंभवं द्वे "सेंदूर इति ख्यातस्य ।" नागात्सीसात्संभवोऽस्य नागसंभवम् । नागं सीसकं योगेष्टं वप्रं "वर्ध्रमिति मुकुटः । वृधु वर्धने । वृधिवपिभ्यां रन्" । चत्वारि सीसस्य "शिसें इति ख्यातस्य ।" त्रपु पिच्चटम् ॥ १०५ ॥ रंगं वंगं चत्वारि वंगे "कथिल इति ख्याते ।" पिचुः तूलः द्वे कार्पासस्य । कमलोत्तरं कुसुंभं वह्निशिखं महारजनं चत्वारि कुसुंभस्य । रज्यते वस्त्राद्यनेन रजनम् । महच्च तद्रजनं च महारजनम् ॥ १०६ ॥ मेषकंबलः ऊर्णायुः द्वे कंबलस्य । ऊर्णायुरुदंतः पुंसि । शशोर्णं शशलोम द्वे शशलोम्नः । मधु क्षौद्रं माक्षिकं त्रीणि मधुनः । आदिना भ्रामरपौत्तिकादिग्रहणम् । मधूच्छिष्टं सिक्थकं द्वे "मेण इति ख्यातस्य" मधुना उच्छिष्यते मधूच्छिष्टम् ॥ १०७ ॥ मनःशिला "मनःशिल इति द्विरूपकोशः" । मनोगुप्ता मनोह्वा नागजिह्विका चत्वारि मनःशिलायाः । "मनःशब्दवाच्या शिला मनःशिला ।" नैपाली कुनटी गोला त्रीणि नैपालदेशोद्भवायां मनःशिलायाम् । सप्तैकार्था इत्येके । यवक्षारः यवाग्रजः ॥ १०८ ॥ पाक्यः त्रीणि दग्धयवांकुरेभ्यो जायमानस्य क्षारभेदस्य "जवखार इति ख्यातस्य ।" सर्जिकाक्षारः । "स्वर्जिकाक्षार इति रामनाथः ।" कापोतः सुखवर्चकः त्रीणि क्षारभेदस्य "सज्जीखार इति ख्यातस्य" । सर्जिकां दग्ध्वा क्षार्यते यः स सर्जिकाक्षारः । सौवर्चलं रुचकं द्वे क्षारभेदस्य "संचळखार इति ख्यातस्य ।" प्रागुक्तमपि क्षारप्रसंगात् पुनरुक्तम् । पंचापि सर्जिकाक्षारस्येति सुभूत्या-

सौवर्चलं स्याद्रुचकं त्वक्क्षीरी वंशरोचना ॥ १०९ ॥
शिग्रुजं श्वेतमरिचं मोरटं मूलमैक्षवम् ॥
ग्रंथिकं पिप्पलीमूलं चटिकाशिर इत्यपि ॥ ११० ॥
गोलोमी भूतकेशो ना पत्रांगं रक्तचंदनम् ॥
त्रिकटु त्र्यूषणं व्योषं त्रिफला तु फलत्रिकम् ॥१११॥

इति वैश्यवर्गः ॥ ९ ॥

---

शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः ॥
आचंडालात्तु संकीर्णा अंबष्ठकरणादयः ॥ १ ॥

दयः । त्वक्क्षीरी वंशरोचना "वंशलोचनेति हेमचंद्रः" द्वे वेणुजन्यस्यौषधिविशेषस्य "वंशलोचन इति ख्यातस्य।" त्वक्क्षीरी वंशजा शुभ्रा वंशक्षीरी तु वैणवीति कोशांतरम् ॥ १०९ ॥ शिग्रुजं श्वेतमरिचं द्वे सौभांजनबीजस्य "शेवग्याचें बीं इति ख्यातस्य।" इक्षुसंबंधि मूलकं मोरटं स्यात् एकं "इक्षुमूलस्य।" ग्रंथिकं पिप्पलीमूलं चटिकाशिरः। "चटकाशिर इति हेमचंद्रः। चटकायाः शिर इव। चटका शिरः इति पृथगपि। शिरो ना पिप्पलीमूल इति मेदिनी।" त्रयं पिप्पलीमूलस्य "पिंपळीमूळ इति ख्यातस्य" ॥ ११० ॥ गोलोमी भूतकेशः द्वे "जटामांसी इति प्रसिद्धायाः।" गौरिव लोमान्यस्याः सा गोलोमी। गोलोमी श्वेतदूर्वायां स्याद्वचाभूतकेशयोरिति विश्वः। पत्रांगं रक्तचंदनं द्वे रक्तचंदनसदृशस्य रक्तसारस्य "कृष्णसिसव, पतंग इति च ख्यातस्य। पत्राण्यंगेऽस्य पत्रांगम्।" त्रिकटु त्र्यूषणं "त्र्युषणमिति द्विरूपकोशः" व्योषं त्रीणि शुंठपिप्पलीमरीचानां समाहारस्य। त्रिफला "तृफला। तृफला त्रिफला चेति त्रिकांडशेषः।" फलत्रिकं द्वे हरीतक्यामलकबिभीतकफलानां समाहारस्य ॥ १११ ॥ इति वैश्यवर्गः ॥ ९ ॥ शूद्रः अवरवर्णः वृषलः जघन्यजः जघन्यात्पादाज्जातः। जनी प्रादुर्भावे। चत्वारि शूद्रस्य। चंडालो ब्राह्मण्यां शूद्राज्जातस्तमभिव्याप्य वक्ष्यमाणा अंबष्ठकरणादयः। "आदिना उग्रादयः।" संकीर्णा प्रतिलोमानुलोमजत्वान्मिश्राः। एकम्। ते च संकरजातीयाः करणांबष्ठोग्रमागधमाहिष्यक्षत्तृसूतवैदेहकरथकारपारसवचंडालाख्याः एकादशेति ॥ १ ॥ शूद्रा शूद्रजातिरंगना

शूद्राविशोस्तु करणोंऽबष्ठो वैश्याद्विजन्मनोः ॥
शूद्राक्षत्रिययोरुग्रो मागधः क्षत्रियाविशोः ॥ २ ॥
माहिषोऽर्याक्षत्रिययोः क्षत्ताऽर्याशूद्रयोः सुतः ॥
ब्राह्मण्यां क्षत्रियात्सूतस्तस्यां वैदेहको विशः ॥ ३ ॥
रथकारस्तु माहिष्यात्करण्या यस्य संभवः ॥
स्याच्चंडालस्तु जनितो ब्राह्मण्यां वृषलेन यः ॥ ४ ॥
कारुः शिल्पी संहतैस्तैर्द्वयोः श्रेणिः सजातिभिः ॥
कुलकः स्यात्कुलश्रेष्ठी मालाकारस्तु मालिकः ॥५॥

विट् वैश्यः तयोः सुत इति वक्ष्यमाणेनान्वयः स करण इत्येकम् । स तु लेखनवृत्तिः । वैश्यायां ब्राह्मणाज्जातः सुतोंऽबष्ठः । स तु चिकित्सावृत्तिः । शूद्रायां क्षत्रियाज्जातः उग्रः । सतु शस्त्रवृत्तिः । क्षत्रियायां वैश्याज्जातो मागधः । स तु राजादिस्तुतिपाठवृत्तिः । एकैकम् ॥ २ ॥ अर्या वैश्या । वैश्यायां क्षत्रियाज्जातो माहिषः "माहिष्यः" । अस्य ज्योतिषं शाकुनं शास्त्रं स्वरशास्त्रं च जीविका । माहिष्योऽर्याक्षत्रिययोरित्यपि पाठः । अर्या क्षत्रिया तस्यां शूद्राज्जातः क्षत्ता । तस्य वृत्तिः पापर्द्धिकादिः । क्षत्तारौ । ब्राह्मण्यां क्षत्रियाज्जातः सूत इत्युच्यते तस्य गजबंधनमश्वानां वाहनं कर्म सारथेरित्यादिर्जीविका । तस्यां ब्राह्मण्यां वैश्याज्जातो वैदेहकः । चतुःषष्टिकलाकर्मशैक्ष्यं तदुपजीविका । पण्यांगनानां राज्ञां च कुर्यात्संगं तदिच्छया । उपजीव्यं तु तास्वेवेति । एकम् ॥ ३ ॥ करण्यां शूद्रविशोः सुतायां माहिष्याद्वैश्याक्षत्रिययोः जाताज्जातो रथकारः स्यात् । अस्य वर्तनं तु । रथकर्मेधनादिभिः । ब्राह्मण्यां वृषलेन शूद्रेण य उत्पादितः स चंडालः स्यात् । "चांडाल इत्यपि ।" मृतचैलैर्निद्यमांसैः श्मशाने तस्य जीवितमित्येकैकम् ॥ ४ ॥ कारुः शिल्पी द्वे चित्रकारादेः । शिल्पं कला सास्त्यस्य शिल्पी । "तक्षा च तंतुवायश्च नापितो रजकस्तथा । पंचमश्चर्मकारश्च कारवः शिल्पिनो मता इत्यपि ।" तैः सजातिभिः संहतैः श्रेणिः । सजातीयशिल्पिसंघः श्रेणिरित्यर्थः । स स्त्रीपुंसलिंगः । एकम् । कुलकः । "कुलिकः । कुलिको नागभेदे स्यात्कुभेदे कुलसत्तम इति मेदिनी ।" कुलश्रेष्ठी द्वे शिल्पिकुलप्रधानस्य । शिल्पिभेदानाह । मालाकारः मालिकः द्वे "माळी इति प्रसि-

कुंभकारः कुलालः स्यात्पलगंडस्तु लेपकः ॥
तंतुवायः कुविंदः स्यात्तुन्नवायस्तु सौचिकः ॥ ६ ॥
रंगाजीवश्चित्रकरः शस्त्रमार्जोऽसिधावकः ॥
पादूकृच्चर्मकारः स्याद्व्योकारो लोहकारकः ॥ ७ ॥
नाडिंधमः स्वर्णकारः कलादो रुक्मकारकः ॥
स्याच्छांखिकः कांबविकः शौल्बिकस्ताम्रकुट्टकः ॥ ८ ॥
तक्षा तु वर्द्धकिस्त्वष्टा रथकारस्तु काष्ठतट् ॥
ग्रामाधीनो ग्रामतक्षः कौटतक्षोऽनधीनकः ॥ ९ ॥

तस्य ।" पुष्पमाला पण्यमस्य मालिकः ॥ ५ ॥ कुंभकारः कुलालः "द्वे कुंभार इति ख्यातस्य ।" पलगंडः लेपकः द्वे गृहादौ लेपकारस्य "गंवडी इत्यादि ख्यातस्य ।" तंतुवायः "तंत्रवायः तंद्रवायः तंत्रवाप इति ओष्ठ्यांतोऽपि ।" कुविंदः "कुपिंद इत्यपि । कुप क्रोधे ।" द्वे पटानां निर्मातरि कोष्टी इति ख्याते" । तुन्नवायः सौचिकः द्वे कंचुक्यादेर्निर्मातरि "शिंपी इति ख्याते ।" सूच्या वानं शिल्पमस्य सौचिकः ॥ ६ ॥ रंगाजीवः चित्रकरः द्वे "चितारी, रंगारी इत्यादि ख्यातस्य ।" रंगं श्वेतपीतरक्तादिकमाजीवति रंगाजीवः । शस्त्रमार्जः असिधावकः द्वे शस्त्रघर्षणोपजीविनः "शिकलगार इति ख्यातस्य ।" पादूकृत् चर्मकारः द्वे "चांभार इति ख्यातस्य ।" पादूः पादत्राणि करोति पादूकृत् तांतः । व्योकारः लोहकारकः द्वे "लोहार इति ख्यातस्य । व्यो इत्यव्ययं लोहबीजवाचीति श्रीभोजः" ॥ ७ ॥ नाडिंधमः स्वर्णकारः कलादः रुक्मकारकः चत्वारि स्वर्णकारस्य "सोनार इति ख्यातस्य" । शांखिकः कांबविकः द्वे शंखवलयादेः कर्तरि कंकणकार, "कांसार" इति ख्याते । शौल्बिकः ताम्रकुट्टकः द्वे "तांबट इति ख्यातस्य" शुल्बं ताम्रं तद्घटनं शिल्पमस्य शौल्बिकः ॥ ८ ॥ तक्षा वर्द्धकिः त्वष्टा रथकारः काष्ठतट् पंच वर्द्धकेः "सुतार इति ख्यातस्य ।" वर्द्धयति छिनत्ति काष्ठं वर्द्धकिः । तक्षाणौ । त्वष्टारौ । काष्ठं तक्ष्णोति तनूकरोति काष्ठतट् । काष्ठतक्षौ । ग्रामाधीनो यस्तक्षा स ग्रामतक्ष इत्येकं "गांवचा सुतार इति ख्यातस्य ।" "ग्रामकौटाभ्यां च तक्ष्णः" इति टच् । अनधीनकः स्वधीनो यस्तक्षा स कौटतक्षः स्यात् । एकम् ॥ ९ ॥ क्षुरी

क्षुरी मुंडी दिवाकीर्तिनापितांतावसायिनः ॥
निर्णेजकः स्याद्रजकः शौंडिको मंडहारकः ॥ १० ॥
जाबालः स्यादजाजीवो देवाजीवस्तु देवलः ॥
स्यान्माया शाबरी मायाकारस्तु प्रतिहारकः ॥ ११ ॥
शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः ॥
भरता इत्यपि नटाश्चारणास्तु कुशीलवाः ॥ १२ ॥
मार्दंगिका मौरजिकाः पाणिवादास्तु पाणिघाः ॥
वेणुध्माः स्युर्वैणविका वीणावादास्तु वैणिकाः ॥ १३ ॥

मुंडी । क्षुरि मुंडि इतिह्रस्वघटितपाठोऽपि । दिवाकीर्तिः नापितः अंतावसायी पंच नापितस्य "नाहावी इति ख्यातस्य"। निर्णेजकः रजकः द्वे वस्त्राणां धावकस्य "परीट इति ख्यातस्य ।" शौंडिकः मंडहारकः द्वे सुराजीविनः "कलाल इति ख्यातस्य"। शुंडा सुरा सा पण्यमस्य शौंडिकः ॥ १० ॥ जाबालः अजाजीवः द्वे अजापालस्य "मेंढपाळ, मेंढक्या, धनगर इति ख्यातस्य ।" देवाजीवः "देवाजीवीत्यपि" देवलः द्वे देवसेवोपजीविनः "गुरव, देवळी इति ख्यातस्य । देवं लक्षणया तत्स्वं लातीति देवलः" माया शांबरी द्वे इंद्रजालस्य "गारूड इति ख्यातस्य"। शंबराख्यस्यासुरस्येयं शांबरी । मायाकारः प्रतिहारकः "प्रतिहारिकः प्रातिहारिक इत्यपि द्वे मायाविनः गारुडीति ख्यातस्य ।" प्रतिहारो व्याजः प्रयोजनमस्य स तथा ॥ ११ ॥ शैलाली शैलूषः जायाजीवः कृशाश्वी भरतः "भारत इत्यपि । कृशाश्वेन च यत्प्रोक्तं नटसूत्रमधीयते । रंगावतारी शैलूषो नटो भरतभारताविति वाचस्पतिः ।" नटः षट्कं नटेषु "नटवा इति ख्यातेषु" नटति नृत्यति नटः । चारणः कुशीलवः द्वे कथकानां नटविशेषाणाम् । "कुत्सितं शीलमस्त्यस्य कुशीलवः" ॥ १२ ॥ मार्दंगिकाः मौरजिकाः द्वे मृदंगवादनकुशलानां "मृदंगी पखवाजी इति ख्यातानाम् ।" पाणिवादाः पाणिघाः द्वे ये पाणितलेनैव पाण्यंतरे मृदंगादिध्वनिमनुकुर्वंति तेषां "हाताचे तालधारी इति ख्यातानाम् ।" वेणुध्माः वैणविकाः द्वे वेणुवादिनां "पांवेकरी इति ख्यातानाम् ।" वेणुध्माः आदंतः सोमपावत् । वीणावादाः वैणिकाः द्वे वीणावादनं शिल्पमेषां "विणेकरी इति ख्यातानाम्"

जीवांतकः शाकुनिको द्वौ वागुरिकजालिकौ ॥
वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयम् ॥ १४ ॥
भृतको भृतिभुक् कर्मकरो वैतनिकोऽपि सः ॥
वार्तावहो वैवधिको भारवाहस्तु भारिकः ॥ १५ ॥
विवर्णः पामरो नीचः प्राकृतश्च पृथक्जनः ॥
निहीनोऽपसदो जाल्मः क्षुल्लकश्चेतरश्च सः ॥ १६ ॥
भृत्ये दासेरदासेयदासगोप्यकचेटकाः ॥
नियोज्यकिंकरप्रैष्यभुजिष्यपरिचारकाः ॥ १७ ॥
पराचितपरिस्कंदपरजातपरैधिताः ॥

॥ १३ ॥ जीवांतकः "जीवंतिक इत्यपि" शाकुनिकः द्वे पक्षिणां हंतरि "पक्षांचा पारधी इति ख्याते ।" वागुरिकः जालिकः द्वे जालेन मृगान्बध्नतः । वागुरा मृगबंधनी तया चरति वागुरिकः । वैतंसिकः कौटिकः मांसिकः त्रयं यो मांसविक्रयेण जीवति तस्य "खाटिक इति ख्यातस्य" । वीतंसेन मृगपक्ष्यादिबंधनोपायेन चरति वैतंसिकः । कूटेन मृगादिबंधनयंत्रेण चरति कौटिकः । मांसं पण्यमस्य मांसिकः ॥ १४ ॥ भृतकः भृतिभुक् कर्मकरः वैतनिकः चत्वारि वेतनोपजीविनः "चाकर, मजूर इति प्रसिद्धस्य ।" भृतिर्वेतनं भृतिं वेतनं भुंक्ते भृतिभुक् । वार्तावहः वैवधिकः "विवधिक इत्यपि" द्वे वार्ताया वाहके "कावड्या इति ख्याते ।" विवधः पर्याहारः, तं वहति वैवधिकः । विवधवीवधशब्दौ उभयतः बद्धशिक्ये स्कंधवाह्ये काष्ठे वर्तेते । भारवाहः भारिकः "द्वे ओझेकरी इति ख्यातस्य । भारीति नांतोऽप्यन्यत्र" ॥ १५ ॥ विवर्णः पामरः नीचः प्राकृतः पृथक्जनः निहीनः अपसदः "अपशेद इति भरतमालायाम्" जाल्मः क्षुल्लकः "खुल्लकः । खुल्लकस्त्रिषु नीचेऽल्पे इति रभसः ।" इतरः दश नीचस्य ॥ १६ ॥ भृत्यः दासेरः दासेयः दासः "दाश इति तालव्यांतोऽपि" गोप्यकः चेटकः "चेडक इत्यपि" नियोज्यः किंकरः प्रैष्यः "प्रेष्यः इत्यपि" भुजिष्यः परिचारकः एकादश दासस्य । प्रैष्य इत्यत्र प्रादूहोढेति वृद्धिः ॥१७॥ पराचितः "पराजितोऽपि । परैराजीयते स्म" परिस्कंदः "परिष्कंदः परेश्चेति वा षत्वम् । परिष्कन्नः परिस्कन्नश्च इत्यपि" परजातः परैधितः चत्वारि

मंदस्तुंदपरिमृजं आलस्यः शीतकोऽलसोऽनुष्णः ॥ १८ ॥
दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्च ॥
चंडालप्लवमातंगदिवाकीर्तिजनंगमाः ॥ १९ ॥
निषादश्वपचावंतेवासिचांडालपुक्कसाः ॥
भेदाः किरातशबरपुलिंदा म्लेच्छजातयः ॥ २० ॥
व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः ॥
कौलेयकः सारमेयः कुक्कुरो मृगदंशकः ॥ २१ ॥
शुनको भषकः श्वा स्यादलर्कस्तु स योगितः ॥
श्वा विश्वकद्रुर्मृगयाकुशलः सरमा शुनी ॥ २२ ॥

परेण संवर्धितस्य । परैराचीयते वर्ध्यते पराचितः । मंदः तुंदपरिमृजः "घञि तुंदपरिमार्जोऽपि ।" आलस्यः शीतकः अलसः अनुष्णः षट् अलसस्य । अलसमस्त्यस्य अलसः अर्श आद्यच् । "अलस एव आलस्यः स्वार्थे ष्यञ् । अणि आलस इत्यपि" ॥ १८ ॥ दक्षः चतुरः पेशलः पटुः सूत्थानः उष्णः षट् दक्षस्य । "उष्णत्वं शीघ्रकारित्वमस्यास्तीत्युष्णः ।" चंडालः प्लवः मातंगः दिवाकीर्तिः जनंगमः "जलंगम इत्यपि" ॥ १९ ॥ निषादः । निषादः स्वरभेदेऽपि चंडाले धीवरांतर इति कोशांतरे । श्वपचः "श्वपाक इत्यपि" अंतेवासी चांडालः पुक्कसः । "पुक्कसः श्वपचेऽधम इति मेदिनी" दश चांडालस्य । अत्रावांतरभेदोऽस्ति किंचित्सोऽनादृतः । किरातादयस्त्रयो म्लेच्छजातयश्चंडालानां भेदाः । किरति शरान् किरातः । अरण्यचरा एते । "पुलिंदः कथ्यते म्लेच्छे पुलिंद्रोऽपि निगद्यते इति तारपालः" ॥ २० ॥ व्याधः मृगवधाजीवः मृगयुः लुब्धकः चत्वारि व्याधस्य । विध्यति मृगान्व्याधः । कौलेयकः सारमेयः कुक्कुरः "कुकुर इत्यनादिकोशः । कुर्कुर इति राजमुकुटः ।" मृगदंशकः ॥ २१ ॥ शुनकः भषकः श्वा शुनकस्य । श्वानौ । "कुक्कुरस्तु शुनिः श्वानः कपिलो मंडलः शुन इति वाचस्पतिः ।" योगितः प्रयोगेण उन्मत्तत्वं प्रापितः श्वा अलर्कः स्यात् "अलक इति मुकुटः" एकम् । यो मृगयाकुशलः श्वा स विश्वकद्रुरित्येकं "पारधी कुत्रा इति ख्यातस्य । विश्वं कंदते । कदि आह्वाने ।" शुनी सरमा स्यात् एकम् । सरमा देवशुनी । सामान्याभिधानं तूपचारात् ॥ २२ ॥ यो ग्राम्यः सूकरः

विट्चरः सूकरो ग्राम्यो वर्करस्तरुणः पशुः ॥
आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम् ॥२३॥
दक्षिणारुर्लुब्धयोगाद्दक्षिणेर्मा कुरंगकः ॥
चौरैकागारिकस्तेनदस्युतस्करमोषकाः ॥ २४ ॥
प्रतिरोधिपरास्कंदिपाटच्चरमलिम्लुचाः ॥
चौरिका स्तैन्यचौर्ये च स्तेयं लोप्त्रं तु तद्धने ॥ २५ ॥
वीतंसस्तूपकरणं बंधने मृगपक्षिणाम् ॥
उन्माथः कूटयंत्रं स्याद्वागुरा मृगबंधनी ॥ २६ ॥

स विट्चरः स्यात् एकं "गांवडुकर इति ख्यातस्य।" यस्तरुणः पशुरजादिः स वर्करः एकं "बकरा इत्यादि ख्यातस्य तरुणपशुमात्रस्य।" आच्छोदनं मृगव्यं आखेटः मृगया चत्वारि पापर्द्धेः "शिकारी इति ख्यातायाः। मृगया स्त्रियाम्" ॥ २३ ॥ लुब्धयोगात् लुब्धकसंबंधाद्दक्षिणारुर्दक्षिणे पार्श्वेऽरुर्व्रणमस्य स कुरंगको दक्षिणेर्मा स्यात्। व्याधेन कृतव्रण इत्यर्थः एकम्। दक्षिणेर्माणौ। चौरः "पचाद्यचि चोर इत्यपि।" ऐकागारिकः। एकमसहायं अगारं प्रयोजनमस्य। ऐकागारिकट् चौरे इति निपातनात् साधुः। स्तेनः दस्युः तस्करः मोषकः ॥ २४ ॥ प्रतिरोधिः परास्कंदिः पाटच्चरः "पटच्चर इत्यपि"। "चोरजीर्णपटयोः पटच्चर इति नामानुशासनम्"। मलिम्लुचः दश चोरस्य। चौरिका "चोरिकेत्यपि"। स्तैन्यं स्तेयम्। "स्तेनस्य भावः कर्म वा स्तैन्यमिति ष्यञंतं केचिदिच्छंति। स्तेनाद्यन्नलोपश्चेति वार्तिकेन स्तेयमिति च सुसाधु। स्तेयं स्तैन्यं च चौर्ये स्याच्चौरिकाचोरिके स्त्रियामिति वाचस्पतिः"। चौर्यं चत्वारि स्तेयस्य। चौरस्य भावः चौरिका। चौर्यं धनं लोप्त्रं स्यात्। "लोत्रम्। लोत्रमश्रुणि चोरित इति विश्वः। लोतमिति जटाधरः।" एकम् ॥ २५ ॥ मृगपक्षिणां बंधननिमित्तं यदुपकरणं पाशजालादि स वीतंस इत्येकम् "वितंस इत्यपि।" उन्माथः कूटयंत्रं द्वे मृगपक्षिबंधनार्थं छलेन यद्यंत्रं निवेश्यते तत्र "सांपळा इति ख्याते"। वागुरा मृगबंधनी द्वे जालीकृतरज्जुविशेषे "मृगांचें जाळें इति ख्याते" ॥ २६ ॥ शुल्बं "शुल्बेत्यपि ङीषंतापि" वराटकं

शुल्बं वराटकं स्त्री तु रज्जुस्त्रिषु वटी गुणः ॥
उद्घाटनं घटीयंत्रं सलिलोद्वाहनं प्रहेः ॥ २७ ॥
पुंसि वेमा वायदंडः सूत्राणि नरि तंतवः ॥
वाणिर्व्यूतिः स्त्रियौ तुल्ये पुस्तं लेप्यादिकर्मणि ॥२८॥
पांचालिका पुत्रिका स्याद्वस्त्रदंतादिभिः कृता ॥
(जतुत्रपुविकारे तु जातुषं त्रापुषं त्रिषु ॥) २९ ॥(१)
पिटकः पेटकः पेटा मंजूषाऽथ विहंगिका ॥

रज्जुः वटी गुणः पंच रज्जोः "सुंब दोरी चऱ्हाट इति ख्यातायाः ।" तत्र वराटकोऽस्त्रियाम् । रज्जुः स्त्रियाम् । वटी त्रिषु । रज्जुः शुल्बा वराटो नेति रत्नकोशः । "सुम्यं वटाकर इति स्वामिपाठः ।" प्रहेः कूपात्सलिलमूर्ध्वं वाह्यते येन तस्मिन् यंत्रे "रहाट, लाट इति ख्याते" उद्घाटनं घटीयंत्रं चेति द्वयमित्यर्थः ॥ २७ ॥ वेमा "वेम इत्यपि" वायदंडः "वापदंड इत्योष्ठ्यमध्योऽपि" द्वे वस्त्रव्यूतिदंडस्य "कोष्ट्याचें धोटें इति ख्यातस्य" । वयंति तंतूननेन वेमा । वेमानौ । ऊयते इति वायः वानं तदर्थो वायदंडः तालव्यमध्यः । सूत्राणि तंतवः द्वे "सूत इति ख्यातस्य । सूत्रतंतुरिति समस्तं हाराबल्याम्" । तंतुः पुंसि । वाणिः व्यूतिः "व्युतिरिति द्विरूपकोशः । विशिष्टा ऊतिर्व्यूतिः" द्वे तंतुवानस्य "विणणें इति ख्यातस्य"। लेप्यं मृदा पुत्तलिकादिकरणम् । आदिना काष्ठपुत्तलिकाकर्म गृह्यते तत्र पुस्तमित्येकम् । "यदुक्तम् । मृदा वा दारुणा वाथ वस्त्रेणाप्यथ चर्मणा । लोहरत्नैः कृतं वापि पुस्तमित्यभिधीयत इति" ॥ २८ ॥ वस्त्रदंतादिभिः कृता पुत्रिका पांचालिका स्यात् । "पंचालिकेत्यपि" पंचभिर्वर्णैरल्यते भूष्यते । घञ् । एकं "बाहुली इति ख्यातस्य" । पुत्र इवेति कन् । दंतो गजदंतः आदिना चर्मकाष्ठपृच्छिलेत्यादिग्रहणम् । जतु लाक्षा तद्विकारो जातुषम् । त्रपु वंगं तद्विकारस्त्रापुषम् । एकैकम् । त्रपुजतुनोः षुक् ॥ २९ ॥ पिटकः पेटकः पेटा "पेडेति मुकुटः । पीडेति स्वामी" मंजूषा चत्वारि वस्त्रालंकारादिस्थापनार्थं कृताया मंजूषायाः "पेटी इति ख्यातायाः ।" आद्यौ पेटारिकायां परौ महत्यामिति स्वामी । विहंगिका भारयष्टिः द्वे शिक्याधारलगुडस्य "खुंटी

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

भारयष्टिस्तदालंबि शिक्यं काचोऽथ पादुका ॥ ३० ॥
पादूरुपानत्स्त्री सैवानुपदीना पदायता ॥
नध्री वध्री वरत्रा स्यादश्वादेस्ताडनी कशा ॥ ३१ ॥
चांडालिका तु कंडोलवीणा चंडालवल्लकी ॥
नाराची स्यादेषणिका शाणस्तु निकषः कषः ॥ ३२ ॥
व्रश्चनः पत्रपरशुरीषिका तूलिका समे ॥
तैजसावर्तनी मूषा भस्त्रा चर्मप्रसेविका ॥ ३३ ॥

इत्यादिख्यातस्य ।" इयं भारोद्वाहनार्था चतुर्दंडिकेति सभ्याः । शिक्या- भारस्कंधग्राह्ययोर्लगुड इति द्रविडाः । विहंगमेत्यपि पाठः । तस्यां भारयष्ट्या- मालंबते तत्तदालंबि शिक्यं काचः स्यात् । काचः शिक्ये मणौ नेत्ररोगभेदे मृदंतर इति विश्वः । द्वे आलंबमानस्य रज्जुपंजरस्य "शिंकें इति ख्यातस्य ।" पादुका ॥ ३० ॥ पादूः उपानत् त्रयमपि स्त्रियां पादत्राणस्य "जोडा इति ख्यातस्य ।" सैवोपानत् पदायता पदवत् आयता पादायामेन बद्धा अनु- पदीना एकं अनुरायामे सादृश्ये वा । अनुपदं बद्धा अनुपदीना उपानत् इति कौमुद्यामुक्तम् । "वाहाण इति ख्यातस्य" । नध्री वध्री वरत्रा त्रयं चर्ममय्या रज्ज्वाः "वाधी इति ख्याताया:" । अश्वादेस्ताडनी रज्जुः कशा स्यात् एकं "जेरबंद इति ख्यातस्य । आदिना उष्ट्रगर्दभचोरादिग्रहः" ॥ ३१ ॥ चांडालिका "चंडालिकेत्यपि" कंडोलवीणा "कंटोलवीणेत्यपि कंडोलीति पृथगपि" चंडालवल्लकी त्रयं किनरीति ख्याताया अंत्यजवी- णायाः । नाराची एषणिका द्वे स्वर्णकाराणां नाराचाकृतिर्या लोहशलाका तत्र "कांटा, तराजू इति ख्याते ।" शाणः निकषः कषः त्रीणि स्वर्णादि यत्र घर्षणेन परीक्ष्यते तस्याः शिलायाः "कसोटी, निसाणा इत्यादि- ख्यातायाः" ॥ ३२ ॥ व्रश्चनः पत्रपरशुः द्वे स्वर्णादिच्छेदनार्थस्य परशोः "कानस इति ख्यातस्य ।" ईषिका "इषिका इषीका इत्यपि" तूलिका द्वे शलाकाभेदस्य "सळई इति ख्यातस्य ।" तैजसं आवर्त्यते यत्र सा तैजसा- वर्तनी । स्वर्णादिपाकार्थः पात्रविशेषः मूषा स्यात् "मूस इति ख्याता" । "मूषा मूषी मुषी । मूषा त्वावर्तनी मूषीति शब्दार्णवः । मुष स्तेय इत्यस्मा- द्भिदाद्यङि ह्रस्वादिरपि । ह्रस्वा मुषा मुषी ।" एकम् । भस्त्रा चर्मप्रसेविका । चर्मप्रसेवक इत्यपि" द्वे अग्निज्वलनार्थस्य चर्मप्रसेवकस्य "भाता इति ख्यातस्य"

आँस्फोटनी वेधनिका कृपाणी कर्तरी समे ॥
वृक्षादनी वृक्षभेदी टंकः पाषाणदारणः ॥ ३४ ॥
क्रकचोऽस्त्री करपत्रमारा चर्मप्रभेदिका ॥
सूर्मी स्थूणाऽयःप्रतिमा शिल्पं कर्म कलादिकम् ॥ ३५ ॥
प्रतिमानं प्रतिबिंबं प्रतिमा प्रतियातना प्रतिच्छाया ॥
प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात् ॥ ३६ ॥
वाच्यलिंगाः समस्तुल्यः सदृक्षः सदृशः सदृक् ॥
साधारणः समानश्च स्युरुत्तरपदे त्वमी ॥ ३७ ॥

॥ ३३ ॥ आस्फोटनी "लास्फोटनी। वेधनी तु लास्फोटन्यां स्फोटनी वृषदंशिकेति वाचस्पतिः" वेधनिका द्वे मण्यादेर्वेधोपयुक्तस्य शस्त्रभेदस्य "सामता इति ख्यातस्य" कृपाणी कर्तरी द्वे स्वर्णपात्रादि विच्छिद्यते येन तस्य कातर इति ख्यातस्य। वृक्षादनी वृक्षभेदी द्वे वृक्षभेदनार्थस्य शस्त्रभेदस्य "वांकस, तासणी इति ख्यातस्य"। टंकः "तंक इत्यपि" पाषाणदारणः द्वे पाषाणदारणार्थस्य घनभेदस्य "टांकी इति प्रसिद्धस्य" ॥ ३४ ॥ क्रकचः करपत्रं द्वे काष्ठादिविदारणार्थस्य करवत इति ख्यातस्य। आरा चर्मप्रभेदिका द्वे चर्मखंडनार्थस्य शस्त्रभेदस्य आरी इति ख्यातस्य। सूर्मी "सूर्मिरिति वा" स्थूणा अयःप्रतिमा त्रयं लोहप्रतिमायाः। कला गीतनृत्यादिकं यत्कर्म तच्छिल्पम्। आदिना रथकारादिकर्म ॥ ३५ ॥ प्रतिमानं प्रतिबिंबं प्रतिमा प्रतियातना प्रतिच्छाया प्रतिकृतिः अर्चा प्रतिनिधिः अष्टौ प्रतिमायाः। "प्रतिकृत्य मीयतेऽनेन प्रतिमानम्। माङ् माने"। प्रतिनिधिः पुंसि। उपमा उपमानं द्वे उपमितकरणस्य। "भावे करणे च। येनोपमीयते या चोपमितिस्तयोरेते नामनी इत्यर्थः। केचित्तु पूर्वान्विते इत्याहुः" ॥ ३६ ॥ समादिसप्तकं समांतरस्य। "सह मानेन वर्तते समानं मानमस्येति वा समानः। एते वाच्यलिंगाः"। सदृक् शांतः। अमी निभसंकाशादयः उत्तरपदे स्थिताः सदृशपर्याया वाच्यलिंगाश्च स्युः ॥ ३७ ॥ यथा पितृनिभः पुत्रः नित्यसमासोऽयं पित्रा सदृश इत्यर्थः। मातृनिभा कन्या मातुः सदृशीत्यर्थः। आदिना भूतरूपकल्पादिग्रहः। "यथा पितृभूतः पितृरूपः। पितृकल्पः।"

निभसंकाशनीकाशप्रतीकाशोपमादयः ॥
कर्मण्या तु विधाभृत्याभृतयो भर्म वेतनम् ॥ ३८ ॥
भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि ॥
सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा ॥ ३९ ॥
गंधोत्तमा प्रसन्नेराकादंबर्यः परिस्रुता ॥
मदिरा कश्यमद्ये चाप्यवदंशस्तु भक्षणम् ॥ ४० ॥
शुंडापानं मदस्थानं मधुवारा मधुक्रमाः ॥
मध्वासवो माधवको मधु माध्वीकमद्वयोः ॥ ४१ ॥

कर्मण्या विधा भृत्या भृतिः भर्म वेतनम् ॥ ३८ ॥ भरण्यं "भरण्येत्यपि" भरणं मूल्यं निर्वेशः पणः एकादश वेतनस्य । सुरा हलिप्रिया हाला परिस्रुत् वरुणात्मजा ॥ ३९ ॥ गंधोत्तमा प्रसन्ना इरा कादंबरी परिस्रुता मदिरा कश्यं मद्यं त्रयोदश मद्यस्य । कदंबे जातो रसः कादंबस्तं राति कादंबरी ।" तत्र गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरेति वचनात् सुरादि द्वयं गौड्यादित्रिविधमद्यस्य । शेषं मद्यमात्रस्येत्येके । पानरुचिजननार्थं यद्व्यंजनं भक्ष्यते सोऽवदंश इत्येकं "भर्जितचणकादिभक्षणस्य" ॥ ४० ॥ शुंडापानं मदस्थानं द्वे मद्यगृहस्य । "शुंडा पानं इति पृथगपि । शुंडा पानगृहे मता । अ[illegible]बुहस्तिनीवेश्याहस्तिहस्तसुरासु चेति मेदिनी । शुंडापि जलहस्तिन्यां मदिराकरिहस्तयोरिति विश्वः । पानं पीतिभाजनरक्षणे इति मेदिनी ।" पीयतेऽस्मिन्पानम् । मधुवारः मधुक्रमः द्वे मधुपानपरिपाट्याः । "मधुनो वारः समयः मधुवारः ।" मध्वासवः माधवकः मधु माध्वीकम् । "मार्द्वीकमित्यपि । मृद्वीका द्राक्षा तस्याः विकारः । तस्यः विकार इत्यण् ।" चत्वारि मधुकपुष्पोद्भवस्य मद्यस्य । "द्वौ द्वौ पर्यायावित्यपि मतम् । मार्द्वीकमिति पाठे मध्वादि द्वयं द्राक्षारसस्य ।" तत्र माध्वीकं मधु च द्वयोः न किंतु क्लीबे एव ॥ ४१ ॥ मैरेयम् । मिरायां देशविशेषे ओषधिविशेषे वा भवम् । मद्यादिभ्यो ढक् । आसवः सीधुः "तालव्यादिरपि शीधुरिति । यद्यपि शीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत् । मैरेयं धातकीपुष्पगुडधानांबुसंहितमिति माधवः । तथापि भेदमनादृत्योक्तम्" त्रयमिक्षुशाकादिजन्यस्य मद्य-

मैरेयमासवः सीधुर्मेदको जगलः समौ ॥
संधानं स्यादभिषवः किण्वं पुंसि तु नग्नहूः ॥ ४२ ॥
कारोत्तरः सुरामंड आपानं पानगोष्ठिका ॥
चषकोऽस्त्री पानपात्रं सरकोऽप्यनुतर्षणम् ॥ ४३ ॥
धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत्समाः ॥
स्युर्लग्नकाः प्रतिभुवः सभिका द्यूतकारकाः ॥ ४४ ॥
द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि ॥
पणोऽक्षेषु ग्लहोऽक्षास्तु देवनाः पाशकाश्च ते ॥ ४५ ॥

विशेषस्य । सीधुरस्त्रियाम् । आसवः पुंसि । मेदकः जगलः द्वे सुराकल्कस्य । मद्यभेदस्येत्येके । "जगलो मदनद्रुमे । मेदके पिष्टमद्ये चेति कोशांतरम्" । संधानं अभिषवः द्वे मद्यसंधानस्य । फलवंशांकुरादिकं दीर्घकालं यत्संधीयते तस्येत्येके । किण्वं "कण्वमित्यपि" नग्नहूः द्वे तंडुलादिद्रव्यकृतसुराबीजस्य । "मत्तनग्नकृताह्वानस्येत्यन्ये ।" नग्नहौ ॥ ४२ ॥ सुराया मंड अग्रभागः कारोत्तरः "कारेण क्रियया उत्तरः कारोत्तरः । कारोत्तम इत्यपि" एकम् । आपानं पानगोष्ठिका द्वे पानार्थायाः सभायाः । "आ संभूय पिबंत्यत्र आपानम्" । चषकः पानपात्रं द्वे "मद्यपात्रस्य । चषकोऽस्त्री सुरापात्रे मधुमद्यप्रभेदयोरिति मेदिनी ।" सरकः अनुतर्षणं द्वे मद्यपानस्य । अपिशब्दात्सरकोऽप्यस्त्री । सरकं वा नानुतर्षो नेति रत्नकोशः । सरकः सीधुपानेक्षुशीधुनो मद्यभाजन इत्यजयः" ॥ ४३ ॥ धूर्त्तः "धार्त इत्यपि पाठः । धावनेन आर्त्तः ।" अक्षदेवी कितवः अक्षधूर्त्तः द्यूतकृत् पंच द्यूतकृतः "सोंगटीबाज, जुवेबाज इति ख्यातस्य ।" अक्षैर्दीव्यति अक्षदेवी इन्नंतः । लग्नकः प्रतिभूः द्वे ऋणादौ प्रतिनिधिभूतस्य "जामीन इति ख्यातस्य । प्रति प्रतिनिधिर्भवति प्रतिभूः ।" सभिकाः द्यूतकारकाः द्वयं ये द्यूतं कारयंति तेषाम् । "सभा द्यूतमाश्रयत्वेनास्यास्ति सभिकः" ॥ ४४ ॥ द्यूतः अक्षवती कैतवं पणः चत्वारि द्यूतस्य । "अक्षाः पाशकाः संत्यस्यां सा अक्षवती ।" पणः ग्लहः इति द्वे द्यूतजये यत् भाषाबंधेन ग्राह्यं तस्य । अक्षः देवनः पाशकः त्रयं शारिपरिणयने हेतुभूतस्य पाशस्य "फांसे इति ख्यातस्य" ॥ ४५ ॥ शारीणामितस्ततो नयने परिणाय इत्येकम् । अस्त्रियामित्यस्य अष्टापदेन शब्देन

परिणायस्तु शारीणा समंतान्नयनेऽस्त्रियाम् ॥
अष्टापदं शारिफलं प्राणिद्यूतं समाह्वयः ॥ ४६ ॥
उक्ता भूरिप्रयोगत्वादेकस्मिन्येऽत्र यौगिकाः ॥
ताद्धर्म्यादन्यतो वृत्तावूह्या लिंगांतरेऽपि ते ॥ ४७ ॥

॥ इति शूद्रवर्गः ॥ १० ॥

---

इत्यमरसिंहकृतौ नामलिंगानुशासने ॥
द्वितीयः कांडो भूम्यादिः सांग एव समर्थितः ॥ १ ॥

संबंधः । अष्टापदं शारिफलं द्वे शारीणामाधारस्य कोष्टकयुक्तस्य वस्त्रादेः "सारीपट इति ख्यातस्य ।" शारयस्तु काष्ठादिरचितो द्यूतोपकरणविशेषः सोंगटी इति लौकिकभाषायां प्रसिद्धः । प्राणिद्यूतं प्राणिनां मेषकुक्कुटादीनां द्यूतं मिथो युद्धलक्षणः क्रीडाविशेषः समाह्वयः । अप्राणिभिः कृतं यत्तु तल्लोके द्यूतमुच्यते । प्राणिभिः क्रियते यत्तु सविज्ञेयः समाह्वय इत्युक्तेः । एकम् ॥४६॥ अत्र केषांचिल्लिंगभेदविधानाभावात्प्राप्तमपूर्णत्वं परिहरति उक्ता इति । अत्र शूद्रवर्गे यौगिकाः कुंभकारमालाकारप्रभृतयः शब्दाः काव्यपुराणादिषु पुंस्येव भुरिप्रयोगत्वात्प्रचुरप्रयोगदर्शनादेकस्मिन्नेव लिंगे उक्ता निर्दिष्टास्ते ऽन्यतोऽन्यत्र स्त्रीत्वादिविशिष्टे विशिष्यवृत्तौ सत्यां ताद्धर्म्यात् विशिष्टानां विशेष्यधर्मत्वाल्लिंगांतरे स्त्रीलिंगादावप्यूहनीयाः । अपिशब्दात् रूढा अपि करणकुलालादयो जातिवचनत्वात् पुंसि स्त्रियां च वर्तते इति ज्ञेयम् । यस्याव-यवशक्य एवार्थो बुध्यते स यौगिकः । यस्यावयवशक्तिमनपेक्ष्य समुदायश-क्तिमात्रेणार्थो बुध्यते स रूढः । तत्र यौगिको लिंगांतरे यथा । कुंभकारी स्त्री । कुंभकारं कुलम् । एवं मालाकारी । मालाकारम् । अण्णंतत्वात्स्त्रियां ङीप् । अयौगिको यथा । करणी । कुलाली । अत्र जातेरस्त्रीविषयादिति ङीष् ॥४७॥ इति शूद्रवर्गः ॥ १० ॥ श्रीमत्पमरविवेके महेश्वरेण विरचित एत्रायं भूम्या-दिद्वितीयः कांडः समाप्तः ॥

इति सटीकामरकोशस्य

द्वितीयं काण्डं समाप्तम् ॥

# अमरकोशद्वितीयकांडस्य वर्गानुक्रमेण श्लोकसंख्या.

| वर्गांकाः | वर्गनामानि. | मूलश्लोकाः | क्षेपकश्लोकाः | |
|---|---|---|---|---|
| १ | भूमिवर्गः .................. | १८ | १ | |
| २ | पुरवर्गः .................. | २० | ·॥· | |
| ३ | शैलवर्गः .................. | ८ | ·॥· | संकलनया वर्गाः मूलश्लोकाः |
| | | | | १० ७३३॥ |
| ४ | वनौषधिवर्गः ............ | १६९॥ | ० | |
| ५ | सिंहादिवर्गः .............. | ४३ | २॥ | क्षेपकश्लोकाः एवं |
| | | | | १२ ७४५॥ |
| ६ | मनुष्यवर्गः .............. | १३९॥ | १ | |
| ७ | ब्रह्मवर्गः ................ | ५८ | ५ | |
| ८ | क्षत्रियवर्गः .............. | ११९॥ | ० | |
| ९ | वैश्यवर्गः ................ | १११ | १॥ | |
| १० | शूद्रवर्गः ................ | ४७ | ० | |

अथ

# सटीकामरकोशस्य

## तृतीयं काण्डम्.

विशेष्यनिघ्नैः संकीर्णैर्नानार्थैरव्ययैरपि ॥
लिंगादिसंग्रहैर्वर्गाः सामान्ये वर्गसंश्रयाः ॥ १ ॥
स्त्रीदाराद्यैर्यद्विशेष्यं यादृशैः प्रस्तुतं पदैः ॥
गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः ॥ २ ॥

श्रीगणेशाय नमः ॥ ॥ अथ तृतीयकांडो व्याख्यायते । तत्र वक्ष्यमाणवर्गानाह । विशेष्यनिघ्नैरिति ॥ सामान्ये साधारणत्वात्सामान्याख्येऽस्मिन्कांडे विशेष्यनिघ्नैर्विशेष्यं स्त्रीदारादि पूर्वोक्तं तदधीनलिंगवचनैः सुकृत्यादिभिः शब्दैः तथा संकीर्णैः परस्परविजातीयार्थैः कर्मपारायणादिभिः तथा नानार्थैः अनेकार्थेषु वर्तमानैर्नाकलोकादिभिः अव्ययैराङादिभिर्लिंगसंग्रहैः स्त्रियामीदूद्विरामैकाजित्यादिभिरादिशब्दान्नामसंग्रहैश्च लंकाशेफालिकेत्यादिभिः शब्दैरुपलक्षितास्तत्तन्नामका वर्गाः वक्ष्यंत इति शेषः । ते च वर्गाः स्वतंत्रा नेत्याह । वर्गसंश्रया इति । वर्गाः संश्रया येषां ते । पूर्वोक्तस्वर्गादिवर्गसंबंधिन एवेत्यर्थः ॥ १ ॥ इह शास्त्रे रूपादिभेदेनैव प्रायशो लिंगनिर्णयः तद्वदेवात्रापि वर्गे स्यादिति भ्रमनिरासार्थं व्यापकं लक्षणमाह । स्त्रीदाराद्यैरिति । यादृशैः स्त्रीलिंगत्वादियुक्तैः स्त्रीदाराद्यैः पदैर्यद्विशेष्यं स्त्रीदारादिरूपं यथा प्रस्तुतं प्रक्रांतं तस्य विशेष्यस्य भेदका व्यावर्तका गुणद्रव्यक्रियाविशिष्टाः शब्दास्तथा स्युः । विशेष्यस्य यादृशे लिंगवचने तादृशलिंगवचना एव भवेयुरित्यर्थः । तत्र गुणः सुकृतादिस्तद्विशिष्टो यथा । सुकृतिनी स्त्री । सुकृतिनो दाराः । सुकृति कुलम् । द्रव्यं दंडादि तद्विशिष्टो यथा । दंडिनी स्त्री । दंडिनो दाराः । दंडि कुलम् । क्रिया पचनादिव्यापारस्तद्विशिष्टो यथा । पाचिका स्त्री । पाचका दाराः । पाचकं कुलम् ॥ २ ॥ सुकृती पुण्यवान् धन्यः त्रयं भाग्यसंपन्नस्य । "धन्या

सुकृती पुण्यवान् धन्यो महेच्छस्तु महाशयः ॥
हृदयालुः सुहृदयो महोत्साहो महोद्यमः ॥ ३ ॥
प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः ॥
वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि ॥ ४ ॥
पूज्यः प्रतीक्ष्यः साशयिकः संशयापन्नमानसः ॥
दक्षिणीयो दक्षिणार्हस्तत्र दक्षिण्य इत्यपि ॥ ५ ॥
स्युर्वदान्यस्थूललक्ष्यदानशौंडा बहुप्रदे ॥
जैवातृकः स्यादायुष्मानंतर्वाणिस्तु शास्त्रवित् ॥ ६ ॥

धाड्यामलक्योः स्याद्धन्यं पुण्यवति त्रिष्विति विश्वमेदिन्यौ । सुकृतमस्यास्ति सुकृती ।" धनं लब्धा धन्यः धनायार्ह इत्यर्थः । महेच्छः महाशयः द्वे उदारं चित्तं यस्य तस्य दयालोः । "आशयः स्यादभिप्राये मानसाधारयोरपीति मेदिनी ।" हृदयालुः सुहृदयः "सहृदय इति पाठः । अत्र प्रशस्तपरत्वं हृदयशब्दस्य । हृदयवान् हृदयिक इत्यपि" द्वे यस्य चित्तं प्रशस्तं तस्य । महोत्साहः महोद्यमः द्वे दुरापेऽपि कृत्येऽध्यवसितक्रियस्य । "महानुद्यमो ऽस्य महोद्यमः" ॥ ३ ॥ प्रवीणः निपुणः अभिज्ञः विज्ञः निष्णातः शिक्षितः वैज्ञानिकः "व्रीह्यादित्वाद्ठनि विज्ञानिक इत्यपि" कृतमुखः कृती कुशलः दश प्रवीणस्य । "कृतं कर्म प्रशस्तमस्य कृती" ॥ ४ ॥ पूज्यः प्रतीक्ष्यः द्वे । एतल्लक्ष्यम् । भक्तिः प्रतीक्ष्येषु कुलोचिता ते इति । सांशयिकः संशयापन्नमानसः द्वे संशयमापन्नं मानसं यत्र स्थाण्वादौ तस्य । तथा च संशयविषयीभूतोऽर्थः सांशयिक इति दीक्षिताः । संशयमापन्न इति ठञ् । दक्षिणीयः दक्षिणार्हः दक्षिण्यः "दाक्षिण्य इत्यपि" त्रीणि यो दक्षिणामर्हति तस्य ॥५॥ वदान्यः "वदन्य इत्यपि" स्थूललक्ष्यः "स्थूललक्ष इत्यपि" दानशौंडः बहुप्रदः चत्वारि दानशूरस्य । "मां याचस्वेति वदति वदान्यः । स्थूलैर्महद्भिर्लक्ष्यते स्थूललक्ष्यः ।" जैवातृकः आयुष्मान् द्वे "जैवातृकः पुमान्सोमे कृषकायुष्मतोस्त्रिष्विति विश्वमेदिन्यौ । अतिशयितमायुरस्यायुष्मान् ।" अंतर्वाणिः शास्त्रवित् द्वे शास्त्रज्ञस्य । "अंतर्वाणयति । वण शब्दे ।" ॥ ६ ॥ परीक्षकः कारणिकः द्वे प्रमाणैरर्थनिश्चायकस्य । "करणैश्चरति कारणिकः ।"

विधुरं तु प्रविश्लेषेऽभिप्रायश्छंद आशयः ॥ २० ॥
संक्षेपणं समसनं पर्यवस्था विरोधनम् ॥
परिसर्या परीसारः स्यादास्या त्वासना स्थितिः ॥२१॥
विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तरः ॥
संवाहनं मर्दनं स्याद्विनाशः स्याददर्शनम् ॥ २२ ॥
संस्तवः स्यात्परिचयः प्रसरस्तु विसर्पणम् ॥
नीवाकस्तु प्रयामः स्यात्सन्निधिः सन्निकर्षणम् ॥२३॥
लवोऽभिलावो लवने निष्पावः पवने पवः ॥
प्रस्तावः स्यादवसरस्त्रसरः सूत्रवेष्टनम् ॥ २४ ॥
प्रजनः स्यादुपसरः प्रश्रयप्रणयौ समौ ॥

च विश्लेषे विधुरं विकले त्रिष्विति मेदिनी ।" अभिप्रायः छंदः आशयः त्रीणि "अभिप्रायस्य ।" छंदोऽदंतः ॥ २० ॥ संक्षेपणं समसनं द्वे अविस्तारस्य । पर्यवस्था विरोधनं द्वे विरोधस्य । परिसर्या परीसारः "परिसार इति शब्दार्थकोशः" द्वे परितः सरणस्य । आस्या आसना स्थितिः त्रीणि "आसनस्य" ॥ २१ ॥ विस्तारः विग्रहः व्यासः त्रयं विस्तृतेः । विस्तारः शब्दसंबंधी चेद्विस्तर इत्येकम् । संवाहनं मर्दनं द्वे अंगमर्दनस्य । यथा पादसंवाहनम् । विनाशः अदर्शनं द्वे तिरोधानस्य ॥ २२ ॥ संस्तवः परिचयः द्वयं परिचितौ । प्रसरः विसर्पणं द्वे "व्रणादिप्रसरणस्य ।" नीवाकः प्रयामः द्वे धनधान्यादिषु जनानामादरातिशयस्य । नितरामुच्यते नीवाकः । सन्निधिः "सन्निधं" सन्निकर्षणं द्वे नैकट्यस्य । सन्निधिः पुंसि ॥ २३ ॥ लवः अभिलावः लवनं त्रयं धान्यादिच्छेदनस्य । निष्पावः पवनं पवः त्रीणि धान्यादीनां पूतीकरणस्य । संकीर्णत्वाल्लिंगसंकरः । प्रस्तावः अवसरः द्वे प्रसंगस्य । यथा । अवसरपठिता वाणीत्यादि । त्रसरः "तसर इति वा पाठः" सूत्रवेष्टनं द्वे तंतुवायकृतसूत्रवेष्टनभेदस्य तसरी इति प्रसिद्धस्य ॥ २४ ॥ प्रजनः उपसरः द्वे गर्भग्रहणस्य । प्रश्रयः प्रणयः द्वे प्रेम्णः । प्रसर इति वा पाठः । प्रसरः प्रणये वेगे इति मेदिनी । धीशक्तिः निष्क्रमः द्वे बुद्धिसामर्थ्ये । निष्क्रमो बुद्धिसंपत्ताविति विश्वः । "शुश्रूषा श्रवणं

धीशक्तिर्निष्क्रमोऽस्त्री तु संक्रमो दुर्गसंचरः ॥ २५ ॥
प्रत्युत्क्रमः प्रयोगार्थः प्रक्रमः स्यादुपक्रमः ॥
स्यादभ्यादानमुद्घात आरंभः संभ्रमस्त्वरा ॥ २६ ॥
प्रतिबंधः प्रतिष्टंभोऽवनायस्तु निपातनम् ॥
उपलंभस्त्वनुभवः समालंभो विलेपनम् ॥ २७ ॥
विप्रलंभो विप्रयोगो विलंभस्त्वतिसर्जनम् ॥
विश्रावस्तु प्रतिख्यातिरवेक्षा प्रतिजागरः ॥ २८ ॥
निपाठनिपठौ पाठे तेमस्तेमौ समुंदने ॥
आदीनवास्रवौ क्लेशे मेलके संगसंगमौ ॥ २९ ॥

चैव ग्रहणं धारणं तथा । ऊहापोहौ च विज्ञानं तत्त्वज्ञानं च धीगुणा इति ।" संक्रमः दुर्गसंचरः द्वे दुर्गमार्गस्य । "दुर्गादिप्रवेशक्रियाया वा ।" संक्रमते संक्रम्यते वाऽनेन संक्रमः । स न स्त्रियाम् । "दुर्गसंचार इत्यन्यत्र" ॥ २५ ॥ प्रत्युत्क्रमः "प्रत्युत्क्रांतिरित्यपि" प्रयोगः द्वे युद्धार्थमतिशायितोद्योगस्य । प्रयोगोऽर्थो यस्य सः । "प्रयुद्धार्थ इत्यपि पाठः । प्रत्युत्क्रमः प्रयुद्धार्थ इति भागुरिः ।" प्रक्रमः उपक्रमः द्वे प्रथमारंभस्य । अभ्यादानं उद्घातः आरंभः त्रयमारंभमात्रस्य । यल्लक्ष्यम् । उद्घातः प्रणवो यासामिति । प्रक्रमादिपंचाप्येकार्था वा । संभ्रमः त्वरा द्वे संवेगस्य । आवेगस्तु त्वरा त्वरीति वाचस्पतिः ॥ २६ ॥ प्रतिबंधः प्रतिष्टंभः द्वे कार्यप्रतिघातस्य । यथा मणिमंत्रादिप्रतिबंधादग्नेरनुष्णतेति । अवनायः निपातनं "निपातनमित्यपि पाठः" द्वे अधोनयनस्य । उपलंभः अनुभवः द्वे साक्षात्कारस्य । समालंभः विलेपनं द्वे कुंकुमादिना विलेपने ॥ २७ ॥ विप्रलंभः विप्रयोगः द्वे रागिणोर्विच्छेदस्य । विलंभः अतिसर्जनं द्वे अतिदानस्य । विश्रावः प्रतिख्यातिः "प्रविख्यातिरित्यपि" द्वे अतिप्रसिद्धेः । अवेक्षा प्रतिजागरः द्वयं वस्तूनां अवेक्षणस्य ॥ २८ ॥ निपाठः निपठः पाठः त्रीणि "पठनस्य ।" तेमः स्तेमः समुंदनं त्रयमार्द्रीभावस्य । आदीनवः आस्रवः क्लेशः त्रीणि क्लेशस्य । आस्रवंतींद्रियाण्यमेनेति । आश्रवस्तालव्यमध्य इति केचित् । मेलकः संगः संगमः त्रीणि "संगमस्य । ना मेलः संगमो ना वेत्यमरमाला" ॥ २९ ॥ संवीक्षणं

संवीक्षणं विचयनं मार्गणं मृगणा मृगः ॥
परिरंभः परिष्वंगः संश्लेष उपगूहनम् ॥ ३० ॥
निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम् ॥
प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः ॥ ३१ ॥
उपशायो विशायश्च पर्यायशयनार्थकौ ॥
अर्तनं च ऋतीया च हृणीया च घृणार्थकाः ॥ ३२ ॥
स्याद्व्यत्यासो विपर्यासो व्यत्ययश्च विपर्यये ॥
पर्ययोऽतिक्रमस्तस्मिन्नतिपात उपात्ययः ॥ ३३ ॥
प्रेषणं यत्समाहूय तत्र स्यात्प्रतिशासनम् ॥
स संस्तावः क्रतुषु या स्तुतिभूमिर्द्विजन्मनाम् ॥ ३४ ॥

"अन्वीक्षणं अन्वेषणं गवेषणं चेत्यपि ।" विचयनं मार्गणं मृगणा मृगः पंच तात्पर्येण वस्तूनां गवेषणस्य । परिरंभः "परीरंभ इत्यपि" परिष्वंगः संश्लेषः उपगूहनं चत्वारि आलिंगनस्य ॥ ३० ॥ निर्वर्णनं निध्यानं दर्शनं आलोकनं ईक्षणं पंच निरीक्षणस्य । "दर्शनालोकलक्षणमित्यपि पाठः ।" प्रत्याख्यानं निरसनं प्रत्यादेशः निराकृतिः चत्वारि निराकरणस्य ॥ ३१ ॥ उपशायः विशायः द्वौ पर्यायेणानुक्रमेण यत्प्रहरकादीनां शयनं तदेवार्थो ययोस्तौ तथा। अर्तनं ऋतीया हृणीया "ह्राणिया । मोहो वीज्या जुगुप्सा च हृणीया ह्राणिया घृणेति वाचस्पतिः । ह्रिणीया ह्रणिया चेति द्विरूपकोशामरमालयोः ।" घृणा चत्वारि जुगुप्सायाः । करुणाया इति कश्चित् । ऋतिः सौत्रो धातुः । जुगुप्सायामिति बहवः । कृपायामिति केचित् । घृणा जुगुप्साकृपयोरिति विश्वः ॥ ३२ ॥ व्यत्यासः विपर्यासः व्यत्ययः विपर्ययः "विपर्याय इति भरतमालायाम्" चत्वारि व्यतिक्रमस्य । पर्ययः अतिक्रमः अतिपातः उपात्ययः चत्वारि अतिक्रमस्य ॥ ३३ ॥ समाहूय यज्ञत्यादीनां प्रेषणं तत्र प्रतिशासनं स्यात् एकम् । क्रतुषु द्विजन्मनां छंदोगानां स्तुतिभूमिः स्तवनदेशः संस्तावः एकम् । समेत्य स्तुवंत्यत्र संस्तावः । यज्ञे समि स्तुव इति घञ् ॥ ३४ ॥ यस्मिन्काष्ठे काष्ठं निधाय तक्ष्यते तनूक्रियते स काष्ठरूप आधार

निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्धनः ॥
स्तंबघ्नस्तु स्तंबघनः स्तंबो येन निहन्यते ॥ ३५ ॥
आविधो विध्यते येन तत्र विष्वक्समे निघः ॥
उत्कारश्च निकारश्च द्वौ धान्योत्क्षेपणार्थकौ ॥ ३६ ॥
निगारोद्गारविक्षावोद्ग्राहास्तु गरणादिषु ॥ ३७ ॥
आरत्यवरतिविरतय उपरामेऽथास्त्रियां तु निष्ठेवः ॥
निष्ठ्यूतिर्निष्ठेवनं निष्ठीवनमित्यभिन्नानि ॥ ३८ ॥
जवने जूतिः सातिस्त्ववसाने स्यादथ ज्वरे जूर्तिः ॥
उदजस्तु पशुप्रेरणमकरणिरित्यादयः शापे ॥ ३९ ॥

उद्धनः एकम् । ऊर्ध्वं हन्यतेऽस्मिन् उद्धनः । उद्धनोत्याधानमिति सूत्रेण साधुः । स्तंबस्तृणगुच्छो येन निहन्यते स खनित्रविशेषः स्तंबघ्नः स्तंबघनः द्वे । खुरपें, विळा इति लौकिकभाषायाम् ॥ ३५ ॥ येन विध्यते तत्र शस्त्रादौ आविध इत्येकं "भ्रमरसूच्यादेः विंधणें इत्यादिख्यातस्य" विष्वक्समे सर्वतः समाने वृक्षे निघ इत्येकं "तुल्यारोहपरिणाहवृक्षादेः ।" उत्कारः निकारः द्वौ धान्यस्य उत्क्षेपणमर्थो ययोस्तौ तथा ॥ ३६ ॥ निगारादयो गरणादिषु । यथा गरणे अभ्यवहारे निगार इत्येकं "गिळणें इति ख्यातस्य ।" उद्गरणे वमने उद्गारः । "विक्षवणे" शब्दे विक्षावः इत्येकं "शिंक इति ख्यातायाः ॥ उद्ग्रहणे ऊर्ध्वीकृत्य ग्रहणे उद्ग्राहः "ढेंकर इति ख्यातः ।" एकैकम् ॥ ३७ ॥ आरतिः अवरतिः विरतिः उपरामः "उपरम इत्यपि" चत्वार्युपरतेः । निष्ठेवः निष्ठ्यूतिः निष्ठेवनं निष्ठीवनं चत्वारि मुखेन श्लेष्मोत्सर्गस्य । "क्लीबे निष्टेवम् ।" अभिन्नानि एकार्थानीत्यर्थः ॥ ३८ ॥ जवनं जूतिः द्वे वेगस्य । जू इति सौत्रो धातुः गतौ वेगे च । ऊतियूतिजूतीति सूत्रेण साधुः । सातिः अवसानं द्वे अंतस्य । ज्वरः जूर्तिः द्वे ज्वरस्य । पशूनां गवादीनां प्रेरणं उदजः स्यात् एकम् । शापे आक्रोशे द्योत्ये अकरणिरित्यादयः । आक्रोशे नञीति भावे करोतेरनिः । आदिशब्दादजीवनिः । "अजननिः अवग्राहः निग्राह इति ।" यथा आः पाप कथमकरण्या न लज्जसे । अजीवनिस्ते शठ भूयात् ॥ ३९ ॥ गोत्रांतेभ्यः अपत्यार्थप्रत्ययांतेभ्यः औपगवादिशब्देभ्यस्तस्य वृंदमित्यर्थे औपग-

गोत्रांतेभ्यस्तस्य वृंदमित्यौपगवकादिकम् ॥
आपूपिकं शाष्कुलिकमेवमाद्यमचेतसाम् ॥ ४० ॥
माणवानां तु माणव्यं सहायानां सहायता ॥
हल्या हलानां ब्राह्मण्यवाडव्ये तु द्विजन्मनाम् ॥४१॥
द्वे पर्शुकानां पृष्ठानां पार्श्वं पृष्ठ्यमनुक्रमात् ॥
खलानां खलिनी खल्याऽप्यथ मानुष्यकं नृणाम् ॥४२॥
ग्रामता जनता धूम्या पाश्या गल्या पृथक्पृथक् ॥
अपि साहस्रकारीषवार्मणाथर्वणादिकम् ॥ ४३ ॥

॥ इति संकीर्णवर्गः ॥ २ ॥

---

नानार्थाः केऽपि कांतादिवर्गेष्वेवात्र कीर्तिताः ॥

वकादिकं स्यात् । यथा । उपगोरपत्यानि पुमांसः औपगवास्तेषां समूह औपगवकम् । गोत्रोक्षेति वुञ् अकादेशेन साधुः । आदिशब्दाद्गार्गकं दाक्षकमित्यादि । एकैकम् । इतःपरमावर्गसमाप्तेर्वृंदमित्यधिकारः । अचेतसां जडानां अपूपादीनां वृंदं आपूपिकम् । शाष्कुलिकम् । साक्तुकम् । इत्यादि एकैकम् । अचित्तहस्तिधेनोष्ठगिति सूत्रेणेमे साधवः ॥ ४० ॥ माणवानां समूहो माणव्यम् । माणवा बालाः । सहायाः सखायस्तेषां समूहः सहायता । हलानां समूहो हल्या । एकैकम् । ब्राह्मण्यं बाडव्यं द्वे ब्राह्मणानां समूहस्य ॥ ४१ ॥ पर्शुका अस्थिविशेषास्तासां समूहः पार्श्वम् । पृष्ठानां समूहः पृष्ठ्यम् । यज्ञविषयेऽदः स्मरंति । खलिनी खल्या द्वे खलानां समूहस्य । नृणां मनुष्याणां समूहो मानुष्यकम् ॥ ४२ ॥ ग्रामाणां समूहो ग्रामता । जनानां समूहो जनता । धूमानां समूहो धूम्या । पाशानां समूहः पाश्या । गला बृहत्काशास्तेषां समूहो गल्या । सहस्राणां समूहः साहस्रम् । करीषाणां समूहः कारीषम् । करीषं शुष्कगोमयम् । वर्मणां समूहः वार्मणम् । वर्म कवचम् । अथर्वणां समूहः आथर्वणम् । एकैकम् । आदिशब्दाच्चार्मणमांगारं चार्मिणमित्यादि । चर्मिणां समूहश्चार्मिणम् ॥ ४३ ॥ इति संकीर्णवर्गः ॥ २ ॥ अथानेकार्थवर्गः ॥ ननु किमर्थमनेकार्था आरभ्यंते । तेषां प्रागुक्तवर्गेष्वभिहितत्वात् । यद्यत्र वक्ष्यंते तर्हि कुतः प्रागुक्ता इत्यत आह । नानार्था इति । अत्र

भूरिप्रयोगा ये येषु पर्यायेष्वपि तेषु ते ॥ १ ॥
आकाशे त्रिदिवे नाको लोकस्तु भुवने जने ॥
पद्ये यशसि च श्लोकः शरे खड्गे च सायकः ॥ २ ॥
जंबुकौ क्रोष्टुवरुणौ पृथुकौ चिपिटार्भकौ ॥
आलोकौ दर्शनद्योतौ भेरीपटहमानकौ ॥ ३ ॥
उत्संगचिह्नयोरंकः कलंकोऽकापवादयोः ॥
(तक्षको नागवर्धक्योरर्कः स्फटिकसूर्ययोः) ॥४॥ (१)

वक्ष्यमाणेषु कांतादिवर्गेष्वेव केऽपि नानार्था उक्ता नतु प्रागुक्तपर्यायेषु। यथा। मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽबुनोरिति। भूरिप्रयोगा यत्र कुत्रापि काव्यादिषु कविभिःप्राचुर्येण प्रयुक्ता ये नाकलोकादयः शब्दास्ते पूर्वोक्तेषु येषु पर्यायेषु दृश्यंते तेषु पर्यायेषु अपिशब्दादत्रापि कांतादिषु कीर्तिताः। यथा नाकशब्दः प्रचुरप्रयोगत्वात्प्राक् स्वर्गाकाशयोरुक्तोपि पुनरिहोक्तः। जंबुकशब्दस्तु सृगालपर्यायेष्वेवोक्तो नतु वरुणपर्यायेषु। भूरिप्रयोगत्वाभावात्। इह तु जंबुकौ क्रोष्टुवरुणावित्युभयत्रोच्यते ॥ १॥ नाक इत्येकं नाम ककारांतं आकाशे स्वर्गे च वर्तते। "न अकं दुःखमत्र नाकः नभ्राडिति सूत्रे निपातितः।" भुवने स्वर्गादौ जने च लोक इत्येकम्। "लोक्यते लोकः।" पद्ये अनुष्टुबादौ वृत्ते यशसि कीर्तौ श्लोक इत्येकम्। "श्लोक्यते श्लोकः। श्लोकृ संघाते। यशसि यथा। उत्तमश्लोको हरिः। शरे बाणे खड्गे च सायकः॥ २ ॥ क्रोष्टा सृगालः वरुणः प्रसिद्धः उभौ जंबुकशब्दवाच्यौ। "जंबुकः फेरवे नीचे पश्चिमाशापतावपीति मेदिनी।" चिपिटो भ्रष्टव्रीहितंडुलः पोहे इति लौकिकभाषायाम्। अर्भकः शिशुः तावुभौ पृथुकौ। पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवत् इति। दर्शनं प्रकाशश्चालोकौ। "आलोकस्तु पुमान् द्योते दर्शने बंदिभाषण इति मेदिनी। भेरीपटहं वाद्यविशेषौ। तूर्यांगत्वादेकवद्भावः। उभावानकौ। "आनकः पटहे भेर्यां मृदंगे ध्वनदंबुद इति मेदिनी" ॥ ३ ॥ उत्संगः क्रोडः तत्र चिह्ने चांकः। "अंको रूपकभेदांऽगचिह्नरेखाजिभूषणे। रूपकांशांतिकोत्संगस्थानेंऽकं पापदुःखयोरिति मेदिनी। चिह्ने दोषारोपे च कलंकः। "कलंकोऽकेऽपवादे च कालायसमलेऽपि चेति मेदिनी"। नागविशेषे त्वष्टरि च तक्षकः। स्फटिकसूर्ययोरर्क-

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः ॥
स्यात्पुलाकस्तुच्छधान्ये संक्षेपे भक्तसिक्थके ॥ ५ ॥
उलूके करिणः पुच्छमूलोपांते च पेचकः ॥
कमंडलौ च करकः सुगते च विनायकः ॥ ६ ॥
किष्कुर्हस्ते वितस्तौ च शूककीटे च वृश्चिकः ॥
प्रतिकूले प्रतीकस्त्रिष्वेकदेशे तु पुंस्ययम् ॥ ७ ॥
स्याद्भूतिकं तु भूर्निबे कत्तृणे भूस्तृणेऽपि च ॥
ज्योत्स्निकायां च घोषे च कोशातक्यथ कट्फले ॥८॥
सिते च खदिरे सोमवल्कः स्यादथ सिल्हके ॥

शब्दो वर्तते । " अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पताविति मेदिनी ॥४॥ मारुते वायौ वेधसि ब्रह्मणि ब्रध्ने सूर्ये क इत्येकाक्षरं नाम पुंसि । तद्रूपं तु । कः कौ काः इत्यादि देववत् । शिरसि जले च कमिति क्लीबम् । सुखेऽपि कम् । "को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे । मयूरेऽग्नौ च पुंसि स्यात्सुखशीर्षजलेषु कमिति मेदिनी । " तुच्छधान्ये तंडुलशून्ये धान्ये सांक्षेपे अविस्तारे भक्तसिक्थके अन्नावयये पुलाक इत्येकम् ॥ ५ ॥ करिणो गजस्य पुच्छमूलोपांते गुदाच्छादकमांसपिंडे उलूकः पक्षिभेदस्तत्र च पेचकः । कमंडलौ चकाराद्वर्षोपले दाडिमादौ च करकः । करकस्तु पुमान् पक्षिविशेषे दाडिमेऽपि च । द्वयोर्मेघोपले न स्त्री करकं च कमंडलाविति मेदिन्याम् । सुगते बुद्धे चकाराद्विघ्नराजे गरुडे च विनायकः ॥ ६ ॥ हस्ते हस्तप्रमाणे वितस्तौ च किष्कुः । प्रकोष्ठेऽप्यनपुंसक इति रुद्रः । शूककीटे शूकसदृशरोमव्याप्ते कीटविशेषे चकारादलौ कर्कटे वृक्षविशेषेऽष्टमराशौ च वृश्चिकः । प्रतिकूले च प्रतीकः । तत्र प्रतिकूले त्रिषु । अवयवे पुंसि ॥ ७ ॥ भूर्निबे किराततिक्ते कत्तृणं भूस्तृणं च गंधतृणविशेषौ तत्र भूतिकम् । ज्योत्स्निकायां पटोल्यां "घोषे अपमार्गे च" कोशातकी । कोशातकः कचे पुंसि पटोल्यां घोषके स्त्रियामिति मेदिनी ॥ ८ ॥ कट्फले कायफल इति ख्याते वृक्षभेदे शुक्लखदिरे च सोमवल्कः । सोम इव वल्को वल्कलमस्य । सिल्हके पण्यभेदे तिलकल्के निःस्नेहतिलचूर्णे च पिण्याकः । रामठे हिंगुनि । चकाराद्बाल्हिके

तिलकल्के च पिण्याको बाह्लीकं रामठेऽपि च ॥ ९ ॥
महेंद्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः ॥
रुक्तापशंकास्वातंकः स्वल्पेऽपि क्षुल्लकस्त्रिषु ॥१०॥
जैवातृकः शशांकेऽपि खुरेऽप्यश्वस्य वर्तकः ॥
व्याघ्रेऽपि पुंडरीको ना यवान्यामपि दीपकः ॥ ११ ॥
शालावृकाः कपिक्रोष्टुश्वानः स्वर्णेऽपि गैरिकम् ॥
पीडार्थेऽपि व्यलीकं स्यादलीकं त्वप्रियेऽनृते ॥ १२ ॥
शीलान्वयावनूके द्वे शल्के शकलवल्कले ॥
साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले ॥ १३ ॥

देशेऽश्वे धीरे च। "ह्रस्वमध्यं च बाल्हिकमिति। बाल्हीकमित्यपि" ॥ ९ ॥ व्यालग्राहाहितुंडिकः। कौशिको नकुले व्यालग्राहे गुग्गुलुशक्रयोः। विश्वामित्रे च कोशज्ञोलूकयोरपि कौशिक इति विश्वः। रुक् रोगः। तापः संतापः। शंका भयं अत्रातंक इति नाम। स्वल्पे अपिशब्दान्नीचकनिष्ठदरिद्रेष्वपि क्षुल्लकः। क्षुल्लकस्त्रिषु नीचेऽल्पे इति कोशांतरात् ॥ १० ॥ जैवातृकः पुमान्सोमे दीर्घायुःकृशयोस्त्रिषु। अपिशब्दात्पक्षिभेदे च वर्तकः। अपिशब्दादग्नौ दिग्गजादौ च पुंसि पुंडरीकः। सितांभोजादौ क्लीबे च। यवानी ओषधीभेदः अजमोदाख्यः। अपिशब्दाद्बर्हिचूडेऽपि दीपकः प्रकाशेऽपि। "दीप्यक इत्यपि" ॥ ११ ॥ कप्यादयः शालावृकाः स्युः। अपिशब्दाद्गेरू इति ख्याते धातौ च गैरिकम्। "गैरिकं धातुरुक्मयोरिति मेदिनी।" व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने इति विश्वः ॥ १२ ॥ शीलं स्वभावोऽन्वयो वंशः तत्रानूकमिति। "अनूकं तु कुले शीले पुंसि स्याद्गतजन्मनीति मेदिनी।" शकलं खंडम्। वल्कलं त्वक् द्वे शल्के इति। सुवर्णानां हेम्नः कर्षाणां साष्टे शतेऽष्टाधिकशतके निष्कः। सहाष्टभिर्वर्तत इति साष्टम्। सराजस्त्वयमितिवत्। यथा हेम्नि सुवर्णमात्रे उरसो वक्षसो भूषणे हेमपले च दीनारे सांव्यवहारिके द्रव्यभेदे च निष्कः। पलं कर्षचतुष्टयम्। गुंजानामशीतिः कर्षः ॥ १३ ॥ शमलं पुरीषम्। एनः पापम्। "त्रिषु पापाशये कल्कोऽस्त्री विट्किट्टेभदंतयोरिति विश्वः। कल्कोऽस्त्री

दीनारेऽपि च निष्कोऽस्त्री कल्कोऽस्त्री शमलैनसोः॥
दंभेऽप्यथ पिनाकोऽस्त्री शूलशंकरधन्वनोः ॥ १४ ॥
धेनुका तु करेण्वां च मेघजाले च कालिका ॥
कारिका यातनावृत्त्योः कर्णिका कर्णभूषणे ॥ १५ ॥
करिहस्तेंऽगुलौ पद्मबीजकोश्यां त्रिषूत्तरे ॥
वृंदारकौ रूपिमुख्यावेके मुख्यान्यकेवलाः ॥ १६ ॥
स्याद्दांभिकः कौक्कुटिको यश्चादूरेरितेक्षणः ॥
लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः ॥ १७ ॥
" भूभृन्नितंबवलयचक्रेषु कटकोऽस्त्रियाम् ॥
सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कंटकः ॥ १ ॥

घृततैलादिशेषे दंभे बिभीतके इति मेदिनी । पिनाकोऽस्त्री रुद्रचापे पांसुवर्षत्रिशूलयोरिति मेदिनी ॥ १४ ॥ करेण्वां हस्तिन्यां चकारान्नवसूतायां गवि धेनुका । मेघजाले मेघवृंदे चकाराद्देवताविशेषेऽपि कालिका । वृत्तिर्विवरणश्लोकः । यथा गृह्यकारिका । " यातनाकृत्योरित्यपि पाठः । कारिका नटयोषिति । कृतौ विवरणश्लोके शिल्पयातनयोरपि । नपुंसकं तु कर्मादौ कारके कर्त्तरि त्रिष्विति मेदिनी " ॥ १५ ॥ करिहस्तेंऽगुलौ गजशुंडाग्रे अंगुलौ कमलांतर्गतकोशे च कर्णिका । कर्णिका करिहस्ताग्रे करमध्यांगुलावपि । क्रमुकादिच्छटांशेऽब्जवराटे कर्णभूषण इति मेदिनी " । उत्तरे अतः परं स्त्रांतेभ्यः प्राक् शब्दास्त्रिषु त्रिलिंगा इत्यर्थः । " वृंदारकः सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिष्विति मेदिनी ।" मुख्यश्चान्यश्च केवलश्चेति एके स्युः ॥ १६ ॥ दांभिको मायावी । योऽदूरेरितेक्षणः स च कौक्कुटिक इत्युच्यते । संज्ञायां ललाटकुक्कुट्यौ पश्यति इति सूत्रेण ठक्प्रत्यये कौक्कुटिकलालाटिकशब्दौ साधू । कुक्कुटीशब्देन तत्पातार्हः स्वल्पदेशो लक्ष्यते । यो भृत्यः कोपप्रसादचिह्नज्ञानाय प्रभोर्भालं ललाटमेव पश्यति । भावदर्शीत्यपि पाठः । यश्च कार्याक्षमः प्रभोः कार्यं कर्तुमशक्तः तावुभौ लालाटिकौ । लालाटिकः सदालस्ये प्रभुभावनिदर्शिनीत्यजयः । इतो भूभृन्नितंबेत्यादयः केचिदमूलका एव पंच श्लोकाः अतस्तेषां व्याख्यानाभावः ॥ १७ ॥ इति कांताः ॥

("पाकौ पक्तिशिशू मध्यरत्ने नेतारि नायकः ॥
पर्यंकः स्यात्परिकरे स्याद्व्याघ्रेऽपि च लुब्धकः ॥ २ ॥
आर्द्रायामपि लुब्धक इत्यपि पाठः ॥
पेटकस्त्रिषु वृंदेऽपि गुरौ देश्ये च देशिकः ॥
खेटकौ ग्रामफलकौ धीवरेऽपि च जालिकः ॥ ३ ॥
पुष्परेणौ च किंजल्कः शुल्कोऽस्त्री स्त्रीधनेऽपि च ॥
स्यात्कल्लोलेऽप्युत्कलिका वार्द्धकं भाववृंदयोः ॥ ४ ॥
करिण्यां चापि गणिका दारकौ बालभेदकौ ॥
अंधेऽप्यनेडमूकः स्याट्टंकौ दर्पाश्मदारणौ ॥ ५ ॥") (१)
॥ (इति पंच क्षेपकाः ॥ इति कांतवर्गः) ॥ (२)
मयूखस्त्विट्करज्वालास्वलिबाणौ शिलीमुखौ ॥
शंखो निधौ ललाटास्थ्नि कंबौ न स्त्रींद्रियेऽपि खम् ॥१८॥
घृणिज्वाले अपि शिखे ॥इति खांताः॥ शैलवृक्षौ नगावगौ॥
आशुगौ वायुविशिखौ शरार्कविहगाः खगाः ॥ १९ ॥
पतंगौ पक्षिसूर्यौ च पूगः क्रमुकवृंदयोः ॥

अथ खांतानाह । त्विट्करज्वालासु मयूखः । अत्र त्विट् शोभा । करः किरणः। भ्रमरशरौ शिलीमुखौ । शिली शल्यं मुखे ययोस्तौ । निधौ निधिभेदे ललाटास्थ्नि कंबौ च शंखः । अपिशब्दादाकाशेऽपि शून्ये खम् । खमिंद्रिये पुरे क्षेत्रे शून्यबिंदौ विहायसि । संवेदने देवलोके शर्मण्यपि नपुंसकमिति मेदिनी ॥ १८ ॥ घृणिः किरणः । अपिशब्दाच्चूडायां मपदे बर्हिचूडायां च शिखा । इति खांतवर्गः । अथ गांतानाह । शैलवृक्षौ नगसंज्ञकावगसंज्ञकौ च । विशिखो बाणः । बाणार्कपक्षिणः खगशब्दवाच्याः । अर्केति ग्रहणमुपलक्षणम् ॥ १९ ॥ चकाराच्छालिमभेदे पतंगः । क्रमुको वृक्षभेदः । तत्फले तु क्लीबं पूगम् । वृंदं समूहः । पशवो हरिणाद्याः । अपिशब्दात् मृगशीर्षे मार्ग-

१ इदं पद्यचतुष्टयं तालपत्रपुस्तकेऽपि नास्ति ॥ २ इदमपि तालपत्रपुस्तके नास्ति । एवमग्रेऽपि ॥

पशवोऽपि मृगा वेगः प्रवाहजवयोरपि ॥ २० ॥
परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि ॥
गजेऽपि नागमातंगावपांगस्तिलकेऽपि च ॥ २१ ॥
सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु ॥
योगः सन्नहनोपायध्यानसंगतियुक्तिषु ॥ २२ ॥
भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः ॥
चातके हरिणे पुंसि सारंगः शबले त्रिषु ॥ २३ ॥
कपौ च प्लवगः शापे त्वभिषंगः पराभवे ॥

णायां च मृगः । जवो रहः । अपिशब्दाद्विष्ठादेर्बहिर्निर्गमेऽपि वेगशब्दः स्यात् ॥ २० ॥ कुसुमसंबंधिनि रेणौ परागः । स्नात्यनेन स्नानीयं गंधचूर्णविशेषः । आदिना सुरतादिश्रमशांतये कामशास्त्राद्युक्तं यत्कर्पूरादिचूर्णं तद्ग्रहः । अपिशब्दादुपरागेऽपि । परागः रजसि धूलौ । नागमातंगौ गजे वर्तेते । अपिशब्दात्काद्रवेयनागकेशरनागवल्लीहास्तिनपुरमेघमुस्तकादौ । नागः पुंसि । क्लीबं सीसलवंगयोः । अपिशब्दाच्चंडालेऽपि मातंगः । "अपिशब्दात्" नेत्रस्यांतेऽमहीने चापांगः । अपांगस्त्वंगहीने स्यान्नेत्रांते तिलकेऽपि चेति विश्वः ॥ २१ ॥ स्वभावः प्रकृतिः । निर्मोक्षस्त्यागः । निश्चये यथा । गृहाण शस्त्रं यदि सर्ग एष ते इति रघुः । अध्यायः काव्यादिविरामस्थानं सृष्टिर्निर्माणं एतेषु सर्गः । "सर्गस्तु निश्चयाध्यायमोहोत्साहात्मसृष्टिष्विति मेदिनी ।" सन्नहनं कवचः । उपायः सामादिः । ध्यानं चित्तवृत्तिनिरोधः संगतिः संगम इत्यादिषु योगशब्दः । "योगोऽपूर्वार्थसंप्राप्तौ संगतिध्यानयुक्तिषु । वपुःस्थैर्ये प्रयोगे च विष्कंभादिषु भेषजे । विश्रब्धघातके द्रव्योपायसन्नहनेष्वपि । कार्मणेऽपि चेति मेदिनी" ॥ २२ ॥ स्त्र्यादिभृतौ पण्यस्त्रीणाम् । आदिशब्दाद्धस्त्यश्वादिकर्मकराणां भृतौ मूल्ये पालने भरणे वा भोगः । पालनेऽभ्यवहारे च निर्वेशे पण्ययोषितीति विश्वः । अहेः सर्पस्य । शबले कर्बुरे त्रिलिंग्याम् । "सारंगः पुंसि हरिणे चातके च मतंगजे । शबले त्रिष्विति मेदिनी" ॥ २३ ॥ कपौ वानरे चकाराद्भेके सारथ्यादौ च प्लवगः । शापे आक्रोशे पराभवे तिरस्कारेऽभिषंगः । यानाद्यंगे रथशकटादीनामवयवे

यानाद्यंगे युगः पुंसि युगं युग्मे कृतादिषु ॥ २४ ॥
स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले ॥
लक्ष्यदृष्ट्या स्त्रियां पुंसि गौर्लिंगं चिह्नशेफसोः ॥ २५ ॥
शृंगं प्राधान्यसान्वोश्च वरांगं मूर्धगुह्ययोः ॥
भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु ॥ २६ ॥
इति गांताः ॥ परिघः परिघातेऽस्त्रेऽप्योघो वृंदेऽभसां रये॥
मूल्ये पूजाविधावर्घोंऽहोदुःखव्यसनेष्वघम् ॥ २७ ॥
त्रिष्विष्टेऽल्पे लघुः ॥ इति घांताः ॥ काचाः शिक्यमृद्भेदृग्रुजः ॥

युगः । युग्मे द्वये कृतत्रेतादिषु हस्तचतुष्टये औषधभेदे च युगम् ॥ २४ ॥ इषुः शरः । पशू सुरभिदृषौ । घृणिः रश्मिः । स्वर्गादीनां दशानां द्वंद्वैक्यम् । लक्ष्यदृष्ट्या प्रयोगानुसारेण गोशब्दः स्त्रियां पुंसि चोन्नेयः । यथा सुरभौ स्त्रियाम् । वृषभे पुंसि । गौः स्वर्गे वृषभे रश्मौ वज्रे शीतकरे पुमान् । अर्जुनीनेत्रदिग्बाणभूवाग्वादिषु योषितीति विश्वः । योषिति स्त्रीलिंगे । कोशांतरे तु । गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि । नृस्त्रियोः स्वर्गवज्रांबुरश्मिदृग्बाणलोमस्विति । शेफः शिश्नः । अनुमाने हरमूर्तिभेदे च लिंगम् । "लिंगं चिह्नेऽनुमाने च सांख्योक्तप्रकृतावपि । शिवमूर्तिविशेषेऽपि मेहनेऽपि नपुंसकमिति मेदिनी" ॥ २५ ॥ प्राधान्यं प्रभुत्वम् । सानुः शिखरम् । चकारात्पशोरवयवे शृंगम् । "शृंगं प्रभुत्वे शिखरे चिह्ने क्रीडांबुयंत्रके । पाषाणोत्कर्षयोश्चापि शृंगः स्यात्कूर्चशीर्षक इति मेदिनी ।" मूर्धा मस्तकः । गुह्यं योनिः । श्रीः संपच्छोभा । काम इच्छा च । माहात्म्यं ऐश्वर्यम् । यत्नः प्रयत्नः । अर्ककीर्ती सूर्ययशसी भगम् । "भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु । माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षेऽथ ना रवाविति मेदिनी" ॥ इति गांतवर्गः ॥ २६ ॥ अथ घांतानाह । परिघाते परितो हनने अस्त्रे लोहमयलगुडे अपिशब्दाद्योगभेदे च परिघः । अंभसां रये जलप्रवाहे ओघः । परंपरायां नृत्यभेदे च । मूल्ये पण्ये पूजोपहारे चार्घः । अंहः पापम् । दुःखं जरामरणादिकम् । व्यसनं मृगयाद्यूतादि । विपद्रागद्वेषादि वा तत्राघम् ॥ २७ ॥ इष्टे मनोज्ञेऽल्पेऽगुरौ लघुस्त्रिषु । "निःसारे च त्रिषु ।" इति घांताः ॥ ॥ घांतकथनानंतरं चकारांताः स्मृताः । शिक्यं दधिभांडादिलंबनार्थं रज्जुसमूह-

विपर्यासे विस्तरे च प्रपंचः पावके शुचिः ॥ २८ ॥
मास्यमात्ये चात्युपधे पुंसि मेध्ये सिते त्रिषु ॥
अभिष्वंगे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम् ॥२९॥
इति चांताः॥("प्रसन्ने भल्लुकेऽप्यच्छो गुच्छः स्तबकहारयोः
परिधानांचले कच्छो जलप्रांते त्रिलिंगकः ॥ १ ॥")(१)
इति क्षेपकश्छांतः ॥ केकिताक्ष्यावहिभुजौ दंतविप्रांडजा द्विजाः ॥
अजा विष्णुहरच्छागा गोष्ठाध्वनिवहा व्रजाः ॥ ३० ॥
धर्मराजौ जिनयमौ कुंजौ दंतेऽपि न स्त्रियाम् ॥
वलजे क्षेत्रपूर्द्वारे वलजा वल्गुदर्शना ॥ ३१ ॥

कृत आश्रयविशेषः । मृद्भेदो मृद्विशेषः । यच्छ्लक्ष्यम् । काचः काचो मणिर्मणिरिति । दृग्रुक् नेत्ररोगः पटलप्रायः । एते त्रयः काचाः । विपर्यासे वैपरीत्ये । चात्मतारणे प्रपंचः । पावकेऽग्नौ शुचिः पुंसि॥२८॥ मास्याषाढे अमात्ये सचिवे अत्युपधे उपधा धर्माद्यैः परीक्षणं तामतिक्रांते शुद्धचित्ते इत्यर्थः । "एतेषु च पुंसि ।" शुचिर्ग्रीष्माग्निशृंगारेष्वाषाढे शुद्धमंत्रिणि । ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिष्विति मेदिनी। मेध्ये पवित्रे सिते शुक्ले च त्रिषु । स्पृहायामत्यासक्तौ गभस्तौ किरणे चकाराद्दीप्तौ शोभायां च रुचिः ॥२९॥ इति चांताः । "अपिशब्दात्स्फटिके अच्छः । स्तंबे कलापे च गुच्छः । तुन्नवृक्षे नांदुर्खी इति प्रसिद्धे नौकांगे च कच्छः" ॥ १ ॥ इति छांताः । अथ जांतानाह । केकिताक्ष्यौं मयूरगरुडौ । अहीन्भुंक्ते इत्यहिभुक् । विप्रेत्युपलक्षणं क्षत्रवैश्ययोः । विप्रक्षत्रियविट्शूद्रा वर्णास्त्वाद्या द्विजाः स्मृता इति स्मृतेः । अंडजाः पक्षिणः एते द्विजाः । छागो बस्तः । अजो हरौ हरे कामे विधौ छागे रघोः सुत इति विश्वः । गोष्ठं गोस्थानकम् । अध्वा मार्गः । निवहः संघः । एते व्रजाः ॥३०॥ जिनो बुद्धः । युधिष्ठिरेऽपि धर्मराजशब्दः । दंतिदंते कुंजः अपिशब्दान्निकुंजे "हनौ चापि पुन्नपुंसकलिंगः ।" क्षेत्रे नगरद्वारे च वलजं क्लीबम् । "वलजं गोपुरे क्षेत्रे सस्यसंगरयोरपीति मेदिनी ।" वल्गुदर्शना वरस्त्रीत्यर्थः वल्गु सुंदरं दर्शनं यस्याः सा । वलजा वरयोषायामिति कोशांतरात् ॥३१॥

१ इदं पद्यं ताळपत्रपुस्तकेऽपि नास्ति ॥

समे क्ष्मांशे रणेऽप्याजिः प्रजा स्यात्संततौ जने ॥
अब्जौ शंखशशांकौ च स्वके नित्ये निजं त्रिषु ॥ ३२ ॥
॥इति जांताः॥ पुंस्यात्मनि प्रवीणे च क्षेत्रज्ञो वाच्यलिंगकः
संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना ॥ ३३ ॥
॥ इति ञांताः ॥ काकेभगंडौ करटौ गजगंडकटी कटौ ॥
शिपिविष्टस्तु खलतौ दुश्चर्मणि महेश्वरे ॥ ३४ ॥
देवशिल्पिन्यपि त्वष्टा दिष्टं दैवेऽपि न द्वयोः ॥
रसे कटुः कट्वकार्ये त्रिषु मत्सरतीक्ष्णयोः ॥

समे क्ष्मांशे भूभागे तत्र आजिरिति । रणे संग्रामे । संततिरपत्यम् । चकाराद्धन्वंतरावब्जः । पद्मेऽपि अब्जम् । स्वके आत्मीये नित्ये चिरस्थिते । यथा धर्मो निजः नित्य इत्यर्थः । इति जांताः ॥ ३२ ॥ अथ ञांतानाह । आत्मनि पुरुषे क्षेत्रज्ञः पुंसि । प्रवीणे तु वाच्यलिंगकः । चेतना धीः । नामाभिधानम् । हस्ताद्यैर्हस्तभ्रूलोचनादिभिर्या अर्थसूचना प्रयोजनविज्ञापनं सापि संज्ञा । “ गायत्री सूर्यपत्नी च संज्ञा । तदुक्तं मेदिन्याम् । संज्ञा नामनि गायत्र्यां चेतनारवियोषितोः । अर्थस्य सूचनायां च हस्ताद्यैरपि योषितीति ” ॥ ३३ ॥ अत्र क्षेपकोऽयम् । दोषज्ञौ वैद्यविद्वांसौ ज्ञौ विद्वान्सोमजोऽपि च । विज्ञौ प्रवीणकुशलौ कालज्ञौ ज्ञानिकुक्कुटाविति ॥ १ ॥ इति ञांताः ॥ अथ टांतानाह । काकश्चेभगंडो हस्तिकपोलश्च काकेभगंडौ “ करटौ स्याताम् । करटो गजगंडे स्यात्कुसुंभे निंद्यजीवने । एकादशाहादिश्राद्धे दुर्दुरूढेऽपि वायसे । करटो वाद्यभेदे इति मेदिनी ” । गजगंडः कटिश्च कटौ स्याताम् । कटिः श्रोणिः । “ कटः श्रोणौ क्रियाकारे कलिंजेऽतिशये शवे । समये गजगंडेऽपि पिप्पल्यां तु कटी मतेति विश्वः । ” रुजा निष्केशशिराः खलतिः तस्मिन्दुश्चर्मणि निष्कुषितत्वचि महेश्वरे शिपिविष्टः । “ शिपविष्टः शिविपिष्ट इति राजमुकुटः” ॥३४॥ देवशिल्पिनि विश्वकर्मण्यपिशब्दाद्द्रविभेदे काष्ठतक्षे त्वष्टा । दैवे प्राक्तनकर्मणि दिष्टम् । नपुंसकम् । अपिशब्दात्काले तु ना । रसे पिप्पल्यादिरसभेदे कटुः पुंसि । अकार्ये करणानर्हे कटु क्लीबम् । मत्सरतीक्ष्णयोस्त्रिषु । क्षेमे कल्याणे । अशुभेऽमंगले । अभावे अशुभस्यैवाभावे रिष्टमिति । शुभाशुभे अरिष्टे । सूतिकागृहं चारिष्टम् । अरिष्टमशुभे तक्रे सूति-

रिष्टं क्षेमाशुभाभावेष्वरिष्टे तु शुभाशुभे ॥ ३५ ॥
मायानिश्चलयंत्रेषु कैतवानृतराशिषु ॥
अयोघने शैलशृंगे सीरांगे कूटमस्त्रियाम् ॥ ३६ ॥
सूक्ष्मैलायां त्रुटिः स्त्री स्यात्कालेऽल्पे संशयेऽपि सा ॥
आर्त्युत्कर्षाश्रयः कोट्यो मूले लग्नकचे जटा ॥ ३७ ॥
व्युष्टिः फले समृद्धौ च दृष्टिर्ज्ञानेऽक्ष्णि दर्शने ॥
इष्टिर्यागेच्छयोः सृष्टं निश्चिते बहुनि त्रिषु ॥ ३८ ॥
कष्टे तु कृच्छ्रगहने दक्षामंदागदेषु च ॥
पटुर्द्वौ वाच्यलिंगौ च ॥ इति टांताः ॥ नीलकंठः शिवेऽपि च ॥ ३९ ॥
पुंसि कोष्ठोंऽतर्जठरं कुसूलोंऽतर्गृहं तथा ॥

कागार आसवे । शुभे मरणचिह्ने चेति मेदिनी ।" ॥३५॥ मायादिषु नवसु कूटम् । तदस्त्रियाम् । अन्यथाकारदर्शनं माया । निश्चलमविकारमाकाशादि । यंत्रं मृगबंधनविशेषः । कैतवं कपटम् अनृतं असत्यम् । राशिः पुंजः । अयोघनो लोहहननार्थं आयुधविशेषः । सीरांगं हलांगम् ॥ ३६ ॥ सूक्ष्मैला प्रसिद्धा । काले ह्रस्वाक्षरचतुर्थभागग्रहणात्मके कालभेदे । अल्पे लेशे । संशये संदेहे । आर्तिश्चापाग्रम् । उत्कर्षः प्रकर्षः । अश्रिः कोणः । संख्याभेदेऽपि कोटिः । स्यात्कोटिरश्रौ चापाग्रे संख्याभेदप्रकर्षयोरिति विश्वः । मूले संश्लिष्टकेशे जटामांस्यां वेदविकृतौ च ॥ ३७ ॥ फले साध्ये समृद्धौ संपदि व्युष्टिः । अक्ष्णि चक्षुषि । यागो यज्ञः । इच्छा स्पृहा । "इष्टिर्मताभिलाषेऽपि संग्रहश्लोकयागयोरिति मेदिनी ।" बहुनि प्रचुरे । मुक्तनिर्मितयोश्च सृष्टम् । सृष्टिर्निश्चिते बहुले त्रिष्विति क्वचित्पुस्तके पाठः ॥ ३८ ॥ कृच्छ्रं दुःखम् । गहनं दुरधिगमांतःप्रांतम् । उभे कष्टे । दक्षोऽनलसः । अगदो रोगहीनः । एते पटवः ॥ द्वौ कष्टपटू वाच्यलिंगौ ॥ इति टांताः ॥ ठांतानाह । अपिशब्दान्मयूरेऽपि नीलकंठः ॥ ३९ ॥ अंतर्जठरं जठरस्यांतरम् । कुसूलो धान्यागारम् अंतर्गृहं गृहाभ्यंतरं च एतेषु कोष्ठः पुंसि । निष्पत्तिर्निष्पादनम् । नाशः अदर्शनम् । अंतः प्रध्वंसः ।

निष्ठा निष्पत्तिनाशांताः काष्ठोत्कर्षे स्थितौ दिशि ॥४०॥
त्रिषु ज्येष्ठोऽतिशस्तेऽपि कनिष्ठोऽतियुवाल्पयोः ॥ इति ठांताः ॥

दंडोऽस्त्री लगुडेऽपि स्याद्गुडो गोलेक्षुपाकयोः ॥ ४१ ॥
सर्पमांसात्पशू व्याडौ गोभूवाचस्त्विडा इलाः ॥
क्ष्वेडा वंशशलाकाऽपि नाडी नालेऽपि षट्क्षणे ॥ ४२ ॥
कांडोऽस्त्री दंडबाणार्ववर्गावसरवारिषु ॥
स्याद्भांडमश्वाभरणेऽमत्रे मूलवणिग्धने ॥ इति डांताः॥४३॥
भृशप्रतिज्ञयोर्बाढं प्रगाढं भृशकृच्छ्रयोः ॥
शक्तस्थूलौ त्रिषु दृढौ व्यूढौ विन्यस्तसंहतौ ॥ ४४ ॥ इति ढांताः ॥

स्थितौ मर्यादायां कालविशेषेऽपि ॥ ४० ॥ अतिशस्ते सुप्रशस्ते । अपिशब्दादतिवृद्धे । अग्रजे मासि च ज्येष्ठः । अतियूनि बाले । अनुजेऽपि कनिष्ठः ॥ इति ठांताः ॥ दंडो दमे मानभेदे लगुडे यमसैन्ययोः । व्यूहभेदे प्रकांडेऽश्वे कोणमंथनयोरपि । अभिमाने ग्रहे दंडश्चंडांशोः पारिपार्श्वक इत्यपिशब्दात् ज्ञेयाः । गोलो मृदादिगुडकः । इक्षुपाकः इक्षुविकारः । "हस्तिसन्नाहेऽपि गुडः । स्नुहीगुडिकयोर्गुडा ॥ ४१ ॥ मांसात्पशुर्व्याघ्रः । मांसमत्तीति मांसात् स चासौ पशुश्चेति । डलयोरेकत्वेन व्यालश्च । "खलेऽपि च ।" गौर्धेनुः । डलयोरैक्यादिडा इलाश्च । इला बुधपत्नी च । वंशशलाका पंजराद्यर्था वा शूर्पाद्यर्था वेणुशलाका क्ष्वेडा । अपिशब्दाद्विषे पुंसि । "सिंहनादे च स्त्रियाम् । क्ष्वेडा वंशशलाकायां सिंहनादे च योषिति इति कोशांतरे ।" षट्क्षणमिते काले नाले अपिशब्दाच्छिरादिषु च नाडी । "शिरायां गंडदूर्वायां चर्यायां कुहनस्य चेति मेदिनी" ॥ ४२ ॥ दंडादिषु षट्सु कांडः । स च पुन्नपुंसकयोः । अर्वा कुत्सितः । वर्गः परिच्छेदः । यथा प्रथमकांडेऽभिहितम् । अवसरः प्रस्तावः । अमत्रे पात्रे । मूलं यद्वणिग्धनम् तत्र च भांडम् । कांचनादिनिर्मितेऽश्वाभरणे भूषणमात्रे च ॥ ४३ ॥ इति डांताः ॥ भृशमत्यर्थं प्रतिज्ञा स्वीकारः । दृढेऽपि प्रगाढम् । "शक्तः समर्थः तत्र स्थूले च दृढः । विन्यस्ते संहते च व्यूढः । पृथुले च" ॥४४॥ इति ढांताः ॥ स्त्रिया

भ्रूणोऽर्भके स्त्रैणगर्भे बाणो बलिसुते शरे ॥
कणोऽतिसूक्ष्मे धान्यांशे संघाते प्रमथे गणः ॥ ४५ ॥
पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपि च ॥
मौर्व्यां द्रव्याश्रिते सत्त्वशौर्यसंध्यादिके गुणः ॥ ४६ ॥
निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः ॥
वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाऽक्षरे ॥ ४७ ॥
अरुणो भास्करेऽपि स्याद्वर्णभेदेऽपि च त्रिषु ॥
स्थाणुः शर्वोऽप्यथ द्रोणः काकेऽप्याजौ रवे रणः ॥ ४८ ॥
ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु ॥

अयं स्त्रैणः स्त्रैणश्चासौ गर्भश्च तस्मिन् बाले च भ्रूणः । बलिपुत्रे शरेच बाणः । "बाणः स्याद्गोस्तने दैत्यभेदे केवलकांडयोरिति मेदिनी ।" अतिसूक्ष्मवस्तुनि धान्यांशे च कणः । प्रमथे रुद्रानुचरे गणः ॥ ४५ ॥ द्यूतमक्षादिभिः क्रीडा । आदिना मेषकुक्कुटादियुद्धादिकं तत्र उत्सृष्टे न्यस्तार्थे । भृतौ वेतने मूल्ये विक्रेयवस्तुद्रव्ये धने काकिणीचतुष्टये च पणः । "अपिशब्दात् ग्लहे क्रय्य-शाकादिकायां च ।" तदुक्तं धरण्याम् । पणो माने वराटानां मूल्ये कार्षा-पणे धने । द्यूते विक्रय्यशाकादौ बद्धमुष्टौ ग्लहे भृताविति । मौर्व्यां ज्यायां द्रव्याश्रिते रसगंधादौ । आदिशब्दस्य प्रत्येकं संबंधात्सत्त्वरजआदौ शौर्य-चातुर्यादौ संधिविग्रहादौ इंद्रिये अदेक्कित्युक्ते च गुणः । "गुणो मौर्व्यामप्र-धाने रूपादौ सूद इंद्रिये । त्यागे शौर्यादिसत्त्वादिसंध्याद्यावृत्तिरज्जुषु । शुक्लादावपि वट्यां चेति मेदिनी" ॥ ४६ ॥ निर्व्यापारस्थितौ तूष्णीमवः-स्थाने कालविशेषे मुहूर्तस्य द्वादशे भागे उत्सवे पुत्रजन्मादौ क्षणः । "पर्वणि च ।" विप्रक्षत्रियादौ शुक्लपीतादौ स्तुतौ स्तवे च वर्णः । अक्षरे वर्णं वा क्लीबे पुंसि चेत्यर्थः । "वर्णो द्विजादिशुक्लादियशोगुणकथासु च । स्तुतौ ना न स्त्रियां भेदरूपाक्षरविलेपने" इति मेदिनी ॥ ४७ ॥ "वर्णभेदे कपिले ।" अपिशब्दात्सूर्यसारथौ । "अव्यक्तरागे संध्यारागे च ॥" सोऽरुणशब्दः । "अपिशब्दात्" स्तंभादौ स्थेयुषि च स्थाणुः । "अपिशब्दात्" अश्व-त्थाम्नः पितरि परिमाणविशेषे च द्रोणः । आजौ युद्धे रवे शब्दे । काकेऽपि च रवे रण इत्यपि पाठांतरम् ॥ ४८ ॥ श्रेष्ठो मुख्यः । "ग्राम-

ऊर्णा मेषादिलोम्नि स्यादावर्ते चांतरा भ्रुवोः ॥ ४९ ॥
हरिणी स्यान्मृगी हेमप्रतिमा हरिता च या ॥
त्रिषु पांडौ च हरिणः स्थूणा स्तंभेऽपि वेश्मनः ॥५०॥
तृष्णे स्पृहापिपासे द्वे जुगुप्साकरुणे घृणे ॥
वणिक्पथे च विपणिः सुरा प्रत्यक्च वारुणी ॥ ५१ ॥
करेणुरिभ्यां स्त्री नेभे द्रविणं तु बलं धनम् ॥
शरणं गृहरक्षित्रोः श्रीपर्णं कमलेऽपि च ॥ ५२ ॥
विषाभिमरलोहेषु तीक्ष्णं क्लीबे खरे त्रिषु ॥
प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु ॥ ५३ ॥

"ग्रामणीर्भोगिके पत्यौ प्रधाने नापितेऽपि चेति विश्वप्रकाशः । ग्रामं नयतीति ग्रामणीः । अग्रग्रामाभ्यामिति णत्वम् । मेषलोम्नि भ्रुवोरंतरावर्ते च ऊर्णा" आदिना शशोष्ट्रादीनां च लोम सा ऊर्णा । सोर्णा तु चक्रवर्त्यादीनां महायोगिनां च महापुरुषलक्षणभूता मृणालतंतुसूक्ष्मा शुभ्रायता प्रशस्तावर्ता प्रायेण भवति ॥ ४९ ॥ हेम्नः सुवर्णस्य प्रतिमा या च हरिता हरिद्वर्णा । "हरिणी हरितायां च नारीभिद्वृत्तभेदयोः । सुवर्णप्रतिमायां चेति मेदिनी ।" पांडौ पांडुरवर्णे चकारान्मृगभेदे । वेश्मनो गृहस्य स्तंभे स्थूणा । अपिशब्दाल्लोहस्य प्रतिमायाम् ॥ ५० ॥ स्पृहा वांछा । पिपासा पानेच्छा । "जुगुप्सा निंदा करुणा च घृणेत्युच्यते ।" वणिक्पथे पण्यवीथ्यां आपणे पण्ये च विपणिः । सुरा मद्यम् । प्रत्यक् प्रतीची दिक् । उभे वारुण्यौ । "गंडदूर्वापि वारुणी । वारुणी गंडदूर्वायां प्रतीचीसुरयोः स्त्रियामिति कोशांतरात्" ॥ ५१ ॥ इभ्यां हस्तिन्यां करेणुः स्त्रीलिंगा । इभे हस्तिनि करेणुर्ना पुंलिंगः । बलं पराक्रमः । गृहे रक्षितरि शरणम् । "वधरक्षणयोरपि शरणम् ।" चकारादग्निमंथे च श्रीपर्णम् ॥ ५२ ॥ अभिमरो युद्धम् । खरे तिग्मे । "तीक्ष्णं सामुद्रलवणे विषलोहाजिमुष्कके । क्लीबं यवाग्रजे पुंसि तिग्मात्मत्यागिनोस्त्रिष्विति मेदिनी ।" हेतुर्धूमादिः । मर्यादा सीमा । इयत्ता परिच्छेदः । प्रमाता ज्ञाता एष्वर्थेषु प्रमाणशब्दो वर्तते । "प्रमाणं नित्यमर्यादाशास्त्रेषु सत्यवादिनि । इयत्तायां च हेतौ च क्लीबैकत्वे प्रमातरीति मेदिनी" ॥ ५३ ॥ साधकतमं क्रियासिद्धौ प्रकृष्टो हेतुः । साधकतमं करण-

करणं साधकतमं क्षेत्रगात्रेंद्रियेष्वपि ॥
प्राण्युत्पादे संसरणमसंबाधचमूगतौ ॥ ५४ ॥
घंटापथेऽथ वांतान्ने समुद्गिरणमुन्नये ॥
अतस्त्रिषु विषाणं स्यात्पशुशृंगेभदंतयोः ॥ ५५ ॥
प्रवणं क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे ॥
संकीर्णौ निचिताशुद्धौ विरिणं शून्यमूषरम् ॥ ५६ ॥
("सेतौ च वरणो वेणी नदीभेदे कचोच्चये ॥") (१)
इति णांताः ॥

देवसूर्यौ विवस्वंतौ सरस्वंतौ नदार्णवौ ॥
पक्षितार्क्ष्यौ गरुत्मंतौ शकुंतौ भासपक्षिणौ ॥ ५७ ॥
अभ्युत्पातौ धूमकेतू जीमूतौ मेघपर्वतौ ॥

मिति पाणिनिराह । यथा रामेण बाणेन हतो वालीसत्र हननक्रियां प्रति बाणस्य साधकतमत्वात् करणत्वमस्ति । क्षेत्रं सस्योत्पत्तिस्थानम् । करणं साधने क्षेत्रे इति विश्वः । अपिशब्दात्कर्मादि । "करणं करणे काये साधनेंद्रियकर्मसु । कायस्थे व्रतबंधे च नाट्यगीतप्रभेदयोः । पुमान् शूद्राविशोः पुत्रे वानरादौ च कीर्त्यते इत्यजयः । प्राणिनामुत्पादे जन्मनि । असंबाधचमूगतौ निर्बाधसैन्यगमने घंटापथे च संसरणम् ॥ ५४ ॥ वांतान्ने भुक्तोज्झितान्ने । उन्नये जलपात्रादेरूर्ध्वनयने । उन्मूलिते च "उद्गिरणम् ।" अतःपरं वक्ष्यमाणा णांतशब्दास्ते त्रिषु । पशुशृंगं चेभदंतश्च तयोः विषाणम् । स्त्रियां विषाणी ॥ ५५ ॥ क्रमेण निम्ना क्रमनिम्ना सा चासौ उर्वी च पृथ्वी तत्र । प्रह्वे नम्रे चतुष्पथे प्रवणः पुंस्येव । निचितो व्याप्तः । अशुद्धः अमित्रः । "संकीर्णं संकटे व्याप्ते कुत्रचिद्वर्णसंकर इत्यजयः ।" शून्यं निराश्रयो देशः । ऊषरं स्थलभेदः तद्विरिणमिति स्यात् । "दीर्घादिरपि । इरणमित्यपि ईरणमिति च । ईरणं तूषरे शून्यमित्युक्तत्वात्" ॥ ५६ ॥ सेतौ च वरणो वेणी नदीभेदे कचोच्चय इत्यमूलकः ॥ इति णांताः ॥ अथ तांतानाह ॥ नदः सरिद्विशेषः । तार्क्ष्यो गरुडः । भासः पक्षिभेदो गोष्ठकुक्कुटाख्यः । पक्षी पक्षिमात्रम् ॥५७॥ उत्पातो धूममयी तारा । "ग्रहभेदेऽपि

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

हस्तौ तु पाणिनक्षत्रे मरुतौ पवनामरौ ॥ ५८ ॥
यंता हस्तिपके सूते भर्ता धातरि पोष्टरि ॥
यानपात्रे शिशौ पोतः प्रेतः प्राण्यंतरे मृते ॥ ५९ ॥
ग्रहभेदे ध्वजे केतुः पार्थिवे तनये सुतः ॥
स्थपतिः कारुभेदेऽपि भूभृद्भूमिधरे नृपे ॥ ६० ॥
मूर्धाभिषिक्तो भूपेऽपि ऋतुः स्त्रीकुसुमेऽपि च ॥
विष्णावप्यजिताव्यक्तौ सूतस्त्वष्टरि सारथौ ॥ ६१ ॥
व्यक्तः प्राज्ञेऽपि दृष्टांतावुभौ शास्त्रनिदर्शने ॥
क्षत्ता स्यात्सारथौ द्वाःस्थे क्षत्रियायां च शूद्रजे ॥ ६२ ॥
वृत्तांतः स्यात्प्रकरणे प्रकारे कार्त्स्न्यवार्तयोः ॥

धूमकेतुः । जीवनं जलं मुंचतीति जीमूतो मेघः । पृषोदरादिः । जीमूतोऽद्रौ धृतिकरे देवताडे पयोधरे इति मेदिनी । धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयोरिति विश्वः ।" पाणिः करः । नक्षत्रं त्रयोदशम् । पवनो वायुरमरश्च मरुत्संज्ञौ ॥ ५८ ॥ महामात्रसारथी यंतारौ । धाता धारकः । "स्वामिन्यपि भर्ता ।" यानपात्रे वहित्रे "गृहस्थाने वाससि च पोतः । प्राण्यंतरे भूतांतरे ॥ ५९ ॥ केतुर्ना रुक्पताकारिग्रहोत्पातेषु लक्ष्मणीति मेदिनी" । पार्थिवे राज्ञि । तनये पुत्रे । कारुः शिल्पी तद्भेदे । अपिशब्दात्कंचुकिनि जीवेष्टियाजके च स्थपतिः । भूमिधरः शैलः ॥ ६० ॥ अपिशब्दात् प्रधाने क्षत्रियमात्रे च मूर्धाभिषिक्तः । स्त्रीकुसुमे रजसि हेमंतादौ च ऋतुः । अजितश्चाव्यक्तश्चेति तकारांताविमौ विष्णावपि वर्तेते । अपिशब्दादपरिभूते शंकरे चाजितः । अव्यक्तः शंकरे विष्णावव्यक्तं महदादिके । आत्मन्यपि स्यादव्यक्तमस्फुटे त्वभिधेयवदिति विश्वः । त्वष्टारि शिल्पिभेदे । क्षत्रियाद्ब्राह्मणीजेऽपि सूतः सारथिबंदिनोरिति विश्वः ॥ ६१ ॥ स्फुटेऽपि व्यक्तः । शास्त्रं तर्कादि । निदर्शनमुदाहरणम् । इमे उभौ दृष्टांतौ । द्वाःस्थे द्वारपाले । वैश्यायामित्यपपाठः । क्षत्ता शूद्रात्क्षत्रियाजे इति विश्वकोशात् । चात् भुजिष्यातनये ॥ ६२ ॥ प्रकरणं प्रस्तावः । प्रकारो भावः । कार्त्स्न्यं साकल्यम् । वार्ता जनश्रुतिः । नृत्तस्थाने नृत्यमंडपे । नीवृद्विशेषो जनपदविशेषः स च पश्चिमसागरस्थो

आनर्तः समरे नृत्यस्थाननीवृद्विशेषयोः ॥ ६३ ॥
कृतांतो यमसिद्धांतदैवाकुशलकर्मसु ॥
श्लेष्मादि रसरक्तादि महाभूतानि तद्गुणाः ॥ ६४ ॥
इंद्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः ॥
कक्षांतरेऽपि शुद्धांतो नृपस्यासर्वगोचरे ॥ ६५ ॥
कासूसामर्थ्ययोः शक्तिर्मूर्तिः काठिन्यकाययोः ॥
विस्तारवल्ल्योर्व्रततिर्वसती रात्रिवेश्मनोः ॥ ६६ ॥
क्षयार्चयोरपचितिः सातिर्दानावसानयोः ॥
अर्तिः पीडाधनुष्कोट्योर्जातिः सामान्यजन्मनोः ॥ ६७ ॥
प्रचारस्यंदयो रीतिरीतिर्डिंबप्रवासयोः ॥

द्वारावती। आनर्तो नृत्तशालायां जने जनपदांतर इत्यजयः ॥ ६३ ॥ यमो धर्मराजः। दैवं प्राक्तनं कर्म। अकुशलकर्म पापम्। श्लेष्मादयो धातुशब्दवाच्याः। आदिशब्दात्पित्तादिग्रहः। रस आहारपरिणामजो भागविशेषः। रसरक्तादीत्यादिना वसामज्जादिग्रहः। महाभूतानि पृथिव्यादीनि पंच। तद्गुणा गंधादयः ॥ ६४ ॥ इंद्रियाणि चक्षुरादीनि। अश्मविकृतिः मनःशिलादिः। शब्दयोनिः भू सत्तायामित्यादिः। भूवादयो धातव इति सूत्रात्। नृपस्य कक्षांतरे राजधानीस्थानविशेषे। असर्वगोचरे इति कक्षांतरस्य विशेषणम्। अपिशब्दादंतःपुरे आशौचांते च शुद्धांतः ॥ ६५ ॥ कासूः महाराष्ट्रभाषायां सैतीति ख्यातः आयुधभेदः। कासूर्विकलवाची स्यात् कासूः शक्त्यायुधेऽपि चेति विश्वात्। काठिन्यं दृढता। वल्ली लता। रात्रौ गृहे च वसतिः ॥ ६६ ॥ क्षयो हानिः अर्चा पूजा तत्रापचितिः निष्कृतौ व्यये च। अवसानं अंतः। धनुष्कोटिः चापाग्रम्। "आर्तिरिति पाठः। उपसर्गादृतीति वृद्धिः।" सामान्यं गोत्वादि। मालत्यां च जातिः। "जातिः सामान्यगोत्रयोः। मालत्यामामलक्यां च चुल्ल्यां कंपिल्लजन्मनोः। जातीफले छंदसि चेति हैमः" ॥ ६७ ॥ प्रचारः लोकाचार इति यावत्। स्यंदः प्रस्रवणम्। तत्र रीतिः। "रीतिः प्रचारे स्यंदे च लोहकिट्टारकूटयोरिति विश्वः।" डिंबे प्रवासे च ईतिः। डिंबो विप्लवः। स च सप्तविधः। अतिवृष्टिरना-

उदयेऽधिगमे प्राप्तिस्त्रेता त्वग्नित्रये युगे ॥ ६८ ॥
वीणाभेदेऽपि महती भूतिर्भस्मनि संपदि ॥
नदीनगर्योर्नागानां भोगवत्यथ संगरे ॥ ६९ ॥
संगे सभायां समितिः क्षयवासावपि क्षिती ॥
रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः ॥ ७० ॥
जगती जगति च्छंदोविशेषेऽपि क्षितावपि ॥
पंक्तिश्छंदोऽपि दशमं स्यात्प्रभावेऽपि चायतिः ॥७१॥
पत्तिर्गतौ च मूले तु पक्षतिः पक्षभेदयोः ॥
प्रकृतिर्योनिलिंगे च कैशिक्याद्याश्च वृत्तयः ॥ ७२ ॥
सिकताः स्युर्वालुकापि वेदे श्रवसि च श्रुतिः ॥

वृष्टिः शलभा मूषकाः शुकाः । स्वचक्रं परचक्रं च सप्तैता ईतयः स्मृता इति भेदात् । उदये उत्पत्तौ । अधिगमे लाभे । अग्नित्रये दक्षिणगार्हपत्याहवनीयाख्ये । द्वितीये युगे । त्रेताशब्द आवंतः ॥ ६८ ॥ वीणाभेदो नारदी वीणा । महत्त्वयुक्तायां भार्यादौ च । अणिमादौ च भूतिः । "भूतिर्भस्मनि संपादि । मांसपाकविशेषे च जनने गजमंडन इत्यमरशेषः ।" नद्यां नागानां नगर्यां च भोगवती । संगरादित्रये समितिः ॥ ६९ ॥ वासो निवासः । अपिशब्दान्मेदिन्याम् । कालभेदे च क्षितिः । सूर्यप्रभादिषु हेतिः ॥ ७० ॥ जगति लोके क्षितौ भुवि छंदोविशेषे द्वादशाक्षरपादकवृत्ते जगती । "अपिशब्दाज्जने ।" दशमं छंदः दशाक्षरपादकं आवलिरपि पंक्तिः । उत्तरकालेऽप्यायतिः । "आयतिः संयमे दैर्घ्ये प्रभावागामिकालयोरिति विश्वः" ॥ ७१ ॥ वीरभेदे सैन्यभेदे च पत्तिः । पक्षभेदयोरिति षष्ठी । पक्षशब्दो मासार्धवाची खगावयववाची च अतो द्विवचनम् । मासार्धस्य मूले प्रतिपदीत्यर्थः । पक्षिपक्षस्य मूलेऽधोदेशे । पक्षस्य मूलं पक्षतिः पक्षात्तिरिति सूत्रेण तिप्रत्ययः । योनिर्लिंगे द्वंद्वैक्यम् । योनौ लिंगे च प्रकृतिः । चकारात्प्रधानत्वे अमात्यादौ स्वभावे च । आद्यशब्दादारभटीसात्वतीभारत्यः । भारती सात्वती चैव कैशिक्यारभटी तथा । चतस्रो वृत्तयश्चैता यासु नाट्यं प्रतिष्ठितमिति । चकाराज्जीविकायां सूत्रविवरणे च वृत्तिः ॥ ७२ ॥ सिकताशब्दो वालुकायां स्त्रीलिंगो बहुवचनांतश्च । अपिशब्दात्सिकतान्वितदेशे

वनिता जनितात्यर्थानुरागायां च योषिति ॥ ७३ ॥
गुप्तिः क्षितिव्युदासेऽपि धृतिर्धारणधैर्ययोः ॥
बृहती क्षुद्रवार्ताकी छंदोभेदे महत्यपि ॥ ७४ ॥
वासिता स्त्रीकरिण्योश्च वार्ता वृत्तौ जनश्रुतौ ॥
वार्तं फल्गुन्यरोगे च त्रिष्वप्सु च घृतामृते ॥ ७५ ॥
कलधौतं रूप्यहेम्नोर्निमित्तं हेतुलक्ष्मणोः ॥
श्रुतं शास्त्रवधृतयोर्युगपर्याप्तयोः कृतम् ॥ ७६ ॥
अत्याहितं महाभीतिः कर्म जीवानपेक्षि च ॥
युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु ॥ ७७ ॥

च शर्करायां च कीर्तितः । श्रवसि कर्णे । " श्रुतिः श्रोत्रे तथाम्नाये वार्तायां श्रोत्रकर्मणीति विश्वः । " जनितोऽत्यंतानुरागो यस्यां तस्यां योषिन्मात्रे च वनिता । वनिता जनितात्यर्थरागयोषिति योषितीति विश्वः ॥ ७३ ॥ क्षितिव्युदासे भूविवरे । गतार्थक्षितेरुत्खनने इति सुभूतिः । अपिशब्दाद्रक्षणे च गुप्तिः । गुप्तिः कारागृहे प्रोक्ता भूगर्ते रक्षणेऽधमे इति विश्वः । तुष्टौ योगभेदे " अध्वरे " च धृतिः । क्षुद्रवार्ताकी ओषधिविशेषः । बृहती क्षुद्रवार्ताक्यां कंटकार्यां च वाचि चेति विश्वः । छंदोभेदो नवमं छंदो बृहती । महती विपुला सापि बृहती स्यात् ॥ ७४ ॥ स्त्रीकरिण्योर्योषिद्धस्तिन्योर्वासिताशब्दः । रामस्वामी तु वाशितेति तालव्यमध्यमाह । वाशृशब्दे इत्यस्य रूपम् । धान्ये पक्षिशब्दे च वासितं क्लीबम् । वृत्तौ जीविकायाम् । जनश्रुतिर्वृत्तांतः फल्गुन्यसारे क्लीबम् । रोगरहिते त्रिषु । घृतामृते द्वे अप्सु वर्तेते । चकारात् घृतमाज्ये जले क्लीबम् । अमृतं तु घृते पीयूषे यज्ञशेषे च ॥ ७५ ॥ रूप्यं रजतम् । लक्ष्म चिह्नम् । अवधृतमाकर्णितम् । युगे प्रथमयुगे पर्याप्ते अलमर्थे कृतम् ॥७६॥ जीवानपेक्षि साहसरूपं कर्म । महाभीतिर्महद्भयं अत्याहितं स्यात् । युक्ते न्याय्ये । क्ष्मादौ क्षित्यादिपंचके । ऋते सत्ये । प्राणिनि जंतौ । अतीते वृत्ते । प्राण्यतीत इति द्वंद्वैक्यम् । समे सदृशम् । भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोरिति विश्वः ॥७७॥ पद्ये श्लोके । अतीते भूते

वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले ॥
महद्राज्यं चावगीतं जन्ये स्याद्गर्हिते त्रिषु ॥ ७८ ॥
श्वेतं रूप्येऽपि रजतं हेम्नि रूप्ये सिते त्रिषु ॥
त्रिष्वितो जगदिंगेऽपि रक्तं नील्यादिरागि च ॥ ७९ ॥
अवदातः सिते पीते शुद्धे बद्धार्जुनौ सितौ ॥
युक्तेऽतिसंस्कृते मर्षिण्यभिनीतोऽथ संस्कृतम् ॥ ८० ॥
कृत्रिमे लक्षणोपेतेऽप्यनंतोऽनवधावपि ॥
ख्याते हृष्टे प्रतीतोऽभिजातस्तु कुलजे बुधे ॥ ८१ ॥
विविक्तौ पूतविजनौ मूर्छितौ मूढसोच्छ्रयौ ॥

दृढे गाढे निस्तले वर्तुलेऽतीतादौ त्रिलिंग्यां वृत्तम् । राज्यं चकरात् बृहच्च महत् । महद्राज्ये विशाले चेति विश्वः । जन्ये जनापवादे गर्हिते निंदितेऽवगीतम् ॥ ७८ ॥ अपिशब्दाच्छुभ्रेऽपि श्वेतम् । श्वेतं रूप्येऽन्यवच्छुक्ले श्वेतो द्वीपाद्रिभेदयोरिति विश्वः । हेम्नि रूप्ये सिते च रजतम् । अतो रजतात् परे तांताः शब्दास्त्रिषु । इंगे जंगमे भुवने च जगत् । नील्यादिरागयुक्तम् । रक्तोऽनुरक्ते नील्यादिरंजिते लोहिते त्रिषु । क्लीबं तु कुंकुमे ताम्रे इति मेदिनी । त्रिष्वतो इत्यस्य स्थाने त्रिष्वितो इत्यपि पाठः । इतो रजतात्परे तांताः त्रिषु ॥ ७९ ॥ सितादित्रयेऽवदातः । शुद्धं निर्मलम् । अर्जुनः शुक्लः बद्धश्च सितः । युक्ते न्याय्ये अतिप्रशस्ते भूषिते मर्षिणि क्षंतरि च अभिनीतः ॥ ८० ॥ कृत्रिमे घटादौ । लक्षणोपेते शास्त्रोपलक्षणयुक्ते च संस्कृतम् । अनवधौ निःसीमे अपिशब्दाच्छेषादौ अनंतः । "अनंतः केशवे शेषे पुमाननवधौ त्रिषु इति मेदिनी । अनंतं खे निरवधाविति हैमः ।" ख्याते प्रसिद्धे हृष्टे च प्रतीतः । "प्रतीतः सादरे प्राज्ञे प्रथिते ज्ञातहृष्टयोरिति हैमः ।" कुलजे कुलीने बुधे पंडितेऽभिजातः । "अभिजातः कुलीने स्यान्न्याय्यपंडितयोस्त्रिष्विति मेदिनी" ॥ ८१ ॥ पूतं पवित्रम् । विजनो विगतजन एकांत इत्यर्थः । एतौ विविक्तौ । "विविक्तं स्यादसंपृक्ते रहःपूतविवेकिष्विति हैमः । मूढो मोहं गतः सोच्छ्रयो वृद्धियुक्तः द्वौ मूर्छितौ । अम्लं चुक्रम् । त्रिरात्रिस्थं कांजिकमिति यावत् । परुषो निष्ठुरः द्वौ शुक्तारव्यौ । "शुक्तं पूताम्लनिष्ठुर इति मेदिनी ।"

द्वौ चाम्लपरुषौ शुक्तौ शिती धवलमेचकौ ॥ ८२ ॥
सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत् ॥
पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतःकृते ॥ ८३ ॥
निवातावाश्रयावातौ शस्त्राभेद्यं च वर्म यत् ॥
जातोन्नद्धप्रवृद्धाः स्युरुच्छ्रिता उत्थितास्त्वमी ॥ ८४ ॥
वृद्धिमत्प्रोद्यतोत्पन्ना आदृतौ सादरार्चितौ ॥ इति तांताः॥
अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ॥ ८५ ॥
निपानागमयोस्तीर्थमृषिजुष्टे जले गुरौ ॥
समर्थस्त्रिषु शक्तिस्थे संबद्धार्थे हितेऽपि च ॥ ८६ ॥
दशमीस्थौ क्षीणरागवृद्धौ वीथी पदव्यपि ॥

मेचकः कृष्णवर्णः । " शिञ् निशाने इति धातोः क्तिनि शितिः । निशितेऽपि शितिर्भूर्जे ना सितासितयोस्त्रिष्विति मेदिनी " ॥ ८२ ॥ धर्ममात्रे क्लीबं तद्युक्ते त्रिषु सत् । अस् धातोः शतृप्रत्यये अलोपः । साधौ मान्ये । अरात्यभियुक्ते शत्रुणाक्रांते । अग्रतःकृते पुरःस्थिते ॥ ८३ ॥ आश्रयो निवासः । अवातो वातवर्जितः । उभौ निवातौ । यच्छस्त्राभेद्यं वर्म कवचं तदपि निवाताख्यम् । यथा । निवातकवचो वीरः । निवातो दृढसन्नाह इत्यजयः । जात उत्पन्नः उन्नद्धो दृप्तः प्रवृद्धश्चैते उच्छ्रिताः । अमी वक्ष्यमाणा वृद्धिमदादय उत्थिताः ॥ ८४ ॥ वृद्धिमांश्च प्रोद्यतश्चोत्पन्नश्चेति । अत्र क्वचित् केचित् उदास्थितेत्यादयः संति तेऽमूलकत्वादुपेक्ष्याः । इति तांताः ॥ अथ थांतानाह ॥ अभिधेयो वाच्यः । राः धनम् । वस्तु तत्त्वम् । निवृत्तिर्निवर्त्तनम् । अत्र विषयेऽप्यर्थः । " अर्थो हेतौ प्रयोजने । निवृत्तौ विषये वाच्ये प्रकारद्रव्यवस्तुष्विति हैमः " ॥ ८५ ॥ निपानमुपकूपजलाशयः । आगमो बौद्धशास्त्रादन्यच्छास्त्रम् । ऋषिजुष्टे जले ऋषिभिः सेवितोदके गुरावुपाध्याये च तीर्थम् । तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च । अवतारर्षिजुष्टांबुपात्रोपाध्यायमंत्रिष्विति मेदिनी । "निपानेऽत्र निदानमित्यपि पाठः । निदानमुपायः" ॥ शक्तिस्थे शक्तिमति । संबद्धार्थे यथा । समर्थः पदविधिः । हितेऽनुकूले ॥ ८६ ॥ क्षीणो रागो रसोऽस्य क्षीणरागः । वृद्धोऽतिवृद्धः । उभौ दशमीस्थौ । दशमीस्थो नष्टबीजे स्थविरे चेति विश्वः । पदवी मार्गः अपिशब्दात् पंक्तिरपि । आस्थानी सभा ।

आस्थानीयत्नयोरास्था प्रस्थोऽस्त्री सानुमानयोः ॥ ८७ ॥
"शास्त्रद्रविणयोर्ग्रंथः संस्थाधारे स्थितौ मृतौ" ॥ (१)
इति थांताः ॥

अभिप्रायवशौ छंदावब्दौ जीमूतवत्सरौ ॥
अपवादौ तु निंदाज्ञे दायदौ सुतबांधवौ ॥ ८८ ॥
पादा रश्म्यंघ्रितुर्यांशाश्चंद्राग्न्यर्कास्तमोनुदः ॥
निर्वादो जनवादेऽपि शादो जंबालशष्पयोः ॥८९ ॥
आरावे रुदिते त्रातर्याक्रंदो दारुणे रणे ॥
स्यात्प्रसादोऽनुरागेऽपि सूदः स्याद्व्यंजनेऽपि च ॥ ९० ॥
गोष्ठाध्यक्षेऽपि गोविंदो हर्षेऽप्यामोदवन्मदः ॥
प्राधान्ये राजलिंगे च वृषांगे ककुदोऽस्त्रियाम् ॥ ९१ ॥

यत्नः प्रयत्नः । सानु पर्वताग्रम् । मानं परिमाणभेदः ॥८७॥ "शास्त्रद्रविणयोर्ग्रंथः संस्थाधारे स्थितौ मृताविसन्यत्र प्रक्षिप्तः पाठः ।" इति थांताः ॥ अथ दांतानाह ॥ अभिप्राय आशयः । वशोऽधीनः । "छंदो वशेऽभिप्राये च दृषत्पाषाणमात्रके । निष्पेषणार्थपट्टेऽपीति हैमः ।" जीमुतो मेघः । वत्सरो वर्षम् । अब्दः संवत्सरे मेघे गिरिभेदे च मुस्तक इति विश्वः ।" निंदा गर्हा । आज्ञा । शासनं तत्रापवादः । " अववाद इत्यपि पाठः । पुत्रो ज्ञातिश्च दायादौ ॥८८॥ रश्मिः किरणः । तुर्यांशश्चतुर्थभागः । पादो मूलाख्यतुर्यांशांघ्रिषु प्रत्यंतपर्वते इति हैमः । तमो नुदतीति तमोनुत् । जनवादे लोकापवादे अपिशब्दान्निर्णीतवादे निर्वादः । निर्वादः स्यात्परीवादपरिनिश्चितवादयोरिति विश्वः । जंबाले कर्दमे । शष्पे बालतृणे ॥ ८९ ॥ आरावे आर्तध्वनौ । त्रातरि रक्षके दारुणे रणे भीषणे युद्धे च आक्रंदः । अनुरागेऽनुग्रहे । प्रसन्नतायां काव्यगुणे च प्रसादः । "प्रसादोऽनुग्रहे काव्यगुणस्वास्थ्यप्रसत्तिष्वति मेदिनी ।" व्यंजने तेमने सूपकारे च सूदः ॥ ९० ॥ गोष्ठं गोस्थानं तस्याध्यक्षे गोपालादौ बृहस्पतौ कृष्णेऽपि गोविंदः । दकारांत आमोदशब्दो यथा हर्षे वर्तते अपिशब्दादतिनिर्हारिगंधे च तथा मदोऽपि हर्षे । अपिशब्दाद्दर्पगजदानरेतःसु चेत्यर्थः । प्रधानमेव प्राधान्यम् । राजलिंगे छत्रादौ वृषांगे वृषावयवे ककुदः ॥ ९१ ॥

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

स्त्री संविज्ज्ञानसंभाषाक्रियाकाराजिनामसु ॥
धर्मे रहस्युपनिषत्स्यादृतौ वत्सरे शरत् ॥ ९२ ॥
पदं व्यवसितित्राणस्थानलक्ष्मांघ्रिवस्तुषु ॥
गोष्पदं सेविते माने प्रतिष्ठाकृत्यमास्पदम् ॥ ९३ ॥
त्रिष्विष्टमधुरौ स्वादू मृदू चातीक्ष्णकोमलौ ॥
मूढाल्पापटुनिर्भाग्या मंदाः स्युर्द्वौ तु शारदौ ॥ ९४ ॥
प्रत्यग्राप्रतिभौ विद्वत्सुप्रगल्भौ विशारदौ॥इति दांताः॥
व्यामो वटश्च न्यग्रोधावुत्सेधः काय उन्नतिः ॥ ९५ ॥
पर्याहारश्च मार्गश्च विवधौ वीवधौ च तौ ॥
परिधिर्यज्ञियतरोः शाखायामुपसूर्यके ॥ ९६ ॥

संभाषा संभाषणम् । क्रियाकारः कर्मनियमः आजिर्युद्धम् । नाम संज्ञा । एतेषु संकेते च स्त्रीलिंगं संविदिति नाम । " संवित्संभाषणे ज्ञाने संयमे नाम्नि तोषणे । क्रियाकारे प्रतिज्ञायां संकेताचारयोरपीति हैमः । स्त्री इति तु संविदुपनिषच्छरद्भिः संबध्यते । रहस्येकांते । वेदांतेऽप्युपनिषत् " ॥ ९२ ॥ व्यवसितिर्व्यवसायः । " पदं स्थाने विभक्त्यंते शब्दे वाक्यैकवस्तुनोः । त्राणे पादे पादचिह्ने व्यवसायापदेशयोरिति हैमः । " सेविते गोभिरेव सेविते देशे माने खुरप्रमाणे गोष्पदम् । गोष्पदं सेवितासेवितप्रमाणेष्विति सूत्रेण सुडागमः सस्य षत्वं च निपात्यते । प्रतिष्ठा स्थानम् । कृत्यं कार्यम् । प्रतिष्ठाकृत्ये आस्पदशब्दो वर्तते । आस्पदं प्रतिष्ठायामिति निपातनात् सुडागमः ॥ ९३ ॥ अतः परं वर्गसमाप्तेर्दांतास्त्रिषु । इष्टो मनोहरः । उभौ स्वादू । स्वादुर्मनोज्ञे मिष्टे चेति विश्वः । अतीक्ष्णोऽतिग्मः । कोमलोऽकठिनः । उभौ मृदू । मृदुः स्यात्कोमले स्वरे इति विश्वः । मूढो मूर्खः । अल्पे यथा । मंदोदरी । अपटुरतीक्ष्णः निर्भाग्यो हीनभाग्यः । एते मंदाः ॥ ९४ ॥ प्रत्यग्रोऽभिनवः । अप्रतिभोऽप्रगल्भः । द्वाविमौ शारदौ । "प्रगल्भो धृष्टः । विशारदो बुधे धृष्ट इति हैमः" । इति दांताः ॥ अथ धांतानाह ॥ प्रसारितभुजद्वयकुंडलं व्यामः । वटो वृक्षभेदः । द्वयं न्यग्रोधाख्यम् । कायो देहः । उन्नतिरुच्छ्रायः ॥ ९५ ॥ परित आह्रियतेऽसौ पर्याहारो धान्यादिः मार्गः पंथाः एतौ विवधसंज्ञौ च भारेऽप्येतौ । यज्ञियतरोः पलाशादेः शाखायां समिधि तत्र उपसूर्यके सूर्यसमीपमंडले परिवेषाख्ये च परिधिः ॥ ९६ ॥

बंधकं व्यसनं चेतःपीडाधिष्ठानमाधयः ॥
स्युः समर्थननीवाकनियमाश्च समाधयः ॥ ९७ ॥
दोषोत्पादेऽनुबंधः स्यात्प्रकृत्यादिविनश्वरे ॥
मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने ॥ ९८ ॥
विधुर्विष्णौ चंद्रमसि परिच्छेदे बिलेऽवधिः ॥
विधिर्विधाने दैवेऽपि प्रणिधिः प्रार्थने चरे ॥ ९९ ॥
बुधवृद्धौ पंडितेऽपि स्कंधः समुदयेऽपि च ॥
देशे नदविशेषेऽब्धौ सिंधुर्ना सरिति स्त्रियाम् ॥१००॥
विधा विधौ प्रकारे च साधू रम्येऽपि च त्रिषु ॥

उत्तमर्णगृहे ऋणमोचनपर्यंतं विश्वासार्थं यद्वस्तु स्थाप्यते तद्बंधकम् । माहाण इति लौकिकभाषायां प्रसिद्धम् । व्यसनमापत्तिः । चेतःपीडा मानसी व्यथा । अधिष्ठानमध्यासनं एते आधयः । समर्थनं चोद्यपरिहारः । नीवाको वचनाभावः । नियमोऽगीकारः एते समाधयः ॥ ९७ ॥ दोषोत्पादनं दोषोत्पादस्तत्र प्रकृत्यादिषु प्रकृतिप्रत्ययागमादेशेषु इकृयणस्नु-डादिषु यन्नश्वरमित्संज्ञालोपाभ्यामदर्शनशीलमक्षरं तत्र । यो मुख्यं पित्रा-दिकमनुयाति तस्मिन् शिशौ । प्रकृतस्य प्रक्रांतस्य पदस्य निवृत्त्यभावः तत्रैतेषु अनुबंधः ॥ ९८ ॥ "विधुः शशांके कर्पूरे हृषीकेशे च राक्षस इति विश्वः ।" परिच्छेदे सीम्नि । बिले गर्ते । कालेऽपि अवधिः । विधाने कर्तव्ये दैवे प्राक्तनशुभाशुभकर्मणि ब्रह्मण्यपि विधिः ॥ ९९ ॥ बुधवृद्धौ धांतौ पंडितेऽपि वर्तेते । अपिशब्दाद्बुधः सौम्ये । वृद्धः स्थविरे । समुदये समूहे । यथा । अनलस्कंधवपुष इति । अपिशब्दात्कांडे नृपेंऽसे च । "स्कंधः प्रकांडे कार्येऽसे विज्ञानादिषु पंचसु । नृपे समूहे व्यूहे चेति हैमः ।" देशभेदेऽब्धौ समुद्रे सिंधुशब्दः पुंसि । "इभदाने च ।" नदीसामान्ये तु स्त्रीलिंगे । सिंधुः समुद्रे नद्यां च नदे देशेभदानयोरिति विश्वः ॥ १०० ॥ विधौ विधाने । प्रकारे विधाशब्दः स्यात् । यथा द्विविधं किंविधमित्यादि । अपि-शब्दाद्वार्धुषिके सज्जने "चारावपि" साधुः । जाया भार्या स्नुषा पुत्रस्य पत्नी तत्र स्त्रीमात्रे च वधूः । जायास्नुषयोः पार्थक्यं वर्तत इति द्योतनाय

वधूर्जाया स्नुषा स्त्री च सुधा लेपोऽमृतं स्नुही ॥१०१॥
संधा प्रतिज्ञा मर्यादा श्रद्धा संप्रत्ययः स्पृहा ॥
मधु मद्ये पुष्परसे क्षौद्रेऽप्यंधं तमस्यपि ॥ १०२ ॥
अतस्त्रिषु समुन्नद्धौ पंडितंमन्यगर्वितौ ॥
ब्रह्मबंधुरधिक्षेप निर्देशेऽथावलंबितः ॥ १०३ ॥
अविदूरोऽप्यवष्टब्धः प्रसिद्धौ ख्यातभूषितौ ॥इति धांताः॥
सूर्यवह्नी चित्रभानू भानू रश्मिदिवाकरौ ॥ १०४ ॥
भूतात्मानौ धातृदेहौ मूर्खनीचौ पृथग्जनौ ॥
ग्रावाणौ शैलपाषाणौ पत्रिणौ शरपक्षिणौ ॥ १०५ ॥
तरुशैलौ शिखरिणौ शिखिनौ वह्निबर्हिणौ ॥

पृथक् तद्ग्रहणम् । देवालयादि येन लिप्यते सः लेपश्चूर्णविशेषः । सुधा प्रासादभाक् द्रव्यं सुधा विद्युत्सुधामृतम् । सुधाहिभोजनं ज्ञेयं सुधा धात्री सुधा स्नुहीति मंजरी ॥ १०१ ॥ प्रतिज्ञा स्वीकारः । तत्र यथा सत्यसंधः । संप्रत्यय आदरः । स्पृहा कांक्षा तत्र श्रद्धेति । क्षौद्रे माक्षिके । दैत्यचैत्रवसंतेषु द्रुभेदे च पुमान् मधुः । अक्षिहीनेऽप्यंधशब्दः । अंधस्तु तिमिरे क्लीबं चक्षुर्हीनेऽभिधेयवदिति विश्वः ॥ १०२ ॥ अतः परे धांतवर्गपर्यंतास्त्रिषु । पंडितमात्मानं मन्यते पंडितंमन्यः । अधिक्षेपे निंदाप्रयोगे यथा । हे ब्रह्मबंधो दुष्टोऽसीति । ब्रह्मबंधुरधिक्षेपे निर्देशे च द्विजन्मनामिति विश्वः ॥ १०३ ॥ अवलंबितः आश्रितः । अविदूरः सन्निहितः । उभाववष्टब्धौ । ष्टभि प्रतिस्तंभे स्तंभु रोधने वा । अवाच्चालंबनाविदूर्ययोरिति षत्वे अवष्टब्धशब्दः साधुः । अपिशब्दाद्बद्धोऽपि । लेशेऽपि गंधः संबाधो गुह्यसंकटयोर्द्वयोः । बाधा निषेधे दुःखे च ज्ञातृचांद्रिसुरा बुधाः ॥ इति धांताः ॥ अथ नांतानाह ॥ चित्रा भानवो रश्मयो ययोस्तौ ॥ १०४ ॥ धाता च देहश्च । नीचो हीनजातिः । पृथग्जन इति चतुरक्षरम् । "पृथक्कार्यो जनः पृथग्जनः ।" ग्रावा प्रस्तरे जलदे गिराविति । "पत्री श्येने रथे कांडे खगद्रुरथिकाद्रिष्विति विश्वः" ॥ १०५ ॥ बर्हीं मयूरः । "शिखी स्वग्नौ वृक्षे केतुग्रहे शरे । चूडावति बलीवर्दे मयूरे कुक्कुटे हय इति हैमः ।" लिप्सा वांछा । उपग्रह अनुकूलनम् । उभौ प्रतियत्नौ "प्रतियत्नस्तु

प्रतियत्नावुभौ लिप्सोपग्रहावथ सादिनौ ॥ १०६ ॥
द्वौ सारथिहयारोहौ वाजिनोऽश्वेषुपक्षिणः ॥
कुलेऽप्यभिजनो जन्मभूम्यामप्यथ हायनाः ॥१०७॥
वर्षार्चिर्व्रीहिभेदाश्च चंद्राग्न्यर्का विरोचनाः ॥
क्लेशेऽपि[1] वृजिनो विश्वकर्मार्कसुरशिल्पिनोः ॥ १०८ ॥
आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च ॥
शक्रो घातुकमत्तेभो वर्षुकाब्दो घनाघनः ॥ १०९ ॥
घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरंतरे ॥
अभिमानोऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोः ॥ ११० ॥

संस्कारलिप्सोपग्रहणेषु चेति मेदिनी" ॥ १०६ ॥ सारथिरश्वारोहश्च सादिनौ । "सादी तुरंगमारोहे निषादिरथिनोरपीति हैमः ।" अश्वो हयः । इषुः शरः पक्षी चैते वाजिनः । कुले कुलमुख्ये च जन्मभूम्यां जननस्थाने अभिजनः । अभिजनः कुले ख्यातो जन्मभूम्यां कुलध्वजे इति विश्वः ॥१०७॥ वर्षोऽब्दः । अर्ची रश्मिः व्रीहिभेदश्चैते हायनाः । जहात्युदकमिति हायनो व्रीहिः । जहाति भावामिति हायनो वर्षम् । जिहीते प्राप्नोतीति वा । हश्च व्रीहिकालयोरित्यनेन ण्युट् अनादेशः । प्रह्लादपुत्रेऽपि विरोचनः । कल्मषेऽपि क्लीबं वृजिनम् । "वृजिनः क्लेशे वृजिनं भुग्नेऽघे रक्तचर्मणीति हैमः ।" अर्के सुरशिल्पिनि च विश्वकर्मा ॥ १०८ ॥ अततीत्यात्मा । अत सातत्यगमने । मनिन् प्रत्ययः । वर्ष्म देहः । आत्मा कलेवरे यत्ने स्वभावे परमात्मनि । चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि चेति धरणिः । शक्र इंद्रः । घातुकश्चासौ मत्तेभश्चेति कर्मधारयः । तथा वर्षुकश्चासावब्दश्चेति । घनाघन इति चतुरक्षरं नाम । शक्रघातुकमत्तेभवर्षुकाब्दा घनाघना इति क्वचित्पाठः॥१०९॥ मूर्तिगुणे काठिन्ये मेघे च घनः पुंसि । मूर्ते कठिने निरंतरे सांद्रे च त्रिषु । "घनं स्यात्कांस्यतालादिवाद्यमध्यमनृत्तयोः । ना मुस्ताब्द्योघदार्ढ्येषु विस्तारे लोहमुद्गरे । त्रिषु सांद्रे दृढे चेति मेदिनी ।" अर्थपशुकुलगुणादिभिर्यो दर्पस्तस्मिन् ज्ञाने प्रणये हिंसायां चाभिमानः ॥ ११० ॥ प्रभौ नृपे च पत्यौ वा

१ 'क्लेशेऽपि'–इत्यत्र 'केशेऽपि'–इति पाठोऽपि क्वचिद्दृश्यते ॥

इनः सूर्ये प्रभौ राजा मृगांके क्षत्रिये नृपे ॥
वाणिन्यौ नर्तकीदूत्यौ स्रवंत्यामपि वाहिनी ॥ १११ ॥
ह्लादिन्यौ वज्रतडितौ वंदायामपि कामिनी ॥
त्वग्देहयोरपि तनुः सूनाऽधोजिह्विकाऽपि च ॥११२॥
क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके ॥
मंदेऽथ केतनं कृत्ये केतावुपनिमंत्रणे ॥ ११३ ॥
वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः ॥
उत्साहने च हिंसायां सूचने चापि गंधनम् ॥ ११४ ॥
आतंचनं प्रतीवापजवनाप्यायनार्थकम् ॥
व्यंजनं लांछनं श्मश्रुनिष्ठानावयवेष्वपि ॥ ११५ ॥
स्यात्कौलीनं लोकवादे युद्धे पश्वहिपक्षिणाम् ॥

मृगांकादौ राजशब्दः । "राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ । यक्षे शक्रे च पुंसि स्यादिति मेदिनी ।" मृगांकश्चंद्रः । "नर्तकीदूत्यौ वाणिन्यौ । वाणिनी नर्तकीमत्ताविदग्धावनितासु चेति मेदिनी ।" स्रवंत्यां नद्यां सेनायामपि ॥ १११ ॥ वज्रं कुलिशम् । तडिद्विद्युत् । वंदावृक्षे विजातीयप्ररोहे । योषिन्मात्रे विलासिन्यामपि कामिनीशब्दो वर्तते । तनुः काये त्वचि स्त्री स्यात्रिष्वल्पे विरले कृश इति मेदिनी । अधोजिह्विका गलकंठिका सा सूना । अपिशब्दात्पुत्र्यां वधस्थानेऽपि ॥ ११२ ॥ क्रतुर्यज्ञः । तुच्छके शून्ये मंदे च वितानं त्रिषु । मंदे यथा । वितानभूतहृदयः । केतौ ध्वजे उपनिमंत्रणे निवासेऽपि केतनम् ॥ ११३ ॥ तत्त्वं चैतन्यम् । तपो ब्रह्म यथा ब्रह्मचारीति । वेदादित्रये ब्रह्मशब्दः क्लीबे । विप्रवेधसोः पुंसि । "ऋत्विग्योगभिदोश्च । सूचने आशयप्रकाशनेऽपि" ॥ ११४ ॥ प्रतीवापः क्षीरादौ तक्रादेर्निक्षेपः । जवनं वेगः । आप्यायनं प्रीणनम् । एतदर्थकमातंचनम् । लांछनं चिह्नम् । निष्ठानं तेमनम् । अवयवोऽवयवभेदः । स्त्रीपुंसयोरिति यावत् । एतेषु व्यंजनं नाम ॥ ११५ ॥ लोकवादे लोकापवादे पश्वादीनां युद्धे च "कुलीनत्वे च" कौलीनम् । निःसरणे ग्रहादेर्निर्गमे उपत्रने प्रयोजने च

स्यादुद्यानं निःसरणे वनभेदे प्रयोजने ॥ ११६ ॥
अवकाशे स्थितौ स्थानं क्रीडादावपि देवनम् ॥
उत्थानं पौरुषे तंत्रे सन्निविष्टोद्गमेऽपि च ॥ ११७ ॥
व्युत्थानं प्रतिरोधे च विरोधाचरणेऽपि च ॥
मारणे मृतसंस्कारे गतौ द्रव्येऽर्थदापने ॥ ११८ ॥
निर्वर्तनोपकरणानुव्रज्यासु च साधनम् ॥
निर्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि च ॥ ११९ ॥
व्यसनं विपदि भ्रंशे दोषे कामजकोपजे ॥
पक्ष्माक्षिलोम्नि किंजल्के तंत्वाद्यंशेऽप्यणीयसि ॥१२०॥
तिथिभेदे क्षणे पर्व वर्त्म नेत्रच्छदेऽध्वनि ॥

उद्यानं नाम ॥ ११६ ॥ "स्थानं नित्यावकाशयोः । सादृश्ये सन्निवेशे चेति हैमः ।" क्रीडायां व्यवहारे जिगीषादौ देवनम् । अक्षेषु देवनः प्रोक्त इति विश्वः । पौरुषे उद्योगे । तंत्रं कुटुंबकृत्ये स्यात्सिद्धांते चौषधो-द्यमे । सन्निविष्टस्योद्गमे ऊर्ध्वीभवने । "उत्थानमुद्यमे तंत्रे पौरुषे पुस्तके रणे । प्रांगणोद्गमहर्षेषु मलरोमेऽपि न द्वयोरिति मेदिनी" ॥ ११७ ॥ प्रतिरोधे तिरस्कारे । "स्वातंत्र्यकृत्येऽपि व्युत्थानम् ।" मारणाद्यष्टके सैन्ये भेद्रे च साधनमिति नाम । तत्र मारणे यथा पारदसाधनम् । मृतसंस्कारेऽग्नि-दाहे । गतौ गमने । द्रव्ये धने । अर्थस्य धनादेर्दापने ॥११८॥ निर्वर्तनं अर्थ-निष्पादनम् । उपकरणं परिकरः । उपाय इति केचित् । अनुव्रज्या अनुगमनम् । दाने त्यागे । न्यासार्पणे निक्षिप्तद्रव्यस्यार्पणे निर्यातनम् ॥११९॥ भ्रंशे अपाये पतने वा । दोष इत्यस्य प्रत्येकं संबंधः । कामजदोषस्तु मृगयाद्यूतस्त्रीमद्यपानेषु प्रसक्तिः । कोपजदोषस्तु वाक्पारुष्यादिः । "व्यसनं त्वशुभे सक्तौ पानस्त्री-मृगयादिषु । दैवानिष्टफले पापे विपत्तौ निष्फलोद्यमे इति मेदिनी ।" अक्षि-लोम्नि चक्षुर्लोम्नि किंजल्के केसरे । अणीयसि तंत्वाद्यंशे अल्पतरे सूत्रा-द्यंशे । पक्ष्मेति नांतम् ॥ १२० ॥ तिथिभेदेऽष्टमीदर्शादौ क्षणे, उत्सवे पर्व । "पर्व प्रस्तावोत्सवयोर्ग्रंथौ विषुवदादिषु । दर्शप्रतिपत्संधौ च तिथिग्रंथ-विशेषयोरिति हैमः ।" नेत्रपिधायकचर्मपुटे अध्वनि मार्गे वर्त्म ॥ अकार्ये

अकार्यगुह्ये कौपीनं मैथुनं संगतौ रते ॥ १२१ ॥
प्रधानं परमात्मा धीः प्रज्ञानं बुद्धिचिह्नयोः ॥
प्रसूनं पुष्पफलयोर्निधनं कुलनाशयोः ॥ १२२ ॥
क्रंदने रोदनाह्वाने वर्ष्म देहप्रमाणयोः ॥
गृहदेहत्विट्प्रभावा धामान्यथ चतुष्पथे ॥ १२३ ॥
सन्निवेशे च संस्थानं लक्ष्म चिह्नप्रधानयोः ॥
आच्छादने संपिधानमपवारणमित्युभे ॥ १२४ ॥
आराधनं साधने स्यादवाप्तौ तोषणेऽपि च ॥
अधिष्ठानं चक्रपुरप्रभावाध्यासनेष्वपि ॥ १२५ ॥
रत्नं स्वजातिश्रेष्ठेऽपि वने सलिलकानने ॥

अकरणार्हे गुह्ये उपस्थे कौपीनम् । कूपपतनमर्हतीति कौपीनं पापं तत्साधनत्वात्तद्वत् गोप्यत्वाद्वा पुरुषलिंगमपि तदाच्छादनत्वाद्वस्त्रमपि । संगतौ भार्यादिसंबंधे । रते सुरते मैथुनं स्यात् ॥ १२१ ॥ धीः बुद्धिः । महामात्रे । "प्रकृतौ प्रज्ञायां" च प्रधानम् । बुद्धिचिह्नयोः प्रज्ञानम् । "प्रसूनो वाच्यवज्जाते क्लीबं तु फलपुष्पयोरिति मेदिनी ।" कुले वंशे ॥ १२२ ॥ आह्वानमारावः । उभे क्रंदनसंज्ञे । प्रमाणमियत्ता । उभयोर्वर्ष्म । "वर्ष्म देहप्रमाणातिसुंदराकृतिषु स्मृतमिति मेदिनी ।" गृहादीनि चत्वारि धामशब्दवाच्यानि । "धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोरिति हैमः ।" चतुष्पथे शृंगाटके ॥ १२३ ॥ सन्निवेशे अवयवविभागे संस्थानम् । "संस्थानं स्वाकृतौ मृतौ । चतुष्पथे सन्निवेश इति हैमः ।" "चिह्ने प्रधाने लक्ष्म ।" संपिधानं तिरोधानम् । अपवारणं वस्त्रादिना परिवृतिः । उभे आच्छादनसंज्ञे । वस्त्रेऽप्याच्छादनम् ॥ १२४ ॥ साधने निष्पादने अवाप्तौ लाभे तोषणे तुष्टौ आराधनं स्यात् । चक्रं रथांगम् । पुरं नगरम् । अध्यासनमाक्रमणं अधिष्ठानं स्यात् ॥ १२५ ॥ स्वजातिश्रेष्ठे रत्नम् । यथा स्त्रीरत्नम् । मणावपि । सलिलं जलम् । काननमरण्यम् । उभे वने । "वनं प्रस्रवणे गेहे प्रवाहेऽभसि कानन इति हैमः ।" विरले सांतरे । स्तोकेऽल्पे । तलिनम् । 'स्वच्छे च ।" तलप्रतिष्ठायामिति धातोरिनन् । यथा

तलिनं विरले स्तोके वाच्यलिंगं तथोत्तरे ॥ १२६ ॥
समानाः सत्समैके स्युः पिशुनौ खलसूचकौ ॥
हीनन्यूनावूनगर्ह्यौ वेगिशूरौ तरस्विनौ ॥ १२७ ॥
अभिपन्नोऽपराद्धोऽभिग्रस्तव्यापन्नतावपि॥इति नांताः॥
कलापो भूषणे बर्हे तूणीरे संहतावपि ॥ १२८ ॥
परिच्छदे परीवापः पर्युप्तौ सलिलस्थितौ ॥
गोधुग्गोष्ठपती गोपौ हरविष्णू वृषाकपी ॥ १२९ ॥
बाष्पमूष्माश्रु कशिपु त्वन्नमाच्छादनं द्वयम् ॥

तलिनं वाच्यलिंगं तथा उत्तरेऽपि नांतसमाप्तिपर्यंतं वाच्यलिंगाः ॥ १२६ ॥ सन् पंडितः समः सदृशः एकश्चैते समानाः स्युः । एकस्मिन्नर्थे यथा । समानोदरौ बंधू एकोदरावित्यर्थः । खलो दुर्जनः । सूचकः कर्णेजपः उभौ पिशुनौ । "पिशुनं कुंकुमेऽपि च । कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिष्विति मेदिनी ।" ऊनोऽल्पः गर्ह्यो निंद्यः द्वावेतौ हीनन्यूनशब्दवाच्यौ । वेगी वेगयुक्तः । शूरो बली ॥ १२७ ॥ अपराद्धोऽपराधवान् । अभिग्रस्तः शत्रुणाक्रांतः । व्यापद्गतः प्राप्तविपत्कः । एते अभिपन्नवाच्याः । प्रक्षिप्तश्लोकद्वयं लिख्यते । दंडे भूम्यादिदानार्थं यातनाऽऽज्ञा च शासनम् । निदानमवसाने च सार्थे वार्द्धुषिके धनी । कक्षापटेऽपि कौपीनं न ना खेदेऽपि वेदना । शुल्कं बलेऽथ भार्यापि जातिदोषेऽपि लांछनम् ॥ इति नांताः ॥ भूषणे अलंकारमात्रे । बर्हे मयूरपिच्छे । तूणीरे इषुधौ । संहतौ समुदाये । कांच्यां च "कलापशब्दः" ॥ १२८ ॥ परिच्छदः पटमंडपाद्युपकरणम् । पर्युप्तिः सर्वतो वपनम् । डुवप् बीजसंताने धातुः । सलिलस्थितौ जलाधारे परीवापः । गां दोग्धीति गोधुग्गोपालः गोष्ठाध्यक्षश्च गोपौ । "गोपो ग्रामौघगोष्ठाधिकृतयोर्वल्लवे नृप इति विश्वः ।" वृषाकपिसंज्ञौ हरो विष्णुश्च "अग्निश्च" ॥ १२९ ॥ उष्मोष्णम् । अश्रु नेत्रोदकं च वाष्पसंज्ञम् । अथवोष्माश्रु इत्येकं वाष्पसंज्ञमिति वदंति । अन्नं भोजनम् । आच्छादनं वस्त्रम् । एतत् द्वयं कशिपुसंज्ञम् । वक्ष्यमाणमस्त्रियामिति कशिपौ तल्पे चान्वीयते । अट्टोऽट्टालिका । दाराः स्त्री । अत्र यथा गुरुतल्पः । स्तंबे तृणादिगुच्छे । अपिशब्दाद्विस्तार-

तल्पं शय्याट्टदारेषु स्तंबेऽपि विटपोऽस्त्रियाम् ॥ १३० ॥
प्राप्तरूपस्वरूपाभिरूपा बुधमनोज्ञयोः ॥
भेद्यलिंगा अमी कूर्मी वीणाभेदश्च कच्छपी ॥ १३१ ॥
("कुतपो मृगरोमोत्थपटे चाह्नोऽष्टमेंऽशके ॥" इति पांताः ॥
रवर्णे पुंसि रेफः स्यात्कुत्सिते वाच्यलिंगकः ॥ )
इति फांताः ॥ (१)
अंतराभवसत्त्वेऽश्वे गंधर्वो दिव्यगायने ॥ १३२ ॥
कंबुर्ना वलये शंखे द्विजिह्वौ सर्पसूचकौ ॥
पूर्वोऽन्यलिंगः प्रागाह पुंबहुत्वेऽपि पूर्वजान् ॥ १३३ ॥
इति बांताः ॥

शास्त्रयोश्च । "पल्लवे विटाधिपेऽपि" विटपः ॥१३०॥ अमी प्राप्तरूपादयस्त्रयः पांता भेद्यलिंगाः बुधे पंडिते मनोज्ञे मनोहरे च वर्तते । प्राप्तं रूपं येन प्राप्तरूपः । स्वमेव रूपं यस्य स्वरूपः । अभिलक्ष्यं रूपमस्याभिरूपः ।" कूर्मी कमठी । वीणाभेदः सारस्वतीवीणा । सरस्वत्यास्तु कच्छपीत्युक्तत्वात् । द्वे कच्छपीसंज्ञे । कच्छपी वल्लकीभेदे हुलौ क्षुद्रगदांतर इति विश्वः ॥१३१॥ "कुतपो मृगरोमोत्थपटे चाह्नोऽष्टमेंऽशके इत्यन्यत्र क्वचित् ।" इति पांताः ॥ रवर्णे राक्षरे रेफः पुंसि । यथा रेफे परे लोपः । कुत्सिते रेफो वाच्यलिंगकः । शिफा शिखायां सरिति मांसिकायां च मातरि । शफं मूले तरूणां स्याद्गवादीनां खुरेऽपि च ॥ गुंफः स्याद्गुंफने बाहोरलंकारे च कीर्तितः । इति सार्धं पद्यं मूलादेवरत् ॥ इति फांताः ॥ अथ बवयोः सावर्ण्यत्वात् बांतान्वांतांश्चाह । यो मरणजन्मनोरंतराले स्थितः प्राणी सोंऽतराभवसत्त्वः तस्मिन् । अश्वे घोटके । दिव्यगायने विश्वावसुप्रभृतौ । गायनमात्रे च गंधर्वः । "गंधर्वस्तु नभश्चरे । पुंस्कोकिले गायने च मृगभेदे तुरंगमे । अंतराभवदेहे चेति हैमः" ॥ १३२ ॥ ना पुंसीत्यर्थः । गजशंबूकयोरपि कंबुः । "ग्रीवायां च ।" सूचकः पिशुनः । पूर्वशब्दः प्राग्वाची वाच्यलिंगकः । यथा । पूर्वा नदी पूर्वो ग्रामः पूर्वं वनम् । यदा तु पूर्वजान् पितामहादीनाह तदा पुंसि बहुत्वे वर्तते । यल्लक्ष्यम् । पूर्वेषामपि पूर्वजाः इति । पूर्वे स्युः पूर्वजाः पूर्वे ज्ञातय इति धरणिः । प्राक् पूर्वमग्रत इति च ॥ १३३ ॥ इति बांताः ॥ घटः कलशः इभस्य गजस्य

१ इदं पद्यमपि तालपत्रपुस्तके नास्ति ॥

कुंभौ घटेभमूर्द्धांशौ डिंभौ तु शिशुबालिशौ ॥
स्तंभौ स्थूणाजडीभावौ शंभू ब्रह्मत्रिलोचनौ ॥१३४॥
कुक्षिभ्रूणार्भका गर्भा विस्रंभः प्रणयेऽपि च ॥
स्याद्भेर्यां दुंदुभिः पुंसि स्यादक्षे दुंदुभिः स्त्रियाम् ॥१३५॥
स्यान्महारजने क्लीबं कुसुंभं करके पुमान् ॥
क्षत्रियेऽपि च नाभिर्ना सुरभिर्गवि च स्त्रियाम् ॥१३६॥
सभा संसदि सभ्ये च त्रिष्वध्यक्षेऽपि वल्लभः ॥ इति भांताः ॥
किरणप्रग्रहौ रश्मी कपिभेकौ प्लवंगमौ ॥ १३७ ॥
इच्छामनोभवौ कामौ शौर्योद्योगौ पराक्रमौ ॥

मूर्द्धांशः शिरोभागः । “कुंभः स्यात्कुंभकर्णस्य सुते वेश्यापतौ घटे ॥ राशिभेदे द्विपांगे चेति विश्वः ।” बालिशो मूर्खः । स्थूणा गृहस्तंभः । जडीभावो जडत्वम् । “शंभुर्ब्रह्मार्हतोः शिव इति हैमः” ॥ १३४ ॥ भ्रूणो गर्भस्थो जंतुः । अर्भकः शिशुः । एते गर्भाः । “गर्भः कुक्षौ शिशौ संधौ भ्रूणे पनसकंटक इति हैमः ।” प्रणये शृंगारप्रार्थनायां अपिशब्दाद्विश्वासादौ विस्रंभः विश्रंभोऽपि । “विश्रंभः केलिकलहे विश्वासे प्रणये वध इति विश्वहैमौ ॥” दुंदुभिर्भेर्यां पुंसि । अक्षे बालक्रीडोपकरणे तितरिंगि इति देशांतरप्रसिद्धे स्त्रियाम् । “दुंदुभिः पुमान् । वरुणे दैत्यभेर्योश्च स्त्र्यक्षबिंदुत्रिकद्वये इति मेदिनी” ॥ १३५ ॥ महारजने पुष्पभेदे । येन रक्तं वस्त्रं कौसुंभम् । करके कमंडलौ । क्षत्रिये नाभिः पुंसि । अपिशब्दान्मुख्यनृपे चक्रमध्ये च । प्राण्यंगे तु द्वयोः । मृगभेदे तु स्त्रियाम् । गवि सौरभेय्याम् । सुरभिः स्त्री । चकाराद्वसंतजातीफलचंपकेषु ना । सुगंधिमनोज्ञयोस्त्रिषु । “सुवर्णे पंकजे च क्लीबम्” ॥ १३६ ॥ संसदि सदसि । सभ्यः सदस्यः । “स्त्रियां सामाजिके गोष्ठ्यां द्यूतमंदिरयोः सभेति रभसः ।” अपिशब्दाद्दयिते । “कुलीनाश्वे” च वल्लभः । वल्लभो दयितेऽध्यक्षे सलक्षणतुरंगम इति कोशांतरात् ॥ इति भांताः ॥ अथ मांतानाह । अश्वादेर्बंधनरज्जुः प्रग्रहः । रश्मिः पुमान् दीधितौ स्यात्पक्ष्मप्रग्रहयोरपीति मेदिनी ॥ १३७ ॥ मनोभवो मदनः । शौर्यं सामर्थ्यम् । पुण्यादौ षट्के धर्मशब्दस्तत्र । यमोऽतकः । न्याये यथा धर्मा-

धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः ॥ १३८ ॥
उपायपूर्व आरंभ उपधा चाप्युपक्रमः ॥
वणिक्पथः पुरं वेदो निगमो, नागरो वणिक् ॥१३९॥
नैगमौ द्वौ बले रामो नीलचारुसिते त्रिषु ॥
शब्दादिपूर्वो वृंदेऽपि ग्रामः क्रांतौ च विक्रमः ॥१४०॥
स्तोमः स्तोत्रेऽध्वरे वृंदे जिह्मस्तु कुटिलेऽलसे ॥
उष्णेऽपि घर्मश्चेष्टालंकारे भ्रांतौ च विभ्रमः ॥१४१॥
गुल्मा रुक्स्तंबसेनाश्च जामिः स्वसृकुलस्त्रियोः ॥

ध्यक्षः । स्वभावे यथा क्रूरधर्मा । आचारे धर्मशास्त्रोक्ते । सोमं पिबति स्म सोमपः ॥ १३८ ॥ उपायं ज्ञात्वा य आरंभः स उपायपूर्वः । अमात्यशीलपरीक्षोपाय उपधा । चिकित्सायां चोपक्रमः । उपक्रमः स्यादुपधा चिकित्सारंभविक्रम इति विश्वः ।" वणिक्पथो वाणिज्यम् । पुरं नगरम् । वेद आम्नायः । एते निगमाः । "निगमो वाणिजे पुर्यां कटे वेदे वणिक्पथ इति मेदिनी ।" नगरे भवो नागरः वणिक् चैतौ "द्वौ" नैगमौ । "नैगमः स्यादुपनिषद्वणिजोर्नागरेऽपि चेति मेदिनी" ॥ १३९ ॥ बले बलदेवे पुंसि । नीलादिषु त्रिलिंग्यां रामशब्दः । नीलोऽसितः । चारुः मनोज्ञः । "रामः पशुविशेषे स्याज्जामदग्न्ये हलायुधे । राघवे चासिते श्वेते मनोज्ञेऽपि च वाच्यवदिति कोशांतरम् ।" शब्दादिपूर्वो ग्रामशब्दो वृंदे वर्तते । यथा शब्दग्रामः । अपिशब्दात्संवसथे "स्वरे च" ग्रामः । क्रांतिर्विक्रमणं पराक्रमे च विक्रमः ॥ १४० ॥ क्वचिदत्र स्तोमेत्यादिपद्यममूलकमस्ति । अपिशब्दात्स्वेदांभसि घर्मः । चेष्टालंकारो हावः । शोभायां च विभ्रमः" ॥ १४१ ॥ रुक् रोगभेदः प्लीहाख्यः । स्तंबः कुशादिगुच्छो बेट इति ख्यातः । सैन्यरक्षणे च गुल्मशब्दः । "गुल्मः सेनाघट्टभिदोः सैन्यरक्षणरुग्भिदोः । स्तंब इति मेदिनी ।" स्वसा भगिनी । कुलस्त्री कुलवधूः तयोर्जामिशब्दः । "प्रहरे संयमे यामो यामिः स्वसृकुलस्त्रियोरिति रभसात् यामिः कुलस्त्रीस्वस्रोः स्त्रीति कोशांतराच्च अंतस्थादिरपि ।" क्षितिर्भूमिः । क्षांतिस्तितिक्षा तयोः क्षमा । युक्ते योग्ये "क्षमम्" शक्ते हिते क्षमस्त्रिलिंगः । "धरणिस्तु

क्षितिक्षांत्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिषु ॥१४२॥
त्रिषु श्यामौ हरित्कृष्णौ श्यामा स्याच्छारिवा निशा ॥
ललामं पुच्छपुंड्राश्वभूषाप्राधान्यकेतुषु ॥ १४३ ॥
सूक्ष्ममध्यात्ममप्याद्ये प्रधाने प्रथमस्त्रिषु ॥
वामौ वल्गुप्रतीपौ द्वावधमौ न्यूनकुत्सितौ ॥ १४४ ॥
जीर्णं च परिभुक्तं च यातयाममिदं द्वयम् ॥ इति मांताः ॥
तुरंगगरुडौ तार्क्ष्यौ निलयापचयौ क्षयौ ॥
श्वशुर्यौ देवरश्यालौ भ्रातृव्यौ भ्रातृजद्विषौ ॥ १४५ ॥

योग्ये शक्ते हिते क्षममित्याह" ॥ १४२ ॥ हरित्पालाशः । कृष्णः कालः उभौ श्यामौ । शारिवा शतावरी निशा च श्यामा । "श्यामो वटे प्रयागस्य वारिदे वृद्धदारके । पिके च कृष्णहरितोः पुंसि स्यात्तद्वति त्रिषु । मरीचे सिंधुलवणे क्लीबं स्त्री शारिवौषधौ । अप्रसूतांगनायां च प्रियंगावपि चोच्यते । यमुनायां त्रियामायां कृष्णत्रिवृतिकौषधौ । नीलिकायामिति मेदिनी ।" पुंड्रमश्वादीनां ललाटचित्रम् । अश्वो घोटकः । "भूषा सामीप्यादश्वस्यैव ।" प्राधानमेव प्राधान्यम् । केतुर्ध्वजः षट्सु ललामम् । "ललामेत्यपि । प्रधानध्वजशृंगेषु पुंड्रवालधिलक्ष्मसु ॥ भूषावाजिप्रभावेषु ललामं स्याल्ललाम चेति रुद्रः" ॥ १४३ ॥ अध्यात्मं आत्मन्यधिकृतं लिंगदेहम् । अपिशब्दात्कैतवे । सूक्ष्मं स्यात्कैतवेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पक इति मेदिनी । आद्ये आदौ प्रधाने मुख्ये प्रथमः । त्रिष्विति यावन्मांतमधिकारः । प्रतीपो विपरीतः । वल्गुर्यथा । वामलोचनाः स्त्रियः । "वामः कामे सव्ये पयोधरे । उमानाथे प्रतीकूले चारौ वामा तु योषितीति हैमः ।" न्यूनश्च कुत्सितश्चाधमौ ॥ १४४ ॥ जीर्णं प्राप्तपरिणामम् । परिभुक्तं भुक्तोज्झितम् । द्वयं यातयामसंज्ञम् । यातः यामः उपभोगकालो यस्य । तदुक्तं हैमे । यातयामोऽन्यवज्जीर्णे परिभुक्तोज्झितेऽपि चेति ॥ इति मांताः ॥ अथ यांतानाह । अश्वगरुडौ तार्क्ष्यसंज्ञौ । "तार्क्ष्यस्तु स्यंदने वाहे गरुडे गरुडाग्रजे ॥ अश्वकर्णाह्वयतरौ स्यादिति हैमः ।" निलयो गृहम् । अपचयो ह्रासः । उभौ क्षयौ । "क्षयो गेहे कल्पांतेऽपचये रुजीति हैमः । श्यालो भार्याभ्राता । श्वशुरस्यापत्यं श्वशुर्यः । भ्रातृपुत्रः शत्रुपुत्रश्च भ्रातृव्यौ ॥ १४५ ॥ ससदृशो ध्वन-

पर्जन्यौ रसदब्देंद्रौ स्यादर्यः स्वामिवैश्ययोः ॥
तिष्यः पुष्ये कलियुगे पर्यायोऽवसरे क्रमे ॥ १४६ ॥
प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु ॥
रंध्रे शब्देऽथानुशयो दीर्घद्वेषानुतापयोः ॥ १४७ ॥
स्थूलोच्चयस्त्वसाकल्ये नागानां मध्यमे गते ॥
समयाः शपथाचारकालसिद्धांतसंविदः ॥ १४८ ॥
व्यसनान्यशुभं दैवं विपदित्यनयास्त्रयः ॥
अत्ययोऽतिक्रमे कृच्छ्रे दोषे दंडेऽप्यथापदि ॥१४९॥
युद्धायत्योः संपरायः पूज्यस्तु श्वशुरेऽपि च ॥

दंबुदः । इंद्रः शक्रः । उभौ पर्जन्यौ । "मेघशब्देऽपि पर्जन्यः" प्रभुवैश्ययोरर्यः । पुष्यर्क्षे तुर्ययुगे च तिष्यः । अवसरे प्रस्तावे क्रमे च पर्यायः । "पर्यायस्तु प्रकारे स्यान्निर्माणेऽवसरे क्रम इति विश्वः" ॥ १४६ ॥ प्रत्ययनं प्रत्ययः । प्रतीयते अनेन वा प्रत्येतीति वा प्रत्ययः । इण्गतौ एरच् अथवा पचादित्वात् साधुः । अधीनादिषु सप्तसु प्रत्ययशब्दस्तत्राऽधीने यथा । राजप्रत्ययाः प्रजाः । शपथः शपनम् । ज्ञाने यथा । प्रत्यक्षप्रत्ययः । विश्वासे यथा । न शत्रोः प्रत्ययं गच्छेत् । हेतौ यथा । गार्हस्थ्यं भार्याप्रत्ययम् । रंध्रे छिद्रे । शब्दे यथा । चिकीर्षतीत्यत्र सन् प्रत्ययः । "प्रत्ययः शपथे रंध्रे विश्वासाचारहेतुषु । प्रथितत्वे च सन्नादावधीनज्ञानयोरपीति विश्वः ।" चिरद्वेषे पश्चात्तापे चानुशयः । "अनुबंधे च" ॥१४७॥ असाकल्येऽकात्स्न्र्ये । नागानां हस्तिनां यन्न शीघ्रं नापि मंदं गमनं तत्रेत्यर्थः । स्थूलोच्चयो गंडोपलेऽपि च । गजानां मध्यमगतेऽप्यसाकल्यकंरडयोरिति मेदिनी । शपथादयः समयाः । तत्र शपथे यथा । कृतसमयोऽपि चोरो दंड्यः । संवित् संभाषा । "समयः शपथे भाषासंपदोः कालसंविदोः । सिद्धांताचारसंकेतनियमावसरेषु च । क्रियाकारे च निर्देशे इति हैमः" ॥ १४८ ॥ व्यसनानि द्यूतादीनि । अशुभमिति दैवविशेषणम् । विपद्विपत्तिरेतत्त्रयं अनयसंज्ञम् । अशुभदैवे यथा । निःस्वोऽभूदनयेन सः । अतिक्रमे उल्लंघने । "अपिशब्दात् नाशे चात्ययः ।" आपदादित्रये संपरायः ॥ १४९ ॥ आयतिः उत्तरकालः । अपिशब्दात्पूजार्हेऽपि पूज्यः । सेनायाः पृष्ठभागे

पश्चादवस्थायिबलं समवायश्च संनयौ ॥ १५० ॥
संघाते सन्निवेशे च संस्त्यायः प्रणयास्त्वमी ॥
विस्रंभयाच्ञाप्रेमाणो विरोधेऽपि समुच्छ्रयः ॥ १५१ ॥
विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि ॥
निर्यासेऽपि कषायोऽस्त्री सभायां च प्रतिश्रयः ॥१५२॥
प्रायो भूम्न्यंतगमने मन्युर्दैन्ये क्रतौ क्रुधि ॥
रहस्योपस्थयोर्गुह्यं सत्यं शपथतथ्ययोः ॥ १५३ ॥
वीर्यं बले प्रभावे च द्रव्यं भव्ये गुणाश्रये ॥
धिष्ण्यं स्थाने गृहे भेऽग्नौ भाग्यं कर्म शुभाशुभम् ॥१५४॥
कशेरुहेम्नोर्गांगेयं विशल्या दंतिकाऽपि च ॥

तिष्ठति यत्सैन्यं तत्पश्चादवस्थायिबलम् । समवायः समूहः । उभौ संनयौ ॥ १५० ॥ सन्निवेशे स्थानविशेषे " विस्तृतौ च संस्त्यायः । " अमी विस्रंभादयस्त्रयः प्रणयाः । विस्रंभो विश्वासः । " प्रसरश्च प्रणयः । " वैरोन्नत्योः समुच्छ्रय इति रभसः ॥ १५१ ॥ यस्य मत्स्यादेर्यो जलादिर्ज्ञातो निरसेवितस्तस्य तत्र विषयः । शब्दादिकाः शब्दस्पर्शरूपरसगंधाश्च विषयाः । देशगोचरौ विषयौ । निर्यासः क्वाथरसः । अपिशब्दाद्विलेपनादौ । कषायो रसभेदे स्यादंगरागे विलेपन इति विश्वः । आश्रये " अभ्युपगमे " च प्रतिश्रयः ॥ १५२ ॥ भूम्नि बाहुल्ये । यथा प्रायेण ब्राह्मणा भोज्याः । बाहुल्येनेत्यर्थः । अंतो नाशो गम्यतेनेन । तत्रानशने यथा । प्रायोपवेशः कृतः । प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययोरपीति विश्वः । क्रतौ यज्ञे कोपे च मन्युः । " शोके च । " रहस्यं गोप्यम् । तथ्यमृतम् । " कृतयुगे च सत्यम् " ॥ १५३ ॥ बलं सामर्थ्यम् । प्रभावस्तेजोविशेषः । तत्र वीर्यम् । " वीर्यं तेजःप्रभावयोः । शुक्रे शक्तौ चेति हैमः । " भव्ये सत्त्वे गुणाश्रये पृथिव्यादौ द्रविणे च द्रव्यम् । " द्रव्यं भव्ये धने क्ष्मादौ जतुद्रुमविकारयोः । विलेपे भेषजे रीत्यामिति हैमः । " भे नक्षत्रे । अग्नौ वह्नौ । शुभाशुभमिति शुभमशुभं वा जन्मांतरीयं यत्कर्म तद्भाग्यमित्युच्यते । ऐश्वर्येऽपि ॥ १५४ ॥ कशेरु स्वनाम्नैव ख्यातम् । दंतिका निकुंभः । अपिशब्दादग्निशिखा गुडूच्यपि विशल्या । " त्रिपुटायां च । " श्रीर्लक्ष्मीः । " वृषाकपायी जीवंत्यां

वृषाकपायी श्रीगौर्योरभिख्या नामशोभयोः ॥ १५५ ॥
आरंभो निष्कृतिः शिक्षा पूजनं संप्रधारणम् ॥
उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः ॥१५६॥
छाया सूर्यप्रिया कांतिः प्रतिबिंबमनातपः ॥
कक्ष्या प्रकोष्ठे हर्म्यादेः कांच्यां मध्येभबंधने ॥ १५७ ॥
कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः ॥
जन्यं स्याज्जनवादेऽपि जघन्योंऽत्येऽधमेऽपि च ॥ १५८ ॥

शतावर्युमयोः श्रियामिति हैमः ।" नामाभिधानम् । शोभा कांतिः तत्राभिख्येति । "अभिख्या त्वभिधाने स्याच्छोभायां च यशस्यपीति मेदिनी" ॥ १५५ ॥ आरंभादयो नव शब्दाः क्रियाशब्दवाच्यास्तत्रारंभे यथा । सर्वाः क्रिया मंत्रमूला नृपाणाम् । निष्कृतौ प्रायश्चित्ते यथा । महापातकिनां पुंसां क्रिया प्राणांतिका स्मृता । शिक्षायां यथा । क्रिया हि वस्तूपहिता प्रसीदति । पूजने यथा । देवक्रियापरस्तपस्वी । संप्रधारणं विचारः । तत्र यथा । क्रियां विना को हि जानाति कृत्यम् । उपाये यथा । सप्त सामादिकाः क्रियाः । कर्मणि यथा । निष्क्रियस्य कुतः सुखम् । चेष्टायां यथा । मृतः किं निष्क्रियो यतः । चिकित्सायां यथा पूर्वं ज्वरे समुत्पन्ने क्रिया पूर्वज्वरानुगा ॥१५६॥ सूर्यप्रियादिचतुष्के छायाशब्दः । सूर्यप्रिया शनैश्चरमाता । कांतौ यथा । विच्छायः । प्रतिबिंबे यथा । संछाय आदर्शः । आतपाभावे यथा । नष्टच्छायो मध्याह्नः । "छाया पंक्तौ प्रतिमायामर्कयोषित्यनातपे । उत्कोचे पालने कांतौ शोभायां च तमस्यपीति मेदिनी ।" हर्म्यादेः राजगृहादेः प्रकोष्ठेऽतर्गृहे । यथा । सप्त कक्ष्या अतिक्रम्येति । कांची मेखला । मध्येभबंधने वरत्रायाम् । मध्ये भागे यदिभबंधनं तत्रेत्यर्थः । "कक्ष्या गृहप्रकोष्ठे स्यात्सादृश्योद्योगकांचिषु । बृहत्तिकेभनाड्योश्चेति हैमः" ॥ १५७ ॥ क्रिया कर्म । कृत्या देवतानामसद्दैवतविशेषः । यल्लक्ष्यं भागवते । तया स निर्ममे तस्मै कृत्यां कालानलोपमामिति । क्रियायां यथा । कां कां कृत्यामकार्षीः । धनस्त्रीभूम्यादिभिर्भेदनीयो यः परराष्ट्रगतपुरुषादिस्तत्र कृत्याशब्दो वाच्यलिंगः । जनवादे निंदितवादे । अपिशब्दाद्युद्धादौ । "जन्यं हट्टे परीवादे संग्रामे च नपुंसकमिति मेदिनी ।" अंत्येऽधमे च जघन्यः । अपिशब्दाच्छिश्ने । "जघन्यं हेमले क्लीबं चरमे गर्हितेऽन्यवदिति मेदिनी" ॥१५८॥ चक्रा-

गर्ह्याहीनौ च वक्तव्यौ कल्यौ सज्जनिरामयौ ॥
आत्मवाननपेतोऽर्थादर्थ्यौ पुण्यं तु चार्वपि ॥ १५९ ॥
रूप्यं प्रशस्तरूपेऽपि वदान्यो वल्गुवागपि ॥
न्याय्येऽपि मध्यं सौम्यं तु सुंदरे सोमदैवते ॥ १६० ॥
इति यांताः ॥
निवहावसरौ वारौ संस्तरौ प्रस्तराऽध्वरौ ॥
गुरू गीष्पतिपित्राद्यौ द्वापरौ युगसंशयौ ॥ १६१ ॥
प्रकारौ भेदसादृश्ये आकाराविंगिताकृती ॥

राद्वचनार्हेपि वक्तव्यशब्दः । वक्तव्यं कुत्सितेऽहीने वचनार्हे च वाच्यवदिति मेदिनी । अहीनस्थाने अधीन इति कुत्रचित्पाठो दृश्यते । सज्जः सोपकरणः । निरामयो नीरोगः । उभौ कल्यौ । कलासु साधुः कल्यः । उषस्यपि कल्यम् । "कल्यं प्रभाते क्लीबं स्यात्कल्यो वाक्श्रुतिवर्जिते । सज्जनीरोगदक्षेषु कल्याणवचनेऽपि च । उपायवचनेऽपि स्यादिति मेदिनी" । आत्मवान् धीमान् । अर्थाद्योऽनपेतः अपगतो न भवति स चार्थ्यः "अर्थ्यः संप्रार्थ्ये न्याय्यविज्ञयोरिति हैमः ।" चारु सुंदरं अपिशब्दात्सुकृतधर्मयोः "पावने च" पुण्यम् । "पुण्यं त्रिषु मनोज्ञे स्यात्क्लीबं सुकृतधर्मयोरिति विश्वः" ॥१५९॥ प्रशस्तं रूपं यस्य तस्मिन् । रूपादाहतप्रशंसयोर्यप् इति सूत्रेण साधुः । अपिशब्दात् । रूप्यं स्यादाहतस्वर्णरजते रजतेऽपि च । रम्ये प्रशस्तरूपे तु वाच्यवदिति विश्वः । अपिशब्दाद्दातर्यपि वदान्यः । न्याय्ये उचितेऽपिशब्दादवलग्ने च । "न्याय्यावलग्नयोर्मध्यमंतरे चाधमे त्रिष्विति रभसः ।" सोमदैवते यथा । सोमश्चंद्रो दैवतमस्य सौम्यं हविः । "सौम्यो ज्ञे ना त्रिष्वनुग्रे मनोज्ञे सोमदैवत इति मेदिनी" ॥ १६० ॥ सर्वज्ञभिषजौ वैद्यौ कुल्या कुलवधूः सरित् । फलकल्याणयोर्भव्यं योग्यं सांप्रतिके त्रिषु ॥ १ ॥ क्रियाचारातिक्रमेऽपि जलाधारेऽपि चाशयः ॥ दैत्याचार्येऽपि धिष्ण्यो ना कषायः सुरभावपि ॥ २ ॥ चंद्रोदये वितानेऽपि स्यादाम्नायोऽन्वये श्रुतौ ॥ इदं सार्धं श्लोकद्वयं कुत्रचित्पुस्तके मूलेऽपि दृश्यते ॥ इति यांताः ॥ अथ रांतानाह । निवहो वृंदः । अवसरः प्रस्तावः उभौ वारौ । वारः सूर्यादिदिवसे वारोऽवसरवृंदयोरिति । प्रस्तरो दर्भमुष्टिर्दर्भशय्या वा । अध्वरः क्रतुरुभौ संस्तरौ । आद्यशब्दाद्वेदशास्त्राध्यापकश्च गुरुः ॥१६१॥ भेदो विशेषो यथा ।

किंशारू सस्यशूकेषू मरू धन्वधराधरौ ॥ १६२ ॥
अद्रयो द्रुमशैलार्काः स्त्रीस्तनाब्दौ पयोधरौ ॥
ध्वांतारिदानवा वृत्रा बलिहस्तांशवः कराः ॥ १६३ ॥
प्रदरा भंगनारीरुग्बाणा अस्राः कचा अपि ॥
अजातशृंगो गौः कालेऽप्यश्मश्रुर्ना च तूबरौ ॥१६४॥
स्वर्णेऽपि राः परिकरः पर्यंकपरिवारयोः ॥
मुक्ताशुद्धौ च तारः स्याच्छारो वायौ स तु त्रिषु ॥१६५॥
कर्बुरेऽथ प्रतिज्ञाजिसंविदापत्सु संगरः ॥

पलांडुभेदा गृंजनादयः । सादृश्यं यथा । मर्कटप्रकारं करोति । इंगितं चेष्टितम् । किंशारुर्ना सस्यशूके विशिखे कंकपक्षिणीति मेदिनी । सस्यस्थाने धान्य इति कुत्रचित् पाठः ॥ धन्वा निर्जलदेशः । धराधरः पर्वतः सोऽपि मरुस्थलीसंबंधान्मरुः ॥ १६२ ॥ द्रुमशैलार्केषु अद्रिशब्दो वर्तते । स्त्रियाः स्तनः कुचः अब्दो मेघः । उभौ पयोधरौ "पयोधरः कोशकारे नालिकेरे स्तनेऽपि च ॥ कशेरुमेघयोः पुंसीति मेदिनी ।" अरिः शत्रुः । दानवो दनुजभेदः । "वृत्रो मेघे रिपौ ध्वांते दानवे वासवे गिराविति हैमः ।" राज्ञा ग्राह्यभागो बलिः । अंशू रश्मिः ॥ १६३ ॥ नारीरुक् स्त्रीणां रोगभेदः । प्रदरो रोगभेदे स्याद्विदारशरभंगयोरिति । कचाः केशाः । अपिशब्दात्कोणेऽप्यस्रः । न जाते शृंगे यस्य स एवंभूतो गौः । काले श्मश्रूत्थानसमयेऽपि यो ना पुरुषोऽश्मश्रुः श्मश्रुरहितस्तावुभावपि तूबरौ । "काल इत्युभाभ्यां संबध्यते । तूबरोऽश्मश्रुपुरुषे प्रौढाशृंगारकेऽपि च । पुरुषे व्यंजनसक्ते स्यात्कषायरसेऽपि चेति मेदिनी" ॥ १६४ ॥ अपिशब्दाद्वित्तमात्रे रा इत्येकाक्षरम् । "भवेत्परिकरो व्राते पर्यंकपरिवारयोः । प्रगाढगात्रिकाबंधे विवेकारंभयोरपीति विश्वः । यत्नारंभौ परिकराविति त्रिकांडशेषः ।" तारो मुक्तादिसंशुद्धौ तरणे शुद्धमौक्तिके । तारं च रजतेऽत्युच्चस्वरेऽप्यन्यवदीरितमिति विश्वः । स तु शारशब्दः । कर्बुरः शबलवर्णः । शारः स्याच्छबले वाच्यलिंगः पुंसि समीरणे ॥ १६५ ॥ आजिर्युद्धम् । संवित् क्रियाकारः । प्रतिज्ञायां यथा । सत्यसंगरः । " संगरो युधि चापदि । क्रियाकारे विषे चांगीकारे क्लीबं शमीफल इति मेदिनी । " गुप्तवादे रहसिकर्तव्यावधा-

वेदभेदे गुप्तवादे मंत्रो मित्रो रवावपि ॥ १६६ ॥
मखेषु यूपखंडेऽपि स्वरुर्गुह्येऽप्यवस्करः ॥
आडंबरस्तूर्यरवे गजेंद्राणां च गर्जिते ॥ १६७ ॥
अभिहारोऽभियोगे च चौर्ये सन्नहनेऽपि च ॥
स्याज्जंगमे परीवारः खड्गकोशे परिच्छदे ॥ १६८ ॥
विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम् ॥
द्वारि द्वाःस्थे प्रतीहारः प्रतीहार्यप्यनंतरे ॥ १६९ ॥
विपुले नकुले विष्णौ बभ्रुर्ना पिंगले त्रिषु ॥
सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु ॥ १७० ॥

रणे मंत्रः । "मंत्रो देवादिसाधने । वेदांशे गुप्तवादे चेति हैमः" । अपिशब्दात्सख्यौ मित्रं क्लीबम् । मित्रं सुहृदि न द्वयोरित्युक्तत्वात् ॥ १६६ ॥ "यूपे तक्ष्यमाणे प्रथमपतितं शकलं यूपखंडम् ।" अपिशब्दाद्दंभोलौ च स्वरुः । स्वरुर्वज्रध्वनौ बाणे यूपखंडेऽपि च स्वरुः । गुह्ये उपस्थे । अपिशब्दाद्गूथेऽप्यवस्करः । तूर्यरवो वाद्यध्वनिः । आडंबरः समारंभे गजगर्जिततूर्ययोरिति कोशांतरम् ॥ १६७ ॥ अभियोगोऽभिग्रहणम् । चोरस्य कर्म चौर्यम् । सन्नहनं कवचादिग्रहणम् । एतेष्वभिहारः । जंगमे जंगमविशेषे परिजन इति यावत् । खड्गकोशे असिपिधायके चर्मादौ परिच्छदे उपकरणे परीवारः ॥ १६८ ॥ विटपी वृक्षः । दर्भमुष्टिपरिमाणं तु । पंचाशता भवेद्ब्रह्मा तदर्धेन तु विष्टर इत्यादि । पीठमाद्यं यस्य तदासनं च विष्टरः । आद्यशब्दात् कृष्णाजिनादि । अत्र पीठं काष्ठादिमयमासनम् । द्वाःस्थे द्वारपाले प्रतीहारः । अनंतरोक्ते प्रतीहारे प्रतीहारीत्यपि शब्दः । स तु पुंव्यक्तावपि स्त्रियाम् । उपसर्गस्य घञीति दीर्घः । गौरादित्वात् ङीष् । अपिशब्दात् द्वाःस्थितायां च योषितीति मेदिनी । अयमिन्नंत इति न भ्रमितव्यम् । रांतेषु तस्य पाठायोगात् ॥ १६९ ॥ विपुल इति नकुलविशेषणम् । तेन विशालनकुले विष्णौ च बभ्रुः पुंसि । पिंगले त्रिषु । "बभ्रुः पिंगाऽग्निशूलिषु । मुनौ विशाले नकुले विष्णाविति हैमः ।" स्थिरांशो वृक्षादेः कठोरभागः । तत्र यथा । शिंशपासारः । न्याय्ये न्यायादनपेते । वरे श्रेष्ठे । "सारो बले स्थिरांशे च मज्जिन पुंसि जले धने । न्याय्ये क्लीबं त्रिषु वर इति मेदिनी" ॥ १७० ॥

दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम् ॥
महारण्ये दुर्गपथे कांतारं पुन्नपुंसकम् ॥ १७१ ॥
मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ॥
देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये ॥ १७२ ॥
वंशांकुरे करीरोऽस्त्री तरुभेदे घटे च ना ॥
ना चमूजघने हस्तसूत्रे प्रतिसरोऽस्त्रियाम् ॥ १७३ ॥
यमानिलेंद्रचंद्रार्कविष्णुसिंहांशुवाजिषु ॥
शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥ १७४ ॥
शर्करा कर्परांशेऽपि यात्रा स्याद्यापने गतौ ॥

" द्यूतकारे पणे च । " दुरोदरश्चतुरक्षरः । द्यूते दुरोदरं क्लीबम् । दुर्गपथे दुर्गमवर्त्मनि । " कांतारोऽस्त्री महारण्ये बिले दुर्गमवर्त्मनि । पुंसि स्यादिक्षुभेद इति मेदिनी " ॥ १७१ ॥ अन्यशुभद्वेषे परसंपत्त्यसहने मत्सरः पुंसि । तद्वति मात्सर्ययुक्ते कृपणे च मत्सरोऽभिधेयलिंगकः । देवाद्देवसकाशाद्वृतेऽभीप्सिते वरः पुंसि । श्रेष्ठे त्रिषु । मनाक्प्रिये ईषदिष्टे क्लीबम् । " वरो जामातरि वृतौ देवतादेरभीप्सिते ॥ षिड्गे पुंसि त्रिषु श्रेष्ठे कुंकुमे तु नपुंसकम् । वरी भोक्ता शतावर्यां वरा च स्यात्फलत्रिके । मनागिष्टे वरं क्लीबं केचिदाहुस्तदव्ययमिति मेदिनी " ॥ १७२ ॥ वंशस्य वेणोरंकुरे करीरः पुन्नपुंसकयोः । ना पुमान् । चमूजघने सेनापश्चाद्भागे प्रतिसरो ना पुंलिंगः । हस्तसूत्रे मंगलार्थं मंत्रैरभिमंत्रितं सूत्रं यत्करे बद्ध्यते तत्र । " भवेत्प्रातिसरो मंत्रभेदे माल्ये च कंकणे । व्रणशुद्धौ चमूपृष्ठे पुंसि न स्त्री तु मंडले । आरक्षे करसूत्रे च नियोज्ये त्वन्यलिंगक इति मेदिनी " ॥ १७३ ॥ यमादिषु चतुर्दशसु हरिशब्दो वर्तते । तत्र त्रयोदशसु ना पुमान् । कपिलवर्णे त्रिलिंगः । अनिलो वायुः । अंशुः किरणः । वाजी हयः । शुकः पक्षिभेदः । अहिः सर्पः । " लोकांतरहरिद्वर्णयोश्च हरिः " ॥ १७४ ॥ कर्परांशे सिकतासु । अपिशब्दात्खंडविकृत्यादौ शर्कराशब्दः । " शर्करा खंडविकृतावुपलाकर्परांशयोः । शर्करान्वितदेशेऽपि रुग्भेदे शकलेऽपि चेति मेदिनी । " याप्यतेऽनेन यापनं तस्मिन् । यात्रा तु यापनोपाये गतौ देवार्चनोत्सव इति

इरा भूवाक्सुराऽप्सु स्यात्तंद्री निद्राप्रमीलयोः ॥ १७५ ॥
धात्री स्यादुपमाताऽपि क्षितिरप्यामलक्यपि ॥
क्षुद्रा व्यंगा नटी वेश्या सरघा कंटकारिका ॥ १७६ ॥
त्रिषु क्रूरेऽधमेऽल्पेऽपि क्षुद्रं मात्रा परिच्छदे ॥
अल्पे च परिमाणे सा मात्रं कार्त्स्न्येऽवधारणे ॥ १७७ ॥
आलेख्याश्चर्ययोश्चित्रं कलत्रं श्रोणिभार्ययोः ॥
योग्यभाजनयोः पात्रं पत्रं वाहनपक्षयोः ॥ १७८ ॥
निदेशग्रंथयोः शास्त्रं शस्त्रमायुधलोहयोः ॥

विश्वः । भ्वादिषु चतुर्षु इराशब्दः । सुरा मद्यम् । आपो जलम् । श्रमादिना सर्वेंद्रियापटुत्वं प्रमीला । "तंद्रेति टाबंतोऽपि" ॥ १७५ ॥ उपमात्रादिषु धात्रीशब्दः । उपमाता क्षीरप्रदा । क्षितिः पृथ्वी । आमलकी वृक्षभेदः । अपिना जनन्यपि धात्री । व्यंगादिषु क्षुद्रा । व्यंगा हीनांगी । नटी नर्तनशीला । सरघा मधुमक्षिका । कंटकारिका बृहती । "क्षुद्रा व्याघ्रीनटीव्यंगाबृहतीसरघासु च । चांगेरिकायां हिंसायां मक्षिकामात्रवेश्ययोरिति हैमः" ॥ १७६ ॥ क्रूरादित्रये क्षुद्रं त्रिषु । "क्षुद्रो दरिद्रे कृपणे निकृष्टेऽल्पनृशंसयोरिति हैमः । " परिच्छदादित्रये मात्रा स्त्रियाम् । कार्त्स्न्यादिद्वये क्लीबम् । परिच्छदे यथा । महामात्रः । अल्पे यथा । शाकमात्रा । परिमाणे यथा । किं हस्तिमात्रोंऽकुशः । कार्त्स्न्ये यथा । जीवमात्रं न हिंस्यात् । अवधारणे तु । पयोमात्रं भुंक्ते । धने कर्णभूषायां वर्णावयवे च मात्रा । मात्रं त्ववधृतौ स्वार्थे कार्त्स्न्ये मात्रा परिच्छदे । अक्षराऽवयवे द्रव्ये मानेऽल्पे कर्णभूषणे । काले वृत्ते चेति हैमः" ॥ १७७ ॥ आलेख्यं भित्त्यादौ नानावर्णलेखनम् । "चित्रं खे तिलकेऽद्भुते । आलेख्ये कर्बुर इति हैमः ।" श्रोणिः कटिः । "दुर्गस्थाने नृपादीनां कलत्रं श्रोणिभार्ययोरिति रभसः ।" योग्ये यथा । दानपात्रं श्रोत्रियः "पात्रं तु भाजने योग्ये पात्रं तीरद्वयांतरे । पात्रं स्रुवादौ पर्णे च राजमंत्रिणि चेष्यत इति विश्वः । पर्णे च पत्रम् । पत्रं तु वाहने पर्णे पक्षे च शरपक्षिणोरिति विश्वः" ॥ १७८ ॥ निदेश आज्ञा । ग्रंथो व्याकरणादिः । तत्र शास्त्रम् । जटा वृक्षमूलम् । अंशुकं वस्त्रभेदः । नेत्रं वस्त्रविशेषः स्यादिति मंजरी । "नेत्रं मथिगुणे वस्त्रभेदे मूले

स्याज्जटांशुकयोर्नेत्रं क्षेत्रं पत्नीशरीरयोः ॥ १७९ ॥
मुखाग्रे क्रोडहलयोः पोत्रं गोत्रं तु नाम्नि च ॥
सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च ॥ १८० ॥
अजिरं विषये कायेऽप्यंबरं व्योम्नि वाससि ॥
चक्रं राष्ट्रेऽप्यक्षरं तु मोक्षेऽपि क्षीरमप्सु च ॥ १८१ ॥
स्वर्णेऽपि भूरिचंद्रौ द्वौ द्वारमात्रेऽपि गोपुरम् ॥
गुहादंभौ गह्वरे द्वे रहोंऽतिकमुपह्वरे ॥ १८२ ॥

द्रुमस्य च। रथे चक्षुषि नद्यां तु नेत्री नेतरि वाच्यवदिति मेदिनी।" पत्न्यां देहे च क्षेत्रम्। "क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोरिति मेदिनीविश्वप्रकाशौ। इदं शरीरं कौंतेय क्षेत्रमित्यभिधीयते इति श्रीमद्भगवद्गीतायाम्" ॥ १७९ ॥ क्रोडः सूकरः। तस्य हलस्य च मुखाग्रे पोत्रम्। पोत्रं वस्त्रे मुखाग्रे च सूकरस्य हलस्य चेति विश्वः। चकाराद्गोत्रं शैले कुलेऽपि च। "गोत्रं कुलाख्ययोः। संभावनीये बोधे च काननक्षेत्रवर्त्मस्विति मेदिनी।" आच्छादनं वस्त्रम्। सदादानं नित्यत्यागः। "अपिशब्दाद्वने कैतवे च सत्रशब्दः" ॥ १८० ॥ विषये रूपादौ आपिना चत्वरे अजिरम्। "अजिरं दर्दुरे काये विषये प्रांगणेऽनिल इति हैमः।" व्योम्न्याकाशे। वाससि वस्त्रे। "अंबरं वाससि व्योम्नि कार्पासे च सुगंधक इति विश्वः।" अपिशब्दात्सैन्यरथांगयोश्चक्रम्। "चक्रं प्रहरणे गणे। कुलालाद्युपकरणे राष्ट्रे सैन्यरथांगयोः। जलावर्ते दंभ इति हैमः।" अपिशब्दाद्वर्णब्रह्मणोरप्यक्षरम्। "अक्षरं स्यादपवर्गे परमब्रह्मवर्णयोः। गगने धर्मतपसोरंबरे मूलकारण इति हैमः।" द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यत इति भगवद्गीतायामक्षरवाच्यः कश्चित् कूटस्थः पुमान् प्रतीयते। चकाराद्दुग्धे क्षीरम् ॥ १८१ ॥ भूरिशब्दश्चंद्रशब्दश्चैतौ द्वौ रांतौ स्वर्णेऽपि वर्तेते। तत्र स्वर्णे भूरि रूपभेदात् क्लीबम्। "अपिशब्दात्। भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि। नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिंगक इति मेदिनी।" कर्पूरादौ च चंद्रः। "चंद्रः कर्पूरकांपिल्लसुधांशुस्वर्णवारिष्विति मेदिनी।" न केवलं पूर्द्वारे किं तु द्वारमात्रेऽपि गोपुरम्। गोपुरं द्वारि पूर्द्वारि कैवर्तीमुस्तकेऽपि चेति मेदिनी। गह्वरस्तु गुहादंभनिकुं-

पुरोऽधिकमुपर्यग्राण्यगारे नगरे पुरम् ॥
मंदिरं चाथ राष्ट्रोऽस्त्री विषये स्यादुपद्रवे ॥ १८३ ॥
दरोऽस्त्रियां भये श्वभ्रे वज्रोऽस्त्री हीरके पवौ ॥
तंत्रं प्रधाने सिद्धांते सूत्रवाये परिच्छदे ॥ १८४ ॥
औशीरश्चामरे दंडेऽप्यौशीरं शयनासने ॥
पुष्करं करिहस्ताग्रे वाद्यभांडमुखे जले ॥
व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयोः ॥ १८५ ॥
अंतरमवकाशावधिपरिधानांतर्धिभेदतादर्थ्ये ॥

जगद्दनेऽप्यपीति विश्वः ।" रहो विजनम् । अंतिकं समीपम् । द्वे उपह्वरसंज्ञे ॥ १८२ ॥ पुर इत्यादीनि त्रीणि अग्रशब्दवाच्यानि । तत्र पुरः पुरस्तात् । यथा । अग्रगामी । अधिकं यथा । साग्रं शतम् । उपरि यथा । वृक्षाग्रम् । अग्रं पुरस्तादुपरि परिमाणे पलस्य च । आलंबने समूहे च प्रांते च स्यान्नपुंसकम् । अधिके च प्रधाने च प्रथमे चाभिधेयवदिति मेदिनी ।" पुरं मंदिरं चेति द्वयमगारे गृहे नगरे च वर्तते । गृहोपरिगृहं पुरमिति धरणिः । पुरं शरीरे नगरे गृहपाटलिपुत्रयोरिति हैमः । मंदिरं नगरे क्लीबमिति मेदिनी । विषये जनपदे उपद्रवे मरणादौ च राष्ट्रः । "स च पुन्नपुंसकः" ॥ १८३॥ श्वभ्रे गर्ते । हीरके मणिभेदे । पवौ भिदुरे । प्रधाने यथा । स्वतंत्रः । सिद्धांते यथा । तांत्रिकः । सूत्रवायपरिच्छदयोश्च तंत्रशब्दः । "तंत्रं कुटुंबकृत्ये स्यात्सिद्धांते चौषधोत्तमे । प्रधाने तंतुवाये च शास्त्रभेदे परिच्छदे ॥ श्रुतिशास्त्रांतरे हेतावुभयार्थप्रयोजने । इतिकर्तव्यतायां चेति मेदिनी" ॥१८४॥ चामर इति दंडविशेषणम् । चमरस्यायं चामरस्तत्र । शयनासनयोः समुदितयोरौशीरसंज्ञेति स्वामी । सुभूतिस्तु पृथगेव व्याख्यत् । गजशुंडाग्रादिष्वष्टसु पुष्करम् । वाद्यभांडं वादनीयपात्रं तन्मुखे । खड्गफले खड्गमध्ये । पद्मे नलिने । तीर्थविशेषे कुष्ठाख्यौषधिविशेषे च । "पुष्करं द्वीपतीर्थाहिखगराजौषधांतरे ॥ तूर्यास्येऽसिफले कांडे शुंडाग्रे खे जलेऽबुज इति हैमः" ॥ १८५ ॥ अवकाशादिषु त्रयोदशसु अंतरशब्दः । अवकाशे यथा । अंतरे हिमम् । अवधौ

छिद्रात्मीयविनाबहिरवसरमध्येंऽतरात्मनि च ॥ १८६ ॥
मुस्तेऽपि पिठरं राजकशेरुण्यपि नागरम् ॥
शार्वरं त्वंधतमसे घातुके भेद्यलिंगकम् ॥ १८७ ॥
गौरोऽरुणे सिते पीते व्रणकार्यप्यरुष्करः ॥
जठरः कठिनेऽपि स्यादधदस्तादपि चाधरः ॥ १८८ ॥
अनाकुलेऽपि चैकाग्रो व्यग्रो व्यासक्त आकुले ॥

यथा । मासांतरे देयम् । परिधाने यथा । अंतरे शाटकाः परिधानीया इत्यर्थः । अंतर्धौ यथा । पर्वतांतरितो रविः । भेदे यथा । यदंतरं सर्षपशैलराजयोः । तादर्थ्ये यथा । त्वदंतरेण ऋणमेतत् । छिद्रे यथा । परांतरे प्रहर्तव्यम् । आत्मीये यथा । अयमत्यंतरो मम । विनार्थे यथा । अंतरेण पुरुषकारमिति । बहिर्यथा । अंतरे चंडालगृहाः । बाह्या इत्यर्थः । अवसरे यथा । अंतरंगः सेवकः । मध्ये यथा । आवयोरंतरे जातः पर्वतः । अंतरात्मनि यथा । दृष्टों-तरे ज्योतीरूपः । चकारात्साहश्ये यथा । हकारस्य घकारोंऽतरतमः ॥ १८६ ॥ पिठरशब्दः मुस्ते मुस्तके । अपिशब्दान्मंथाने । पिठरः स्थाल्यां ना क्लीबं मुस्तमंथानदंडयोरिति मेदिनी । राजकशेरु जलजतृणमूलं "नागरमोथा इति ख्यातम् ।" नागरं मुस्तके शुंठ्यां विदग्धे नगरोद्भव इति मेदिनी । अंधतमसे गाढांधकारे । घातुके हिंस्रे शार्वरशब्दः । "घातुकेभे नृलिंगकमित्यपि पाठः । घातुकश्चासाविभश्च तत्र पुंलिंगमित्यर्थः" ॥ १८७ ॥ "गौरः पीतेऽरुणे श्वेते विशुद्धे चाभिधेयवत् । ना श्वेतसर्षपे चंद्रे न द्वयोः पद्मकेसर इति मेदिनी ।" भल्लातकफलेऽप्यरुष्करः । अरुष्करो व्रणकृति त्रिषु भल्लातके पुमानिति मेदिनी । व्रणकार्येऽप्यरुष्कर इत्यपि पाठः ।" उदरेऽपि जठरः । "जठरः कुक्षिवृद्धयोरिति हैमः ।" अधस्तादनूर्ध्वे ओष्ठेऽपि "हीनेऽपि च" अधरः ॥ १८८ ॥ अनाकुले स्वस्थे । अपिशब्दादेकतानेऽपि । व्यासक्ते द्विधा व्यापृते । आकुलेऽनेकार्थे न्यस्तचित्ते व्यग्रः । उपर्यादित्रये उत्तरः। उपरि यथा। इत उत्तरम् । उदीच्ये यथा । नर्मदोत्तरे विक्रमशकः । श्रेष्ठे यथा । मुनिषूत्तरो वसिष्ठः । " उत्तरं प्रतिवाक्ये स्यादूर्ध्वोदीच्योत्तमेऽन्यवत् । उत्तरस्तु विरा-टस्य तनये दिशि चोत्तरेति विश्वः ।" एषामुपर्यादीनां विपर्यये वैपरीत्ये श्रेष्ठे

उपर्युदीच्यश्रेष्ठेष्वप्युत्तरः स्यादनुत्तरः ॥ १८९ ॥
एषां विपर्यये श्रेष्ठे दूरानात्मोत्तमाः पराः ॥
स्वादुप्रियौ तु मधुरौ क्रूरौ कठिननिर्दयौ ॥ १९० ॥
उदारो दातृमहतोरितरस्त्वन्यनीचयोः ॥
मंदस्वच्छंदयोः स्वैरः शुभ्रमुद्दीप्तशुक्लयोः ॥ १९१ ॥
इति रांताः ॥ चूडा किरीटं केशाश्च संयता मौलयस्त्रयः ॥
द्रुमप्रभेदमातंगकांडपुष्पाणि पीलवः ॥ १९२ ॥
कृतांतानेहसोः कालश्चतुर्थेऽपि युगे कलिः ॥
स्यात्कुरंगेऽपि कमलः प्रावारेऽपि च कंबलः ॥ १९३ ॥
करोपहारयोः पुंसि बलिः प्राण्यंगजे स्त्रियाम् ॥

चानुत्तरः । श्रेष्ठे तु न विद्यमान उत्तरः श्रेष्ठो यस्मादिति विग्रहः ॥ १८९ ॥ दूरादयस्त्रयः पराः । अनात्मा आत्मनोऽन्यः । "परः श्रेष्ठारिदूरान्योत्तरे क्लीबं तु केवल इति मेदिनी ।" रसे च मधुरः । क्रूरस्तु कठिने घोरे नृशंसे त्वभिधेयवदिति विश्वः ॥ १९० ॥ दाक्षिणे चोदारस्त्रिषु । उदारो दातृमहतोर्दक्षिणे चाभिधेयवदिति कोशांतरात् । नीचः पामरः । स्वच्छंदः स्वाधीनः । मदीप्ते शुक्ले च शुभ्रम् । "शुभ्रं स्यादभ्रके क्लीबमुद्दीप्तशुक्लयोस्त्रिष्विति मेदिनी" ॥ १९१ ॥ इति रांताः ॥ अथ लांतानाह । चूडा शिखा । किरीटं मुकुटम् । संयता बद्धा ये च केशास्ते त्रयो मौलयः । त्रय इति मौलेः पुंस्त्वसूचनायोक्तम् । "मौलिः किरीटे धम्मिल्ले चूडायामनपुंसकम् । नाऽशोकद्रौ स्त्रियां भूमाविति तु मेदिनी ।" पीलुः पुमान् प्रसूने स्यात्परमाणौ मतंगजे । अस्थिखंडे च तालस्य कांडपादपभेदयोरिति मेदिनी । मातंगो गजः । कांडो बाणः ॥ १९२ ॥ अनेहाः समयः । "कालो मृत्यौ महाकाले समये यमकृष्णयोरिति मेदिनी ।" कलहेऽपि कलिः "कलिः स्त्री कलिकायां ना शूराजिकलहे युग इति मेदिनी । अपिशब्दात्कमलं सलिले ताम्रे जलजे व्योम्नि भेषजे ।" प्राव्रियत इति प्रावारः । सास्नायां नागराजेऽपि क्रमावपि च कंबलः ॥ १९३ ॥ करो राजदेयभागः । उपहार उपचारः । तत्र बलिः पुंसि । "दैत्यप्रभेदे च बलिः ।" प्राण्यंगजे त्वक्सं-

स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः ॥ १९४ ॥
वातूलः पुंसि वात्यायामपि वातासहे त्रिषु ॥
भेद्यलिंगः शठे व्यालः पुंसि श्वापदसर्पयोः ॥ १९५ ॥
मलोऽस्त्री पापविट्किट्टान्यस्त्री शूलं रुगायुधम् ॥
शंकावपि द्वयोः कीलः पालिः स्त्र्यश्र्यंकपंक्तिषु ॥१९६॥
कला शिल्पे कालभेदेऽप्याली सख्यावली अपि ॥
अब्ध्यंबुविकृतौ वेला कालमर्यादयोरपि ॥ १९७ ॥

कोचे बलिः स्त्रियाम् । स्थौल्यादित्रये बलम् । "बलं गंधरसे रूपे स्थामनि स्थौल्यसैन्ययोरिति मेदिनी ।" काले हलायुधे च बलो ना पुमान् । बलिस्तु बलिनि काके दैत्यभेदे हलायुध इति हैमः" ॥ १९४ ॥ वात्यायां वातसमूहे । वातविकारासहे प्राणिनि वातूलस्त्रिषु । "वातूलो वातुलोऽपि स्यादिति द्विरूपकोशाद्ध्रस्वमध्योऽपि ।" शठे व्यालो वाच्यलिंगः । दुष्टगजे सिंहेऽपि च व्यालः ॥ १९५ ॥ विट् विष्ठा । किट्टं स्वेदादिजन्यं मलम् । "कृपणे च विशेष्यलिंगम् । शूलोऽस्त्री रोग आयुधे । मृत्युकेतनयोगेष्विति मेदिनी ।" शंकौ लोहादिमयकीलके । अपिशब्दाज्ज्वालायामपि कीलः । स्त्रियां तु कीला । "कीलोऽग्निते जसि । कफोणिस्तंभयोः शंकाविति तु हैमः ।" पालिः स्त्रीलिंगा । अतः पाली च । अश्रिः कोणो वा । अंक उत्संगः चिह्नं वा । पंक्तिः श्रेणिः । "पालिः कर्णलतायां स्यात्प्रदेशे पंक्तिचिह्नयोरित्यजयः । सश्मश्रुयुवती पालिः पंक्तिः कर्णलतापि चेति त्रिकांडशेषः । पालिः कर्णलताग्रेऽश्रौ पंक्तावंकप्रभेदयोः । छात्रादिदेये स्त्री पाली यूकासश्मश्रुयोषितोरिति मेदिनी" ॥ १९६ ॥ शिल्पे गीतवाद्यादिनैपुण्ये । कालभेदे त्रिंशत्काष्ठात्मके काले कला । "अपिना कला स्यान्मूलरैवृद्धौ शिल्पादावंशमात्रके । षोडशांशे च चंद्रस्य कलनाकालमानयोरिति मेदिनी ।" सख्यां पंक्तौ चालिः । आलिर्विशदाशये । त्रिषु स्त्रियां वयस्यायां सेतौ पंक्तौ च कीर्तितेति मेदिनी । अब्ध्यंबुविकृतौ चंद्रोदयादिना जलधिजलवृद्धौ काले मर्यादायां च वेला । "वेला काले च जलधेस्तीरनीरविकारयोः । अक्लिष्टमरणे रोगे सीम्नि वाचि बुधस्त्रियाम् । भोजनेऽपीश्वराणां स्यादिति विश्वप्रकाशः" ॥१९७॥ कृत्तिकाः ताराः । बहुत्वाद्बहुत्वम् । गावो

बहुलाः कृत्तिका गावो बहुलोऽग्नौ शितौ त्रिषु ॥
लीला विलासक्रिययोरुपला शर्करापि च ॥ १९८ ॥
शोणितेऽम्भसि कीलालं मूलमाद्ये शिफाभयोः ॥
जालं समूह आनायगवाक्षक्षारकेष्वपि ॥ १९९ ॥
शीलं स्वभावे सद्वृत्ते सस्ये हेतुकृते फलम् ॥
छदिर्नेत्ररुजोः क्लीबं समूहे पटलं न ना ॥ २०० ॥
अधःस्वरूपयोरस्त्री तलं स्याच्चामिषे पलम् ॥

धेनवो बहुलाख्याः । अग्नौ च बहुलः पुंसि । शितौ कृष्णवर्णे त्रिषु । "बहुला नीलिकायां स्यादेलायां गवि योषिति । कृत्तिकासु स्त्रियां भूम्नि विहायसि नपुंसकम् । पुंस्यग्नौ कृष्णपक्षे च वाच्यवत्प्राज्यकृष्णयोरिति मेदिनी ।" विलासे क्रियायां च लीला । "लीलां विदुः केलिविलासखेलाशृंगारभावप्रभवक्रियास्विति विश्वप्रकाशः ।" शर्कराः सिकताः खंडविकृतिर्वा । अश्मनि पुंसि । उपलः प्रस्तरे रत्ने शर्करायां स्मृतोपला ॥ १९८ ॥ शोणिते रक्ते अंभसि जले च कीलालं नाम । आद्ये शिफायां वृक्षजटायां भे नक्षत्रविशेषे मूलम् । आद्ये यथा । मूलप्रकृतिः "मूलं पार्श्वाद्ययोरुडौ । विकुंजशिफयोः स्वीये शिलायां च वशीकृतौ । प्रतिष्ठायामिति हैमः ।" अर्थयोरिति पाठे मूलं धनम् । समूहे जालं यथा जनजालम् । आनायः शणसूत्रादिकृतो रज्जुसंघः । गवाक्षो वातायनम् । क्षारकोऽस्फुटकलिका । एतेषु जालम् । "दंभेऽपि जालम्" ॥ १९९ ॥ स्वभावे प्रकृतौ सद्वृत्ते सच्चरिते शीलम् । सस्ये "वृक्षादीनां फलं सस्यम्"-इत्युक्ते हेतुकृते हेतुना साधिते । यथा यागस्य फलं स्वर्गः । बाणाग्रेऽपि फलम् । "फलं हेतुकृते जातीफले फलकसस्ययोः । त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोरिति हैमः ।" छदिश्च नेत्ररुक् च छदिर्नेत्ररुजौ तयोः । छदिषि गृहाच्छादने । समूहे न नेत्युक्ते पटलं पटलेति च । "अथ पटलं पिटके च परिच्छदे । छदिर्दृग्रोगतिलके क्लीबं वृंदे पुनर्न नेति मेदिनी" ॥ २०० ॥ अधो यथा । रसातलम् । स्वरूपे यथा । वक्षस्तलम् । "तलं स्वरूपाधरयोः खड्गमुष्टिचपेटयोरिति ।" "तलं स्वरूपेऽनूर्ध्वेऽस्त्री क्लीबं ज्याघातवारणे । कानने कार्यबीजे च पुंसि तालमहीरुहे । चपेटे च त्सरौ तंत्रीघाते सव्येन पाणिनेति मेदिनी ।" पलमुन्मानमांसयोरिति

औवानलेऽपि पातालं चैलं वस्त्रेऽधमे त्रिषु ॥ २०१ ॥
कुकूलं शंकुभिः कीर्णे श्वभ्रे ना तु तुषानले ॥
निर्णीते केवलमिति त्रिलिंगं त्वेककृत्स्नयोः ॥ २०२ ॥
पर्याप्तिक्षेमपुण्यषु कुशलं शिक्षिते त्रिषु ॥
प्रवालमंकुरेऽप्यस्त्री त्रिषु स्थूलं जडेऽपि च ॥ २०३ ॥
करालो दंतुरे तुंगे चारौ दक्षे च पेशलः ॥
मूर्खेऽर्भकेऽपि बालः स्याल्लोलश्चलसतृष्णयोः ॥ २०४ ॥
इति लांताः ॥ दवदावौ वनारण्यवह्नी जन्महरौ भवौ ॥
मंत्री सहायः सचिवौ पतिशाखिनरा धवाः ॥ २०५ ॥
अवयः शैलमेषार्का आज्ञाह्वानाध्वरा हवाः ॥

रुद्रः । और्वानले वाडवाग्नौ । "विवरे पातालम् ।" पातालं नागलोके स्याद्बिवरे वाडवानले । वस्त्रे चैलं क्लीबं अधमे त्रिषु । स्त्रीत्वे तु चैली । "चेलमिंत्यपि पाठः" ॥ २०१ ॥ शंकुभिः कीर्णे कीलैर्व्याप्ते श्वभ्रे गर्ते कुकूलम् । तुषाग्नौ कुकूलः । निर्णीते निश्चिते यथा । केवलं मूर्खः । एकस्मिन्यथा । केवलोऽयं व्रजति । कृत्स्ने यथा । केवला भिक्षवः । स्त्रीलिंगे केवली । "केवलः कुहने पुमानिति मेदिनी" ॥ २०२ ॥ पर्याप्तिः सामर्थ्यम् । शिक्षिते कुशलं त्रिषु । यथा कुशला कुलवधूः । प्रवालोऽस्त्री किसलयं वीणादंडे च विद्रुम इति मेदिनी । स्थूलं पीवरेऽपि त्रिषु । "स्थूलं कूटेऽथ निष्प्रज्ञे पीवरे चान्यलिंगक इति मेदिनी" ॥२०३॥ दंतुरे उन्नतदंतयुक्ते । यथा दंष्ट्राकरालः। तुंगे उन्नते । "करालो दंतुरे तुंगे भीषणे चाभिधेयवत् । स सर्जरसतैले ना क्लीबं कृष्णकुठेरक इति मेदिनी ।" चारुदक्षयोः पेशलः । "बालोऽज्ञेऽश्वेभपुच्छयोः । शिशौ ह्रीबेरकचयोरिति हैमः ।" सतृष्णः साकांक्षः ॥२०४॥ इति लांताः॥ अथ वांतानाह । वनं काननम् । अरण्यवह्निः वनाग्निः। तत्र वांतौ दवदावौ । भवः क्षेमे च संसारे सत्तायां प्राप्तिजन्मनोरिति मेदिनी । मंत्री प्रधानम् । सहायः सखा एतयोरर्थे सचिवशब्दः । पतिर्भर्ता । शाखी वृक्षभेदः । नरो मनुष्यः एते धवाः ।"धवो धूर्ते नरे पतौ । द्रुभेद इति हैमः" ॥२०५॥ "अविर्नाथे रवौ मेषे शैले मूषिककंबल इति मेदिनी ।" आज्ञादयस्त्रयो हवसंज्ञाः । आह्वानं हूतिः । अध्वरो यज्ञः ।

भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु ॥ २०६ ॥
स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने ॥
अविश्वासेऽपह्नवेऽपि निकृतावपि निह्नवः ॥ २०७ ॥
उत्सेकामर्षयोरिच्छाप्रसरे मह उत्सवः ॥
अनुभावः प्रभावे च सतां च मतिनिश्चये ॥ २०८ ॥
स्याज्जन्महेतुः प्रभवः स्थानं चाद्योपलब्धये ॥
शूद्रायां विप्रतनये शस्त्रे पाराशवो मतः ॥ २०९ ॥
ध्रुवो भभेदे क्लीबं तु निश्चिते शाश्वते त्रिषु ॥
स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने ॥२१०

सत्तादिषट्के भावः । सत्तायां यथा । घटभावः पटभावः । आत्मनि यथा । स्वभावं भावयेद्योगी । "क्रियालीलापदार्थेषु विभूतिबुधजंतुषु । रत्यादौ च भावः । केचित् सत्तास्थाने स्वत्वमिति पठंति" ॥ २०६ ॥ उत्पादे उत्पत्तौ । गर्भमोचने प्रसूतौ प्रसवः । "अपत्ये च प्रसवः ।" अपह्नवे अपलापे । निकृतौ शाठ्ये ॥ २०७ ॥ उत्सेक उद्धतिः । अमर्षः कोपः । इच्छायाः प्रसरो वेगः । महः क्षण आनंदावसर इति यावत् । एतेषु उत्सवः । सतां मतेर्ज्ञानस्य निश्चये यथा । महानुभावा इति । "भावसूचने चानुभावः" ॥२०८॥ आद्योपलब्धये प्रथमज्ञानाय यत्स्थानम् । "यश्च जन्महेतुस्तत्र प्रभवः । जन्महेतुः पित्रादिः । स्थानं यथा । गंगाप्रभवो हिमवान् । गंगाज्ञानस्य प्रथमस्थानं हिमवानित्यर्थः । जन्ममूलमपि प्रभवः । यथा वाल्मीकिः काव्यप्रभवः ।" प्रभवो जन्ममूले स्याज्जन्महेतौ पराक्रमे । ज्ञानस्य चादिमस्थान इति मेदिनी । शूद्रायां विप्राज्जाते तनये शस्त्रे परश्वधाख्ये पारशवः । पारशवः पुमानित्यपि पाठांतरम् ॥ २०९ ॥ भभेदे नक्षत्रविशेषे ध्रुवः पुंसि । निश्चिते अवधारिते ध्रुवं क्लीबम् । यथा ध्रुवं मूर्खः । शाश्वते नित्ये ध्रुवस्त्रिषु । यथा जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य चेति । "ध्रुवः शंकौ हरे विष्णौ वटे चोत्तानपादजे । वसुयोगभिदोः पुंसि क्लीबं निश्चिततर्कयोरिति मेदिनी ।" सगोत्रे आत्मनि क्षेत्रज्ञे स्वः पुंसि । आत्मीये स्वसंबंधिनि । "स्वं त्रिलिंगम् । धने स्वः पुन्नपुंसके" ॥ २१० ॥ स्त्रीकट्यां यो वस्त्रस्य बंधस्तत्र । परिपणे

स्त्रीकटीवस्त्रबंधेऽपि नीवी परिपणेऽपि च ॥
शिवा गौरीफेरवयोर्द्वंद्वं कलहयुग्मयोः ॥ २११ ॥
द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जंतुषु ॥
क्लीबं नपुंसकं षंढे वाच्यलिंगमविक्रमे ॥ २१२ ॥
इति वांताः॥ द्वौ विशौ वैश्यमनुजौ द्वौ चराभिमरौ स्पशौ॥
द्वौ राशी पुंजमेषाद्यौ द्वौ वंशौ कुलमस्करौ ॥ २१३ ॥
रहःप्रकाशौ वीकाशौ निर्वेशो भृतिभोगयोः ॥
कृतांते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु॥ २१४ ॥

" राजपुत्रादेर्बंधके । अपिना " वणिजां मूलधने नीवी । " नीवी स्त्रीकटीवस्त्रबंधने । मूलद्रव्ये परिपण इति हैमः । " फेरवः सृगालः । " शिवा झाटामलोमयोः । फेरौ शम्यां पथ्याधाव्योरिति हेमचंद्रः । " युग्मे द्वये । " द्वंद्वं रहस्ये कलहे तथा मिथुनयुग्मयोरिति विश्वः " ॥ २११ ॥ द्रव्ये वस्तुनि । असुषु प्राणेषु । व्यवसाये वीर्यातिशये । यथा सत्त्ववान् । जंतुषु सत्त्वमस्त्रियाम् । " सत्त्वं द्रव्ये गुणे चित्ते व्यवसायस्वभावयोः । पिशाचादावात्मभावे बले प्राणेषु जंतुष्विति हेमचंद्रः । षंढे तृतीयप्रकृतौ क्लीबमिति बकारांतं नाम नपुंसकं नपुंसकलिंगे । " अविक्रमेऽलसे क्लीबो " वाच्यलिंगः । " बवयोः सावर्ण्यादस्यात्र पाठः । " अस्त्री नपुंसके क्लीबं वाच्यलिंगमविक्रम इति रुद्रः । क्लीबोऽपौरुषषंढयोरिति हैमः । क्लीबं स्यात्षंढके न स्त्री वाच्यलिंगस्त्वविक्रम इति मेदिनी " ॥ २१२ ॥ इति वांताः ॥ अथ शांतानाह ॥ मनुजो मनुष्यः । " विट् स्मृतो वैश्यमनुजप्रवेशेषु मनीषिभिरिति विश्वः । " चरो गूढपुरुषः । अभिमरो युद्धं तत्र स्पशोऽदंतः । आद्यशब्दाद्वृषभादिरपि राशिः । मस्करो वेणुः । " वंशः संघेऽन्वये वेणौ पृष्ठाद्यवयवेऽपि चेति हैमः " ॥ २१३ ॥ रहो विजनः । " विकाश इत्यपि । विकाशो रहसि व्यक्त इति हैमः । " भृतिर्वेतनम् । " भोग उपभोगः । मूर्छने च निर्वेशः । " कृतांतो यमः । क्षुद्रः कृपणः । कर्षकः कृषीवलः । " कीनाशः कर्षकक्षुद्रोपांशुघातिषु वाच्यवत् । यमे नेति मेदिनी " ॥ २१४ ॥ पदे व्याजे । अपदेशः स्मृतो लक्ष्ये निमित्तव्याजयोरपीति विश्वः । कुशो

पदे लक्ष्ये निमित्तेऽपदेशः स्यात्कुशमप्सु च ॥
दशाऽवस्थानेकविधाप्याशा तृष्णापि चायता ॥ २१५ ॥
वशा स्त्री करिणी च स्यात् दृग्ज्ञाने ज्ञातरि त्रिषु ॥
स्यात्कर्कशः साहसिकः कठोरामसृणावपि ॥ २१६ ॥
प्रकाशोऽतिप्रसिद्धेऽपि शिशावज्ञे च बालिशः ॥
कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः ॥ २१७ ॥
इति शांताः ॥ सुरमत्स्यावनिमिषौ पुरुषावात्ममानवौ ॥
काकमत्स्यात्खगौ ध्वांक्षौ कक्षौ तु तृणवीरुधौ ॥२१८॥
अभीषुः प्रग्रहे रश्मौ प्रैषः प्रेषणमर्दने ॥

रामस्तुते दर्भे। "योक्त्रे द्वीपे च" पुंसि। जले क्लीबम्। अनेकविधबाल्यादिरूपा दशा। अपिशब्दाद्वस्त्रांतेऽपि दशाः स्त्रियां बहुत्वे। दशा वर्तावपवस्थायां वस्त्रांते स्युर्दशा अपि। आयता दीर्घा या तृष्णा स्पृहा सा आशा। चकाराद्दिगप्याशा ॥ २१५ ॥ योषाहस्तिन्योर्वशा। "वशा वंध्यासुतायोषास्त्रीगवीकरिणीषु चेति मेदिनी।" ज्ञाने बुद्धौ। दृक् स्त्रियां दर्शने नेत्रे बुद्धौ च त्रिषु वीक्षक इति मेदिनी। साहसिको विवेकरहितः। अमसृणो दुःस्पर्शः। "कर्कशः परुषे क्रूरे कृपणे निर्दये दृढे। इक्षौ साहसिके कासमर्दकांपिल्ययोरपीति विश्वः" ॥ २१६ ॥ अपिशब्दादातपेऽपि प्रकाशः। प्रकाशोऽतिप्रसिद्धे स्यात्प्रहासातपयोः स्फुट इति विश्वः। कुड्मले मुकुले। खड्गस्य पिधाने आच्छादने। अर्थौघे धनसमूहे। दिव्ये शपथभेदे कोशः कोषश्च। "नाशः क्षये तिरोधाने जीवितेशः प्रिये यमे। नृशंसखड्गौ निस्त्रिंशावंशुः सूर्यांशवः कराः ॥ १ ॥ आश्वाख्यशालिशीघ्रार्थे पाशो बंधनशस्त्रयोरिति सार्धश्लोकद्वयं[1] पुस्तकांतरे क्षेपकं दृश्यते" ॥ २१७ ॥ इति शांताः ॥ अथ षांतानाह ॥ सुरमत्स्यावुभौ अनिमिषौ स्तः। आत्मा क्षेत्रज्ञः। "पुरुषश्चात्मनि नरे पुन्नागे चेति हेमचंद्रः।" मत्स्यमत्ति खादति मत्स्यात् यो बकादिः खगः स च ध्वांक्षः। "ध्वांक्षस्तु काकबकयोस्तर्कुटे भिक्षुके गृह इति विश्वप्रकाशः। कार्पासबीजनिष्कासनयंत्रं तर्कुटम्।" वीरुल्लता। "कक्षो वीरुधि दोर्मूले कच्छे शुष्कतृणे वन इति हैमः" ॥ २१८ ॥ प्रग्रहेऽश्वादिरज्जौ। रश्मौ किरणे। मर्दनं पीडा। प्रैषः प्रेषणपीडयोरिति "प्रैषः स्यात्प्रेषणे क्लेशे मर्दनोन्मादयो-

१ सार्धेति चिन्त्यम्, रामाश्रम्यां श्लोकद्वयस्यैव दर्शनात् ॥

पक्षः सहायेऽप्युष्णीषः शिरोवेष्टकिरीटयोः ॥ २१९ ॥
शुक्रले मुषिके श्रेष्ठे सुकृते वृषभे वृषः ॥
द्यूतेऽक्षे शारिफलकेऽप्याकर्षोऽथाक्षमिंद्रिये ॥ २२० ॥
ना द्यूतांगे कर्षचक्रे व्यवहारे कलिद्रुमे ॥
कर्षूर्वार्ता करीषाग्निः कर्षूः कुल्याभिधायिनी ॥ २२१ ॥
पुंभावे तत्क्रियायां च पौरुषं विषमप्सु च ॥
उपादानेऽप्यामिषं स्यादपराधेऽपि किल्मिषम् ॥ २२२ ॥

रपीति विश्वः ।" अपिशब्दान्मासार्धादौ पक्षः । "पक्षो मासार्धके पार्श्वे ग्रहे साध्यविरोधयोः । केशादेः परतो वृंदे बले सखिसहाययोः । चुल्लीरंध्रे पतत्रे च वाजिकुंजरपार्श्वयोरिति मेदिनी ।" वस्त्रकृतं शिरसो वेष्टनं शिरोवेष्टः । किरीटं मुकुटम् । "उष्णीषं लक्षणांतरे । शिरोवेष्टे किरीटे स्यादिति हैमः" ॥ २१९ ॥ शुक्रं लातीति शुक्रलो वृषणः । मूषिके उंदुरे सुकृते धर्मे । "वृषो गव्याखुधर्मयोः । पुंराशिभेदयोः शृंग्यां वासके शुक्रलेऽपि च । श्रेष्ठे स्यादुत्तरस्थे चेति हैमः ।" द्यूतादित्रये आकर्षः । अक्षे पाशके । शारिफलकं शारीणां द्यूतोपकरणानां फलकं पीठिका । "नाऽऽकर्षो द्यूत इंद्रिये । पाशे शारिफले चैव कोदंडाभ्यासवस्तुनि । आकर्षणेऽपि पुंसि स्यादिति मेदिनी ।" इंद्रियेऽक्षं क्लीबम् । "अक्षं सौवर्चले तुत्थे हृषीके इति हैमः । अक्षो ज्ञातार्थशकटव्यवहारेषु पाशके । रुद्राक्षेंद्राक्षयोः सर्पे बिभीतकतरावपि । चक्रे कर्षे पुमानिति मेदिनी ।" द्यूतांगादौ पुंसि ॥ २२० ॥ द्यूतांगे पाशके । कर्षे मानभेदे । चक्रे रथावयवे । कलिद्रुमे बिभीतके । वार्ता जीविका । करीषाग्निः शुष्कगोमयानलः । करीषाग्निः पुमान्कर्षूः कुल्यायामपि च स्त्रियाम् । कुल्या नदीभेदः ॥ २२१ ॥ पुंभावे पुरुषस्य भावे तत्क्रियायां पुरुषस्य कर्मणि पौरुषम् । "पौरुषं पुरुषस्य स्याद्भावे कर्मणि तेजसि । ऊर्ध्वविस्तृतदोःपाणिनृमाने त्वभिधेयवदिति मेदिनी ।" चकाराद्गरलेऽपि विषम् । उपादाने उत्कोचेऽप्यामिषम् । "आमिषं पुन्नपुंसकम् । भोग्यवस्तुनि संभोगेऽप्युत्कोचे पललेऽपि चेति मेदिनी ।" पापेऽपि किल्मिषं "रोगेऽपि च" ॥ २२२ ॥ वृष्टौ मेघवर्षणे । लोकं धत्ते लोकधातुर्जंबुद्वीपस्तस्यांशे भारतादिखंडे । वत्सरेऽब्दे वर्षशब्दः

स्याद्वृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियाम् ॥
प्रेक्षा नृत्येक्षणं प्रज्ञा भिक्षा सेवार्थना भृतिः ॥ २२३ ॥
त्विट् शोभापि त्रिषु परे न्यक्षं कात्स्र्न्यनिकृष्टयोः ॥
प्रत्यक्षेऽधिकृतेऽध्यक्षो रूक्षस्त्वप्रेम्ण्यचिक्कणे ॥ २२४ ॥
इति षांताः ॥ रविश्वेतच्छदौ हंसौ सूर्यवह्नी विभावसू ॥
वत्सौ तर्णकवर्षौ द्वौ सारंगाश्च दिवौकसः ॥ २२५ ॥
शृंगारादौ विषे वीर्ये गुणे रागे द्रवे रसः ॥
पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे ॥ २२६ ॥

स्यात्। नृत्येक्षणं प्रज्ञा चेति द्वयं प्रेक्षासंज्ञम्। "प्रेक्षा धीरीक्षणं नृत्तमिति हैमादीक्षणं नृत्यं चेति पृथगपि।" अर्थना याञ्ञा। भृतिर्वेतनम्। "भिक्षितवस्तुनि च भिक्षा" ॥ २२३ ॥ अपिशब्दात्कांतौ। वाचि रुचौ त्विट् स्त्रीति रभसः। परे वक्ष्यमाणास्त्रयः शब्दास्त्रिषु वाच्यलिंगा इत्यर्थः। कात्स्र्न्ये साकल्ये। निकृष्टेऽधमे। परशुरामोऽपि न्यक्षः। न्यक्षः परशुरामे स्यात् न्याक्षः कात्स्र्न्यनिकृष्टयोरिति कोशांतरात्। "नियतानि अक्षाणि हृषीकाणि यस्मिन् न्यक्षः।" प्रत्यक्षे साक्षात्प्रमिते अधिकृते नियुक्तेऽध्यक्षः। "अधिकृतान्यक्षाण्यस्याध्यक्षः।" अप्रेम्णि स्नेहाभावे। अचिक्कणे अमसृणे ॥ २२४॥ इति षांताः ॥ अथ सांतानाह ॥ श्वेतच्छदो विहगभेदः। "हंसः स्यान्मानसौकसि। निर्लोभनृपविष्ण्वर्कपरमात्मन्यमत्सरे। योगिभेदे मन्त्रभेदे शरीरमरुदंतर इति मेदिनी।" तर्णको गोवत्सः। "वत्सः पुत्रादिवर्षयोः। तर्णके नोरसि क्लीबमिति मेदिनी।" सारंगाश्चातकाः। देवा अपि दिवौकसः। "दिवोकाश्च दिवौकाश्च पुंसि देवेच चातक इति द्विरूपकोशः" ॥ २२५ ॥ शृंगारादौ शृंगारवीरकरुणादौ नवविधे। विषे गरले। वीर्ये तेजसि। गुणे स्वाद्वम्लादौ। रागे द्रवे रसशब्दः स्यात्। यथा रागे। रसिको युवा। "रसो गंधरसे जले। शृंगारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः। देहधातुप्रभेदे च पारदस्वादयोः पुमानिति मेदिनी।" उत्तंसश्चावतंसश्चेति सांतद्वयं कर्णपूरे कर्णाभरणविशेषे शेखरे शिरोभूषणे च वर्तते ॥ २२६॥ देवभेदे यथा। अष्टौ वसवः। धनरत्नयोर्वसु क्लीबम्। "वसुर्ना देवभेदाग्निभायोक्त्रबकराजसु। क्लीबं

देवभेदेऽनले रश्मौ वसू रत्ने धने वसु ॥
विष्णौ च वेधाः स्त्री त्वाशीर्हिताशंसाहिदंष्ट्रयोः ॥ २२७ ॥
लालसे प्रार्थनौत्सुक्ये हिंसा चौर्यादिकर्म च ॥
प्रसूरश्वापि भूद्यावौ रोदस्यौ रोदसी च ते ॥ २२८ ॥
ज्वालाभासौ न पुंस्यर्चिर्ज्योतिर्भद्योतदृष्टिषु ॥
पापापराधयोरागः खगबाल्यादिनोर्वयः ॥ २२९ ॥
तेजःपुरीषयोर्वर्चो महस्तूत्सवतेजसोः ॥
रजो गुणे च स्त्रीपुष्पे राहौ ध्वांते गुणे तमः ॥ २३० ॥

वृद्ध्यौषधे श्यालैरत्नमधुरे त्रिष्विति मेदिनी ।" चकाराद्विरिंचोऽपि वेधाः । "वेधा धातृज्ञविष्णुष्विति हैमः ।" हितस्याशंसा हिताशंसा । अहेः सर्पस्य दंष्ट्रा च तयोराशीरिति सांतं नाम वर्तते । "तत्स्त्रियाम् ।" आशीरुरगदंष्ट्रायां प्रियवाक्याभिलाषयोरिति कोशांतरम् ॥ २२७ ॥ प्रार्थना याच्ञा औत्सुक्यमुद्युक्तता । उभे लालसे । "तृष्णातिरेके च लालसा । लालसौत्सुक्यतृष्णातिरेकयाच्ञासु च द्वयोरिति मेदिनी ।" चशब्दाद्वधेऽपि हिंसा । आदिना वृत्तिनाशादिकर्म । अश्वा वडवा । जनन्यामपि प्रसूः । "प्रसूरश्वाजनन्योश्च कंदलीवीरुधोः स्त्रियामिति मेदिनी ।" रोदसी रोदस्यौ इति सांतद्विवचनांते स्यातामेकयोक्त्या भुमिद्यावौ द्वे अप्युच्यते । पृथगपि प्रयोगोऽस्ति । यदुक्तम् । रोदश्च रोदसी चापि दिवि भुमौ पृथक् पृथक् । सहप्रयोगेऽप्यनयो रोदस्यावपि रोदसी इति । "रोदसीत्यव्ययमप्यस्ति । यदुक्तम् । द्यावापृथिव्यौ रोदस्यौ रोदसी रोदसीति चेति" ॥ २२८ ॥ ज्वालायां भासि च दीप्तौ अर्चिः । भादित्रये ज्योतिः । भं नक्षत्रम् । द्योतः प्रकाशः । दृष्टिः कनीनिकामध्यभागः । "अग्नौ दिवाकरे च ज्योतिः पुंसि ।" आगः पापेऽपराधे च । "आगः स्यादेनोवदघे मंताविति हैमः। "आदिना यौवनादि वयः ॥ २२९ ॥ पुरीषं गूनम् "वर्चो नपुंसकं रूपे विष्ठायामपि तेजसि । पुंसि चंद्रस्य तनय इति मेदिनी ।" उत्सवे तेजसि च महः । "गुणे गुणभेदे ।" स्त्रीणां पुष्पे आर्तवे च "रेणुपरागयोश्च रजः । अदंतोऽप्ययम् । रजोऽयं रजसा सार्धे स्त्रीपुष्पगुणधूलिष्वित्यजयः ।" राह्वादित्रये च तमः । "पापे शोके च" ॥ २३० ॥ पद्ये गायत्र्यादिवृत्ते । अभिलाषे

छंदः पद्येऽभिलाषे च तपः कृच्छ्रादिकर्म च ॥
सहो बलं सहा मार्गो नभः खं श्रावणो नभाः ॥ २३१ ॥
ओकः सद्माश्रयश्चौकाः पयः क्षीरं पयोऽम्बु च ॥
ओजो दीप्तौ बले स्रोत इंद्रिये निम्नगारये ॥२३२॥
तेजः प्रभावे दीप्तौ च बले शुक्रेऽप्यतास्त्रिषु ॥
विद्वान् विदंश्च बीभत्सो हिंस्रेऽप्यतिशये त्वमी ॥ २३३ ॥
वृद्धप्रशस्ययोर्ज्यायान् कनीयांस्तु युवाल्पयोः
वरीयांस्तूरुवरयोः साधीयान्साधुबाढयोः ॥ २३४ ॥
इति सांताः ॥ दलेऽपि बर्हं निर्बंधोपरागार्कादयो ग्रहाः ॥

इच्छायाम् । "छंदः पद्ये च वेदे च स्वैराचाराभिलाषयोरिति मेदिनी ।" कृच्छ्रं सांतपनादिव्रतम् । आदिना चांद्रायणादि । तपो लोकांतरेऽपि च । "धर्मे च तपः ।" बले सहः क्लीबम् । मार्गो मार्गशीर्षः । अत्र पुंसि । "सहो बले ज्योतिषि च पुंसि हेमंतमार्गयोरिति कोशांतरम् ।" खमाकाशः । तत्र नभः क्लीबे । श्रावणे पुंसि । "नभो व्योम्नि नभो घ्राणे बिसतंतौ पतद्ग्रहे । प्रावृषि श्रावणे इति हैमः" ॥ २३१ ॥ सद्म गृहम् । "ओकः अदंतोऽप्ययम् । ओक उचः क इति निपातनात् ।" आश्रय आश्रयमात्रम् । "ओकस्त्वाश्रयमात्रे स्यादिति हैमः । ओजो दीप्तिप्रकाशयोः । अवष्टंभे बले धातुतेजसीति हैमः ।" इंद्रियनदीवेगयोः स्रोतः ॥ २३२ ॥ प्रभावादिचतुष्के तेजः । "तेजस्त्विड्रेतसोर्बले । नवनीते प्रभावेऽग्नाविति हैमः ।" अतः परं सांतसमाप्तिपर्यंता वाच्यलिंगाः । विदन् ज्ञाता । चकारादात्मज्ञोऽपि विद्वान् । विद्वानात्मविदि प्राज्ञे पंडिते चाभिधेयवदिति विश्वः । हिंस्रे क्रूरे । अपिशब्दाद्रसभेदेऽपि बीभत्सः । "बीभत्सो विकृते क्रूरे रसे पार्थे घृणात्मनीति हैमः" ॥ २३३ ॥ अमी वक्ष्यमाणा ज्यायआदयः साधीयःपर्यंताः सांता वृद्धादीनां बाढपर्यंतानां अतिशये ज्ञेयाः । अतिशयेन वृद्धे प्रशस्ये स्तुत्ये च ज्यायान् । अतिशायितयोर्युवाल्पयोः कनीयान् । ऊरुर्महान् वरः श्रेष्ठस्तयोरातिशयितयोर्वरीयान् । अतिशयेन साधुः साधीयान् । अतिशयितं बाढं साधीयः । अतिशायनेऽर्थे इष्ठन्नीयसुन्भ्यां इमे शब्दाः साधवः ॥ २३४ ॥ इति सांताः । अथ हांतानाह ॥ दले पत्रे अपिशब्दात्पिच्छेऽपि बर्हम् । "बर्हं तर्णे परीवारे कलापे इति हैमः ।" निर्बंधादयो ग्रहाः । निर्बंध आग्रहविशेषः उपरागश्चं—

द्वार्यापीडे क्काथरसे निर्व्यूहो नागदंतके ॥ २३५ ॥
तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि च ॥
पत्नीपरिजनादानमूलशापाः परिग्रहाः ॥ २३६ ॥
दारेषु च गृहाः श्रोण्यामप्यारोहो वरस्त्रियाः ॥
व्यूहो वृंदेऽप्यहिर्वृत्रेऽप्यग्नींदुर्कारतमोऽपहाः ॥ २३७ ॥
परिच्छदे नृपार्हेऽर्थे परिबर्हो ॥ इति हांताः ॥ अव्ययाः परे ॥
आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे ॥ २३८ ॥

द्रार्कग्रहणम् । ग्रहो निग्रहनिर्बंधग्रहणेषु रणोद्यमे । सूर्यादौ पूतनादौ च सैंहिकेयीपरागयोरिति विश्वः ॥ द्वारि द्वारे । आपीडे शेखरे । क्काथरसे कथितद्रव्यरसे । नागदंतके गृहादिभित्तिस्थकीलद्वये निर्व्यूहः ॥ २३५ ॥ हरते यद्गृहीत्वा तुलया द्रव्यमुन्मीयते तत्तुलासूत्रं तत्र । अश्ववृषादिरश्मौ च प्रग्राहप्रग्रहौ । "प्रग्राहः स्यात्तुलासूत्रे वृषादीनां च बंधने । प्रग्रहः किरणे भुजे । तुलासूत्रेऽश्वादिरश्मौ सुवर्णे हरिपादपे । बंधे बंद्यामिति हैमः ।" परिजनः परिवारः । आदानं स्वीकारः "परिग्रहः कलत्रे च मूलस्वीकारयोरपि । शपथे परिवारे च राहुवक्त्रस्थभास्कर इत्यजयः" ॥ २३६ ॥ दारेषु पत्न्याम् । चकारात्स्थानि गृहाः पुंभूम्नि । या वरस्त्री उत्तमा स्त्री तस्याः श्रोण्यां कट्यामारोहः । यथा वरारोहा । अपिशब्दादवरोहे गजारोहे च । "आरोहो दैर्घ्य उच्छ्राये स्त्रीकट्यां मानभिद्यपि । आरोहणे गजारोहे इति हेमचंद्रः ।" अपिशब्दाद्व्यूहः स्याद्बलविन्यासे । अहिर्वृत्रासुरे सर्पे "निर्माणतर्कयोश्च ।" वह्निचंद्रसूर्यास्तमोपहाः । "जिने च तमोपहः" ॥ २३७ ॥ नृपार्हेऽर्थे राजयोग्यद्रव्ये सितच्छत्रादौ । परिबर्हस्तु राजार्हवस्तुन्यपि परिच्छद इति । "परिबर्हः परिवारः ।" परेऽतऊर्ध्वं वक्ष्यमाणा आङादिशब्दा अव्यया उच्यंते । अव्ययलक्षणं तु । सदृशं त्रिषु लिंगेषु सर्वासु च विभक्तिषु ॥ वचनेषु च सर्वेषु यन्न व्येति तदव्ययमिति । तेषामत्र वर्गे उपन्यासस्तु पूर्ववन्नानार्थत्वात् । इति हांताः ॥ आङित्यव्ययं ईषदर्थादिचतुष्के । तस्य ङकारोऽनुबंधः । ईषदर्थे यथा । आपिंगलः ईषत्पिंगल इत्यर्थः । अभिव्याप्तौ यथा । आसत्यलोकादापातालात् । सीमार्थे यथा । आसमुद्रं राजदंडः । धातुयोगजे क्रियायोगजेऽर्थे यथा । आहरति "आक्रामतीत्यादि" ॥ २३८ ॥

आ प्रगृह्यः स्मृतौ वाक्येऽप्यास्तु स्यात्कोपपीडयोः ॥
पापकुत्सेषदर्थे कु धिङ् निर्भर्त्सननिंदयोः ॥ २३९ ॥
चान्वाचयसमाहारेतरेतरसमुच्चये ॥
स्वस्त्याशीःक्षेमपुण्यादौ प्रकर्षे लंघनेऽप्यति ॥ २४० ॥
स्वित्प्रश्ने च वितर्के च तु स्याद्भेदेऽवधारणे ॥

यः प्रगृह्यसंज्ञकः आ इति निपातः सः स्मृतौ स्मरणे वाक्ये वाक्यपूरणे च वर्तते। प्रगृह्यस्त्वचि नित्यं प्रकृत्या वर्तते। तत्र स्मृतौ यथा। आ एवं किल तत्। वाक्ये तु आ एवं मन्यसे। "आ प्रगृह्यः स्मृतौ वाक्येऽनुकंपायां समुच्चय इति मेदिनी।" सविसर्गस्त्वा इति यो निपातः स पीडायां कोपे च वर्तते। तत्र पीडायां यथा। आः शीतम्। कोपे यथा। आः पाप किं विकत्थसे। "आः स्मरणेऽपाकारणे कोपसंतापयोरपीति कोशांतरम्।" पापाद्यर्थत्रये कुशब्दः। पापे यथा। कुकर्म। कुत्सायां यथा। कापथः। ईषदर्थे यथा। कवोष्णम्। कु पापीयसि कुत्सायामीषदर्थे निवारण इति हैमः। "कु कुत्सायां निवारण इति विश्वः।" अपकारशब्दैर्भयोत्पादनं निर्भर्त्सनम्। दोषाख्यानमात्रं निंदा। निर्भर्त्सने यथा। धिक् त्वां ताडनार्हमनध्ययनशीलम्। निंदायां यथा। धिक् परस्त्रीगामिनं पुरुषम् ॥ २३९ ॥ अन्वाचयाद्यर्थचतुष्के चशब्दः। अन्यतरस्यानुषंगिकत्वेऽन्वाचयः। तत्र यथा। भिक्षामट गां चानय। समाहारः समूहः। तत्र यथा। संज्ञा च परिभाषा च संज्ञापरिभाषम्। मिलितानामन्वय इतरेतरयोगः। यथा धवश्च खदिरश्च धवखदिरौ। परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः समुच्चयः। तत्र यथा। ईश्वरं गुरुं च भजस्वेति। "च पादपूरणे पक्षांतरे हेतौ विनिश्चय इति त्रिकांडशेषः।" आशीराशीर्वादः। तत्र यथा। स्वस्ति ते भूयात्। क्षेमे निरुपद्रवे यथा। स्वस्ति गच्छ। "पुण्ये यथा। स्वस्तिमान्स्वर्गमश्नुते। आदिना स्वस्ति स्यान्मंगले पुण्येऽप्याशंसायामपि क्वचिदिति मेदिनी।" प्रकर्षे अति यथा। अत्युत्तमो विष्णुः। "अति प्रकर्षे लंघने भृशे स्तुतावसंमतिक्षेपेऽपीति हैमः।" अतिवेलं जलधितलम् ॥ २४० ॥ प्रश्नवितर्कयोः स्वित्। प्रश्ने यथा। किं स्वित्कुशलमस्ति। वितर्को नानापक्षविमर्शः। स यथा। सर्वेश्वरत्वं विष्णोराहोस्विच्छिवस्य। "स्वित्प्रश्ने च वितर्के च

सकृत्सहैकवारे चाप्याराद्दूरसमीपयोः ॥ २४१ ॥
प्रतीच्यां चरमे पश्चादुताप्यर्थविकल्पयोः ॥
पुनःसहार्थयोः शश्वत्साक्षात्प्रत्यक्षतुल्ययोः ॥ २४२ ॥
खेदानुकंपासंतोषविस्मयामंत्रणे बत ॥
हंत हर्षेऽनुकंपायां वाक्यारंभविषादयोः ॥ २४३ ॥
प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ॥

तथैव पादपूरण इति मेदिनी ।" भेदावधारणयोस्तुशब्दो यथा । क्षीरान्मांसं तु पुष्टिकृत् । शिष्टैर्मतं तु तद्युक्तम् । "तु पादपूरणे भेदे समुच्चयेऽवधारणे । पक्षांतरे नियोगे च प्रशंसायां विनिग्रह इति मेदिनी ।" सहार्थे एकवारे च सकृत् यथा । सकृद्यांति । सकृदपि कुर्याद्दयाश्राद्धम् । दूरे "आरात्" यथा । आराच्छत्रोः सदा वसेत् । समीपे तु सखायं स्थापयेदारात् ॥ २४१ ॥ प्रतीच्यां पश्चिमदिशि । चरमेंऽसे च पश्चात् । यथा । "पश्चादस्तंगतो रविः । पश्चिमे वयसि नैमिषं वशी ।" अपिशब्दस्यार्थः समुच्चयस्तत्र विकल्पे चोतशब्दो यथा । उत भीम उतार्जुनः । विष्णुरुत शिवः सेव्यः । "उत प्रश्नवितर्कयोः । समुच्चये विकल्पे चेति हैमः । अजयस्तु उतापी द्वौ च बाढार्थाविति ।" पुनरर्थे पौनःपुन्ये सहार्थे च शश्वत् । यथा शश्वद्विष्णुं स्मरेत् । शिष्यैः शश्वद्वतो गुरुः । "शश्वत्स्यादात्मप्रश्ने च मंगले । पुराकल्पे सदार्थे च पुनरर्थे च दृश्यत इति मेदिनी । अजयस्तु शश्वत्सहसदार्थयोरित्याह । शश्वत्सह पुनर्नित्य इति हैमश्च ।" प्रत्यक्षे तुल्ये च साक्षात् । यथा । साक्षात् दृष्टो मया हरिः । साक्षाल्लक्ष्मीरियं वधूः ॥ २४२ ॥ खेदाद्यर्थपंचके बत । यथा । अहो बत महत्कष्टमिति । बत निःस्वोऽसि । बत पतिरालिंगितः । अहो बतायं ध्रुव आप देवम् । एहि बत सखे । "बतेत्यव्ययं दंत्योष्ठ्यादीसजयः ।" हर्षादिचतुष्के हंतशब्दः । "हर्षे यथा । हंत लाभः शतगुणः । अनुकंपायां यथा । हंत दीनो रक्षितव्यः ।" वाक्यारंभे यथा । हंत ते कथयिष्यामि । "विषादे यथा । हंत जातमजातारेः प्रथमेन त्वयाऽरिणा । हंत दानेऽनुकंपायां वाक्यारंभविषादयोः । निश्चये च प्रमोदे चेति हैमः" ॥ २४३ ॥ यो मुख्येन सदृशः प्रतिनिधिस्तत्र प्रतिशब्दो यथा । अभिमन्युं प्रति परीक्षित् । वीप्सा व्याप्तुमिच्छा तत्र यथा । तीर्थं तीर्थं प्रति गच्छति । लक्षणायां यथा । वृक्षशाखां प्रति विद्योतते विद्युत् । आदिना इत्थंभूताख्यानादौ । प्रयोगत इति शिष्टप्रयोगानु-

इति हेतुप्रकरणप्रकाशादिसमाप्तिषु ॥ २४४ ॥
प्राच्यां पुरस्तात्प्रथमे पुरार्थेऽग्रत इत्यपि ॥
यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे ॥ २४५ ॥
मंगलानंतरारंभप्रश्नकार्त्स्न्येष्वथो अथ ॥
वृथा निरर्थकाविध्योर्नानाऽनेकोभयार्थयोः ॥२४६ ॥

सारेण प्रतिशब्दस्य प्रक्षेपः "प्रतीत्थंभूतभागयोः । प्रतिदाने प्रतिनिधौ वीप्सालक्षणयोरपीति हैमः ।" हेत्वर्थे इतिशब्दो यथा । रामो हंतीति रावणः पलायते । प्रकरणं प्रकारः । यथा विप्रक्षत्रियविट्शूद्रा इति वर्णाः । प्रकाशे यथा । इति पाणिनिः । पाणिनिशब्दो लोके प्रकाशते इत्यर्थः । "प्रकर्ष इति पाठः ।" आदिशब्दादेवमर्थे । यथा । क्रमादमुं नारद इत्यबोधि । समाप्ताववसाने यथा । धर्ममाचरेदिति । "इति स्वरूपे सान्निध्ये विवक्षानियमेऽपि च । हेतौ प्रकारप्रत्यक्षप्रकर्षेष्ववधारणे । एवमर्थे समाप्तौ स्यादिति हैमः" ॥ २४४ ॥ प्राच्याद्यर्थचतुष्के पुरस्तात् । प्राच्यां पूर्वदिशि । प्रथमे यथा । पुरस्ताद्भुंक्ते । पुरार्थेऽतीते यथा । पुरस्ताद्दासोऽभूत् । अग्रतोऽग्रे यथा । पुरस्तात्पुस्तकम् । यद्वाग्रत इत्यपि शब्दः प्राच्याद्यर्थे स्यात् । साकल्यादौ यावत्तावच्छब्दौ यथा । यावद्दत्तं तावद्भुक्तम् । अवधौ यथा । मूलाच्छाखां यावत्प्रकांडः । माने परिमाणे यथा । यावत्स्वर्णं तावद्रजतम् । अवधारणे निश्चये यथा । श्रोत्रियं तावदामंत्रयस्व । "यावत्कार्त्स्न्येऽवधारणे । प्रशंसायां परिच्छेदे मानाधिकारसंभ्रमे । पक्षांतरे चेति मेदिनी" ॥ २४५ ॥ अथो अथ इमौ शब्दौ मंगलादिषु । मंगले यथा । अथातो ब्रह्मजिज्ञासा । अनंतरे यथा । स्नानं कृत्वाऽथ भुंजीत । आरंभे यथा । अथ शब्दानुशासनं लिख्यते । प्रश्ने यथा । अथ वक्तुं समर्थोऽसि । कार्त्स्न्ये यथा । अथ धातून्ब्रूमः । "अथो अथ समुच्चये । मंगले संशयारंभाधिकारानंतरेषु च । अन्वादेशे प्रतिज्ञायां प्रश्नसाकल्ययोरपीति हैमः ।" निरर्थके वृथा । यथा । वृथा दुग्धोऽनड्वान् । अविधौ विधिहीने वृथा । यथा । वृथा दानम् । "वृथा निष्कारणे वंध्ये वृथा स्याद्विधिवर्जित इति विश्वः ।" अनेकार्थे नानाशब्दो यथा । नानाविधा जनाः । उभयार्थे यथा । नानाविधं न सज्जेत । "नानाविनोभयानेकार्थेष्विति हेमचंद्रः" ॥ २४६ ॥ पृच्छायां यथा । को नु धावति ।

नु पृच्छायां विकल्पे च पश्चात्सादृश्ययोरनु ॥
प्रश्नावधारणाऽनुज्ञानुनयामंत्रणे ननु ॥ २४७ ॥
गर्हासमुच्चयप्रश्नशंकासंभावनास्वपि ॥
उपमायां विकल्पे वा सामि त्वर्धे जुगुप्सिते ॥ २४८ ॥
अमा सह समीपे च कं वारिणि च मूर्धनि ॥
इवेत्थमर्थयोरेवं नूनं तर्केऽर्थनिश्चये ॥ २४९ ॥
तूष्णीमर्थे सुखे जोषं किं पृच्छायां जुगुप्सने ॥

विकल्पे यथा । अयं भीमो नु धर्मो नु । "नु प्रश्नेऽनुनयेऽतीतार्थे विकल्पवितर्कयोरिति हैमः । पश्चादर्थे सादृश्यार्थे चानु ।" पश्चादर्थे यथा । रथमनुगच्छति । सादृश्ये यथा । ज्येष्ठं अनुकरोति । "अनु लक्षणवीप्सेत्थंभूतभागेषु सन्निधौ । सादृश्यायामहीनेषु पश्चादर्थसहार्थयोरिति हैमः ।" प्रश्नादिपंचके ननु । प्रश्ने यथा । ननु किमेतत् । अवधारणे यथा । नन्वयं योगी । अनुज्ञायां यथा । ननु गच्छ । अनुनयः सांत्वनम् । ननु कोपं मुंच दयां कुरु । आमंत्रणं संबोधनम् । ननु राजन् । "नन्वाक्षेपे परिप्रश्ने प्रत्युक्ताववधारणे । वाक्यारंभेऽप्यनुनयामंत्रणानुज्ञयोरपीति हैमः" ॥ २४७ ॥ गर्हादिपंचके क्रमादपिशब्दो यथा । अपि सिंचेत्पलांडुम् । स्त्रियं पालय पुत्रमपि । अपि जानासि किंचित्त्वम् । अपि चोरो भवेत् । अपि स्थाणुं जयेद्रामः । युक्तपदार्थे कामचारक्रियासु च अपिशब्दः । उपमाविकल्पयोर्वाशब्दः स्यात् । उपमायां यथा । आशीविषो वा संक्रुद्धः । विकल्पे यथा । शिवं वा यदि वा विष्णुम् । "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चय इति विश्वः ।" अर्धे सामि यथा । सामि संमिताक्षी । जुगुप्सिते यथा । सामि कृतमकल्याणकारि ॥ २४८ ॥ सहार्थेऽमा यथा । पुत्रेणामा भुंक्ते । समीपे यथा । अमात्यः समीपवर्तीत्यर्थः । अमांतिकसहार्थयोरिति कोशांतरे च । कं शिरःसुखवारिष्विति मेदिनी । इवार्थे इत्थमर्थे च एवंशब्दो यथा । अग्निरेवं द्विजः अग्निरिवेत्यर्थः । इत्थमर्थे प्रकारे । एवंवादिनि देवर्षौ । "एवं प्रकारोपमयोरंगीकारेऽवधारणे इति धरणिहेमचंद्रौ । तर्के नूनं यथा । नूनमयमतियज्वनां प्रियः । अर्थनिश्चये यथा । क्षुद्रेऽपि नूनं शरणं प्रपन्ने ।" नूनं निश्चिततर्कयोरिति विश्वः ॥ २४९ ॥ तूष्णीमर्थे मौने यथा । जोषं तिष्ठ । "सुखे यथा । जोषमासीत वर्षासु । "जोषं सुखे

नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने ॥ २५० ॥
अलं भूषणपर्याप्तिशक्तिवारणवाचकम् ॥
हुं वितर्के परिप्रश्ने समयांतिकमध्ययोः ॥ २५१ ॥
पुनरप्रथमे भेदे निर्निश्चयनिषेधयोः ॥
स्यात्प्रबंधे चिरातीते निकटागामिके पुरा ॥ २५२ ॥

स्तुतौ । मौनलंघनयोश्चापीति हैमः ।" पृच्छायां किम् । यथा । "किमाद्रियेरन् रसिकाः कृतिं ते ।" जुगुप्सने किम् । यथा । स किंराजा यः प्रजां न रक्षति । "किं वितर्के परिप्रश्ने क्षेपनिंदाप्रकारयोरिति विश्वः ।" प्राकाश्यादिपंचके नामशब्दः । प्राकाश्यं प्रसिद्धिः । यथा हिमालयो नाम नगाधिराजः । संभाव्ये कथंचिदर्थे यथा । भविष्यति युद्धं नाम । क्रोधे यथा । मम वैरी रावणो नाम पापः । उपगमः सद्वेषांगीकारः । यथा । शत्रोः सकाशादृह्णाति नाम । कुत्सने यथा । को नामायं प्रलपति मे विशतः सभायाम् । "नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च । संभाव्यकुत्साप्राकाश्यविकल्पेष्वपि दृश्यत इति मेदिनी" ॥ २५० ॥ भूषणमलंकारः । पर्याप्तिः परिपूर्णता । शक्तिः सामर्थ्यम् । वारणं चैतदर्थेऽलंशब्दः । क्रमेण यथा । अलंकृतः शिशुः । अलं भुक्तवान् । अलं मल्लो मल्लाय । अलं महीपाल तव श्रमेण । "अलं निरर्थके इति हैमः ।" वितर्कपरिप्रश्नयोर्हुंकारः । वितर्के हुं जलं मृगतृष्णा हुम् । परिप्रश्ने हुं देवदत्तोऽयम् । "हुं वितर्के चानुमताविति त्रिकांडशेषः ।" हुं वितर्के परिप्रश्ने हुं रुषोक्त्यनुनीतिष्विति विश्वः । "हुं वितर्के परिप्रश्ने हुं लज्जायां निवारणे इति हैमः ।" समीपमध्ययोः समया । समीपे यथा । समया पत्तनं नदी । मध्ये यथा । समया शैलयोर्ग्रामः ॥ २५१ ॥ प्रथमाभावे यथा । पुनरुक्तम् । भेदे यथा । किं पुनर्ब्राह्मणाः पुण्याः । "पुनरप्रथमे मतम् । अधिकारे च भेदे च तथा पक्षांतरेऽपि चोति मेदिनी ।" निश्चये निर्यथा । निरुक्तम् । निषेधे निर्धनो राजा । "निर्निश्चये क्रांताद्यर्थे निःशेषप्रतिषेधयोरिति हैमः ।" प्रबंधादिषु पुराशब्दः । प्रबंधे यथा । पुराधीते । अविरतमपाठीदित्यर्थः । चिरंतनम् । पुराणमिति यावत् । तत्र यथा । पुरातनम् । अतीतं भूतम् । निकटः सन्निहितः । आगामिकं भावि । पुरा पुराणे निकटे प्रबंधातीतभाविष्विति विश्वमेदिन्यौ ॥ २५२ ॥ ऊररीत्येको दीर्घादिः शब्दः । उररीत्यपरो

ऊरर्यूरी चोररी च विस्तारेऽङ्गीकृतौ त्रयम् ॥
स्वर्गे परे च लोके स्वर्वार्तासंभाव्ययोः किल ॥ २५३ ॥
निषेधवाक्यालंकारजिज्ञासानुनये खलु ॥
समीपोभयतः शीघ्रसाकल्याभिमुखेऽभितः ॥ २५४ ॥
नामप्राकाश्ययोः प्रादुर्मिथोऽन्योन्यं रहस्यपि ॥
तिरोंऽतर्धौ तिर्यगर्थे हा विषादशुगार्तिषु ॥ २५५ ॥
अहहेत्यद्भुते खेदे हि हेतावधारणे॥इति नानार्थवर्गः॥३॥

ह्रस्वादिरिति भेदान्न द्विरुक्तिः । विस्तारेऽङ्गीकृतौ च ऊरर्यादित्रयम् । यथा ऊररीं करोतीत्यादि । स्वः स्वर्गे यथा । स्वर्णद्यां स्नाति नारदः । परे इति लोकविशेषणम् । परे लोके यथा । स्वर्गतस्य क्रिया कार्या पुत्रैः परमभक्तितः । स्वः स्वर्गपरलोकयोरिति विश्वः । वार्तायां यथा । जघान कंसं किल वासुदेवः । संभाव्यं संभावनीयम् । तत्र यथा । गुरुन्किलातिशेते शिष्यः । किलशब्दस्तु वार्तायां संभाव्यानुनयार्थयोरिति विश्वः । किल संभाव्यवार्तयोः । हेत्वरुच्योरलीके चेति हैमः ॥ २५३ ॥ निषेधे खलु यथा । खलु रुदित्वा । वाक्यालंकारे वाक्यभूषायाम् । एतत्खल्वाहुः । जिज्ञासायां यथा । खलु जानासि । अनुनये यथा । देहि खलु वाचकम् । "खलु स्याद्वाक्यभूषायां जिज्ञासायां च सांत्वने ॥ वीप्सामाननिषेधेषु पूरणे पदवाक्ययोरिति मेदिनी ।" समीपादिपंचकेऽभितः । समीपे यथा । वाराणसीमभितः भागीरथी । उभयत इत्युभयार्थे यथा । अभितः कुरु चामरौ । शीघ्रार्थे यथा । अभितोऽधीष्व । साकल्ये यथा । अभितो वनदाहः । अभिमुखे यथा । अभितो हिंसको हंति मामेव परिधावति ॥२५४॥ नाम्नि प्राकाश्ये च प्रादुः । नाम्नि यथा । प्रादुरासीच्चक्रपाणिः । प्राकाश्ये यथा । प्रादुर्बुद्धिर्भविष्यति । अन्योन्यार्थे मिथो यथा । वासिष्ठकौंडिन्यमैत्रावरुणानां मिथो न विवाहः । रहसि मिथो यथा । मिथो मंत्रयते । मिथोऽन्योन्यं मिथो रह इति विश्वः । अंतर्धाने तिर्यगर्थे च तिरः । अंतर्धाने यथा । तिरोभूयास्ते । तिर्यगर्थे यथा तिरोवर्तते चंद्रः । विषादाद्यर्थत्रये हाकारः । विषादे यथा । हा रमणीयो गतः कालः । शुचि शोके । यथा । हा राम वनं गतोऽसि । आर्तौ पीडायां यथा । हा हतोऽस्मीति । "कुत्सार्थे च हा शब्दः" ॥ २५५ ॥ अद्भुते यथा । अहह बुद्धिप्रकर्षो राज्ञः । खेदे यथा । अहह नीतो द्यूतेन मया

चिरायचिररात्रायचिरस्याद्याश्चिरार्थकाः ॥
मुहुः पुनःपुनः शश्वदभीक्ष्णमसकृत्समाः ॥ १ ॥
स्राक् झटित्यंजसाह्नाय द्राङ् मंक्षु सपदि द्रुते ।
बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे ॥ २ ॥
पृथग्विनांतरेणर्ते हिरुङ् नाना च वर्जने ॥

कालः । "अहहा दीर्घांतमपि । अत्र क्लिप् । अहहेत्यद्भुते खेदे परिक्लेशप्रकर्षयोः । संबोधनेऽपीति मेदिनी ।" हेतौ कारणे हि । यथा । अग्निरत्रास्ति धूमो हि दृश्यते । अवधारणे निश्चये यथा । चंद्रो हि शीतः । हि पादपूरणे हेतौ विशेषेऽप्यवधारणे । प्रश्ने हेत्वपदेशे च संभ्रमासूययोरपीति मेदिनी । दीर्घांतपाठोऽप्यस्ति । ही दुःखहेतावाख्यातो विषादे विस्मयेऽपि चेति ॥ इति नानार्थवर्गः ॥ ३ ॥ चिराय चिररात्राय चिरस्य एते निपाता आद्या येषां ते तथा । आद्यशब्दाच्चिरेण चिरात् चिरं इति षट् चिरार्थकाः । दीर्घकालस्य वाचका इत्यर्थः । "क्रमेणोदाहरणानि । यथा । चिराय संतर्प्य समिद्भिरग्निम् । चिररात्राय संचितम् । चिरस्य दृष्टैव मृतोत्थितेव । चिरेण नाभिप्रथमोद्बिंदवः । चिरात्सुतस्पर्शरसज्ञतां ययौ । स चिरं तपसि स्थितः । मुहुः पुनःपुनः शश्वत् अभीक्ष्णं असकृत् एते पंच समाः अर्थतस्तुल्याः । यथा । मुहुः पश्यसि कौंतेय । आगच्छति पुनःपुनः । वन्यवृत्तिमिमां शश्वत् । अभीक्ष्णमक्षुण्णतयाऽतिदुर्गमम् । असकृज्जलपानाच्च सकृत्तांबूलचर्वणात् । अजयस्तु । अभीक्ष्णशब्दमनव्ययमप्याह । अभीक्ष्णं तु पौनःपुन्ये सर्वदार्थे च दृश्यत इत्यनव्ययप्रकरणे पाठात् ॥ १ ॥ स्राक् झटिति अंजसा अह्नाय द्राक् मंक्षु सपदि एते सप्त द्रुते शीघ्रे । यथा । स्राग् वयो याति देहिनाम् । वृक्षं झटित्यारुरोह । अंजसा याति तुरगः । अह्नाय सूर्येण तमो निरस्तम् । द्राक् भविष्याति सुखं तव प्रिये । मंक्षु सपादि सरितः पटलैरलीनाम् । वचसस्तस्य सपदि क्रिया केवलमुत्तरम् । बलवत् सुष्ठु किमुत सु अति अतीव षट् निर्भरे अतिशये । यथा । पुनर्वशित्वा बलवन्निगृह्य । सुष्ठु पीतं मया घृतम् । किमुतावर्द्धत क्षेत्रम् । अतिवृष्टिः । अतीव शोभते राजा ॥ २ ॥ पृथक् विना अंतरेण ऋते हिरुक् नाना एते षट् वर्जने । यथा । किंचिद्दत्वा पृथक् क्रिया । क्षणमप्युत्सहते न मां विना । अंतरेण सुतं नास्ति सुखं संसा-

यत्तद्यतस्ततो हेतावसाकल्ये तु चिच्चन ॥ ३ ॥
कदाचिज्जातु सार्धं तु साकं सत्रा समं सह ॥
आनुकूल्यार्थकं प्राध्वं व्यर्थके तु वृथा मुधा ॥ ४ ॥
आहो उताहो किमुत विकल्पे किं किमूत च ॥
तु हि च स्म ह वै पादपूरणे पूजने स्वति ॥ ५ ॥
दिवाह्नीत्यथ दोषा च नक्तं च रजनाविति ॥
तिर्यगर्थे साचि तिरोऽप्यथ संबोधनार्थकाः ॥ ६ ॥
स्युः प्याट् पाडंग हे है भोः समया निकषा हिरुक् ॥

रिणां भुवि । ऋते पुण्यात्स्वर्गतिर्न । हिरुक् कर्म न मोक्षः स्यात् । विष्णुं नाना मोक्षदो नास्ति देवः । यत् तत् यतः ततः चत्वारि हेतौ कारणे । यथा । यन्न रम्यं तरस्विभ्यः । तदिदं परिरक्ष शोभने । यतो गंगांभसि स्नातः । ततो निष्कल्मषो नरः । चित् चन द्वयं असाकल्ये । यथा कश्चित् । कंचन ॥ ३ ॥ कदाचित् जातु द्वे कस्मिंश्चित्काले । स्मृतिः कदाचित् भवति । ज्ञानं ते जातु सूत्तमम् । सार्धं साकं सत्रा समं सह पंचकं सहेत्यर्थे । यथा । सार्धं दानववैरिणा । पत्न्या साकं पतिर्भुंक्ते । सत्रा कलत्रेण सुखं समश्नुते । समं वधूभिस्तरुणा रमंते । निश्वासधूमं सह रत्नभाभिः । प्राध्वमित्येकमानुकूल्ये । वृथा मुधा द्वे व्यर्थके । यथा । वृथा पुष्टः । मुधा मुग्धा भ्रमंस्तत्र ॥ ४ ॥ आहो उताहो किमुत किं किमु उत षट् विकल्पे । "यथा । देव आहो गंधर्वः । उताहो ब्रह्म चोच्यते । किमुत त्वं शिवो ब्रह्मा । स्थाणुरयं किं पुरुषः । गृहं किमु वनं गतः । विष्णुरुत शिवः सेव्यः ।" तु हि च स्म ह वै षट् श्लोकचरणपूर्णतायाम् । "यथा । रामस्तु लक्ष्मणं प्राह । अहं हि यास्ये नगरम् । स च प्राह च राजानम् । मया स्म भुक्तम् । स ह तं प्राह लक्ष्मणः । तेन वै हतः ।" सु अति द्वे पूजने । "सु स्तुतम् । अत्युत्तमः" ॥ ५ ॥ अह्नीत्यर्थे दिवाशब्दः । दोषा नक्तं द्वे रात्रावित्यर्थे । "यथा । चोराश्च दोषा ययुः । नक्तं गृहस्थो भुंजीत ।" साचि तिरः द्वे तिर्यगर्थे । "कृतं साचि धनुस्तेन । तिरो गत्वा समीक्षेत" ॥ ६ ॥ प्याट् पाट् अंग हे है भोः एते षट् संबोधनार्थकाः स्युः । "यथा । प्याट् भीम यज्ञं रक्षस्व । एवं पाडित्यादि ।" समया निकषा हिरुक् त्रयं सामीप्ये । यथा ग्रामं समया । विलंघ्य लंकां निकषा हनि

अतर्किते तु सहसा स्यात्पुरः पुरतोऽग्रतः ॥ ७ ॥
स्वाहा देवहविर्दाने श्रौषट् वौषट् वषट् स्वधा ॥
किंचिदीषन्मनागल्पे प्रेत्यामुत्र भवांतरे ॥ ८ ॥
व वा यथा तथैवैवं साम्येऽहो ही च विस्मये ॥
मौने तु तूष्णीं तुष्णीकां सद्यः सपदि तत्क्षणे ॥ ९ ॥
दिष्ट्या समुपजोषं चेत्यानंदेऽथांतरेंऽतरा ॥
अंतरेण च मध्ये स्युः प्रसह्य तु हठार्थकम् ॥ १० ॥

ष्यति "पर्वतस्य हिरुक् नदी ।" सहसेत्येकमतर्किते । यथा । दिवः प्रसूनं सहसा पपात । सहसा विदधीत न क्रियाम् । पुरः पुरतः अग्रतः त्रयमग्रे इत्यर्थे । "यथा । पुरः पश्यसि किं बाले । पुरतः स्थाप्य सर्वेशम् । लेखः प्रत्यर्थिनोऽग्रतः" ॥ ७ ॥ स्वाहा श्रौषट् वौषट् वषट् स्वधा पंचैते देवेभ्यो हविर्दानविशेषे प्रयुज्यंते । तत्र पितृदाने स्वधाशब्दः प्रसिद्धः । किंचित् ईषत् मनाक् त्रयमल्पे । "यथा । किंचिद्विकासितं सुमम् । ईषदुष्णं पयः पिब । मनाक् विहस्य संतुष्टः ।" प्रेत्य अमुत्र द्वयं जन्मांतरे । "यथा । प्रेत्य स्वर्गे महीयते । इह चामुत्र च फलम्" ॥८॥ व वा यथा तथा इव एवं षट् साम्ये । तत्र वशब्दो यथा । शाम्रवं व वपुर्यशः । "मणी वोष्ट्रस्य लंबेते प्रियौ वत्सतरौ ममेत्यत्र इवार्थे वशब्दो वाशब्दो वा बोध्य इति कौमुद्यामुक्तम् । यथा बुभुक्षितस्यान्नं तथैवार्तस्य चैषधम् । इंदुरिंदुरिव श्रीमान् । अग्निरेवं द्विजः । वं प्रचेतसि जानीयादिवार्थे तु तदव्ययमिति मेदिन्यादिः । अतो "व वा यथा तथा"–इत्यादिमनोरमोक्तः पाठः साधुः । "न तु वद्वायथेत्यादिः । अपत्यादि-पर्यायमध्येऽणूफिञादीनामनुक्तेश्च । अहो ही द्वे विस्मये । यथा । अहो रूपमहो सत्त्वम् । ही विस्मयविषादयोरिति विश्वः । तूष्णीं तूष्णीकाम् । "यथा । तूष्णीं स्थित्वा क्षणं भूयः । तूष्णीकां जलमध्यगः ।" सद्यः सपदि द्वे तत्काले । "यथा । सद्यो हतः समुत्तस्थौ । शत्रुं जघान सपदि" ॥ ९ ॥ दिष्ट्या समुपजोषं द्वे आनंदे । यथा । दिष्ट्या ते दर्शनं कांते । समुपजोषं भूयात् । अंतरे अंतरा अंतरेण त्रीणि मध्ये स्युः । यथा । अनयोरंतरे तिष्ठ । त्वां मां चांतरा अंतरेण वा कमंडलुः । प्रसह्येत्येकं हठार्थकम् ॥ १० ॥

युक्ते द्वे सांप्रतं स्थानेऽभीक्ष्णं शश्वदनारते ॥
अभावे नह्यनो नापि मास्म मालं च वारणे ॥ ११ ॥
पक्षांतरे चेद्यीद च तत्त्वे त्वद्धांऽजसा द्वयम् ॥
प्राकाश्ये प्रादुराविः स्यादोमेवं परमं मते ॥ १२ ॥
समंततस्तु परितः सर्वतो विष्वगित्यपि ॥
अकामानुमतौ काममसूयोपगमेऽस्तु च ॥ १३ ॥

सांप्रतं स्थाने द्वयं युक्ते । यथा । स्वयं छेत्तुमसांप्रतम् । न युक्तमित्यर्थः । "क्रमशो वच्मि सांप्रतमिति वा ।" स्थाने हृषीकेश तव प्रकीर्त्या । अभीक्ष्णं शश्वत् द्वयं अनारते अजस्रे । "अभीक्ष्णमुष्णैरपि तस्य सोष्मणः । शश्वत्कालः ।" नहि अ नो न चत्वारि अभावे । "यथा । नहि स्वात्मारामं विषयमृगतृष्णा भ्रमयति । अ राजदैविकं नष्टम् । नो चक्री किं कुलालः । न मे किंचन दह्यति ।" अ स्यादभावे स्वल्पार्थे इति विश्वः । मास्म मा अलं त्रयं वारणे । यथा । मास्म कार्षीरिदं पुत्र । मा कुरु । अलं महीपाल तव श्रमेण ॥ ११ ॥ चेत् यदि द्वयं पक्षांतरे । "यथा । सत्यं चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम् ।" अद्धा अंजसा द्वे तत्त्वार्थे । यादि स्त्रैणं देवी यमनिरतदेहार्धघटनादवैति त्वामद्धा । "अंजसेति रुरुधुः कुचग्रहैः ।" प्रादुः आविः द्वयं प्राकाश्ये स्पष्टत्वे । यथा । प्रादुरासीत् । "आविर्बभूव ।" ओं एवं परमं त्रयं मते अंगीकारे । "यथा । ओमित्युक्तवतोऽथ शार्ङ्गिणः । एवं यदाह भगवान् । परममित्युक्त्वा ।" ओमित्यनुमते प्रोक्तं प्रवणे चाप्युपक्रमे इति विश्वः । एवं प्रकारोपमयोरंगीकारेऽवधारण इति च ॥ १२ ॥ समंततः परितः सर्वतः विष्वक् चत्वारि सर्वत इत्यर्थे । "समंततो वर्षति मेघः । आयांति परितः श्रियः । सर्वतो वाति पवनः । विष्वक् पतंति किरणाः ।" अकामानुमतौ अनिच्छयानुमतौ काममित्येकम् । "त्वं हनिष्यसि चेत्कामम् । कामं कर्णांतविश्रांते विशाले तस्य लोचने । कामं प्रकामेऽनुमतावसूयानुगमेऽपि चेति हैमविश्वप्रकाशौ ।" असूयापूर्वकस्वीकारे अस्त्वित्येकम् । यथा । तथाविधस्तावदशेषमस्तु नः ।" चकारात्काममित्यपि । "अस्तु स्यादभ्यनुज्ञानेऽसूयांगीकारयोरपीति मेदिनी" ॥ १३ ॥ नन्वित्येकं विरोधोक्तौ । "यथा ननु

ननु च स्याद्विरोधोक्तौ कच्चित्कामप्रवेदने ॥
निःषमं दुःषमं गर्ह्ये यथास्वं तु यथायथम् ॥ १४ ॥
मृषा मिथ्या च वितथे यथार्थं तु यथातथम् ॥
स्युरेवं तु पुनर्वैवेत्यवधारणवाचकाः ॥ १५ ॥
प्रागतीतार्थकं नूनमवश्यं निश्चये द्वयम्
संवद्वर्षेऽवरे त्वर्वागामेवं स्वयमात्मना ॥ १६ ॥
अल्पे नीचैर्महत्युच्चैः प्रायो भूम्न्यद्रुते शनैः ॥
सना नित्ये बहिर्बाह्ये स्मातीतेऽस्तमदर्शने ॥ १७ ॥

एवं मन्यसे तर्हि किमपि न स्यात् । ” कच्चिदित्येकं कामप्रवेदने इष्टपरिप्रश्ने । इच्छाया आख्याने वा । “ यथा कच्चिज्जीवति मे माता । निःषमम् दुःषमम् द्वे निंद्ये । यथा । निःषमं वक्ति मे मूर्खः । दुःषमं वर्तते वधूः । ” यथास्वं यथायथं द्वे यथायोग्यमित्यर्थे । “ यथास्वमाश्रमे च के । यथायथं फलायंते ” ॥ १४ ॥ मृषा मिथ्या द्वे वितथे असत्ये । “ उच्छ्रायसौंदर्यगुणा मृषोद्याः । मिथ्योक्तं त्वया । ” यथार्थ यथातथं द्वयं सत्ये । “ यथा । यथार्थमुक्तं नान्यत् । गुरुर्यथातथं वक्ति । तथाशब्दस्तथशब्दो वा सत्यार्थः । ” एवं तु पुनः वै वा पंच निश्चयार्थकाः स्युः । “ यथा । एवमेव यथा प्राह । रावणं तु दुरात्मानमवधीद्राघवः प्रभुः । ” पुनर्व्यासो वै धर्मज्ञः । वैवेत्यत्र वा एवेति वा छेदः ॥ १५ ॥ प्रागित्येकं अतीतार्थकम् । यथा प्राक्कर्म । नूनं अवश्यं द्वयं निश्चिते । नूनं शरणं प्रपन्ना । “ अवश्यं यातारश्चिरतरमुषित्वापि विषयाः । ” नूनं निश्चिततर्कयोरिति विश्वः । संवदित्येकं वर्षे । यथा प्रभवाख्या संवत् । अर्वागित्येकं अवरे । “कुले ऋतुत्रयादर्वाक् मंडनान्न तु मुंडनम् । ” आं एवं द्वयं अंगीकारे । यथा आं कुर्मः । “ एवं कुर्मः । ” स्वयमित्येकं आत्मनेत्यर्थे ॥ १६ ॥ नीचैरित्येकमल्पे । “ तथापि नीचैर्विनयाददृश्यत । ” उच्चैरित्येकं महति । “यथा । शृंगारमुच्चैर्गिरेरिदम् । प्राय इति भूम्नि बाहुल्ये । यथा । प्रायो नववधूः कांतम् । शनैरिति अद्रुते मांद्ये । यथा । शनैर्याति पिपीलिका । सनेत्येकं नित्ये । यथा सनातनः । बहिरिति बाह्ये । “ यथा निष्कासितो बहिर्ग्रामात् । ” स्मेत्यतीते । यथा वक्ति स्म व्यासः । अस्तमिति दर्शनाभावे । यथा । सायमस्तमितो रविः ॥ १७ ॥ अस्तीति सत्त्वे । यथा । अस्ति परलोक इति मतिर्यस्य स आस्तिकः । “रुषो-

अस्ति सत्त्वे रुषोक्तावु ऊं प्रश्नेऽनुनये त्वयि ॥
हुं तर्के स्यादुषा रात्रेरवसाने नमो नतौ ॥ १८ ॥
पुनरर्थेऽग निंदायां दुष्ठु सुष्ठु प्रशंसने ॥ (१)
सायं साये प्रगे प्रातः प्रभाते निकषांऽतिके ॥ १९ ॥
परुत्परार्यैषमोऽब्दे पूर्वे पूर्वतरे यति ॥

क्तौ कोपेनोक्तौ उ । यथा । उ आगतः शत्रुः । उ संबोधनरोषोक्त्योरनुकंपानियोगयोः । पदपूरणे च पादपूरणेऽपि च दृश्यत इति मेदनी ।" ऊमिति प्रश्ने । ऊं गच्छसि बहिर्धव । ह्रस्वपाठे उमित्यपि । रुषोक्तावूं उं प्रश्ने इति पाठांतरम् । हूं प्रश्ने इत्यपि पाठः । अयीत्यनुनये सांत्वने । " यथा । अयि क्रियार्थं सुलभं समित्कुशम् । अयि वद राघव तथ्यम् ।" हुमिति तर्के । "स्याच्चेत्किं हुं प्रपद्यते ।" उषेति रात्रेरवसाने । यथा । उषातनो वायुः । नमः प्रणामे । " नमो ब्रह्मण्यदेवाय " ॥ १८ ॥ अंगेति पुनरर्थे । यथा । मूर्खोऽपि नावमन्यते किमंग विद्वान् । किं पुनरित्यर्थः । दुष्ठु निंदयाम् । यथा । दुष्ठु खलत्वम् । सुष्ठु प्रशंसने । यथा सुष्ठु काव्यम् । सायमिति साये दिनांते । यथा । सायं संध्यामुपासिष्ये । प्रगे प्रातः द्वे प्रभाते । "यथा । प्रगे नृपाणामथ तोरणाद्बहिः । यः पठेत्प्रातरुत्थाय ।" निकषेति समीपार्थे ॥ १९ ॥ पूर्वेऽब्दे गते वर्षे परुदित्येकम् । पूर्वतरे गतवर्षात्पूर्ववर्षे परारीत्येकम् । याति वर्तमानेऽब्दे ऐषम इत्येकम् । "त्रयाणां यथा । परारि गतः कांतः । परुदागत ऐषमोऽपि नागतः ।" यतीति शत्रंतस्येणः सप्तम्या रूपम् । अत्राह्नि अस्मिन्नहनीत्यर्थे अद्यशब्दः" । " यथा । अद्य गंतुं न शक्नोमि ।" अथ पूर्वेऽह्नीत्यादिशब्देन उत्तरेऽह्नीत्यादिषट्कस्य ग्रहणम् । " पूर्वेऽह्नीत्याद्यर्थे पूर्वादिशब्देभ्य एद्युस्प्रत्यये पूर्वेद्युरित्यादयः सप्त शब्दा भवंति । क्रमेण यथा । पूर्वस्मिन्नहनीत्यर्थे पूर्वेद्युः । पूर्वेद्युरिष्यते प्रातः पूर्वेद्युः पूर्ववासर इति रुद्रः ।" उत्तरस्मिन्नहनि उत्तरेद्युः । " नांदीमुखादुत्तरेद्युर्विवाहः परिकीर्तितः ।" अपरस्मिन्नहनि अपरेद्युः । "आगतानपरेद्युस्तान् ।" अधरस्मिन्नहनि अधरेद्युः । " अधरेद्युः प्रसूता सा । अधरस्तु पुमानोष्ठे हीनेऽनूर्ध्वे च वाच्यवत् ।" अन्यस्मिन्नहनि अन्येद्युः । " अन्येद्युरात्मानुचरस्य भावम् ।" अन्यतरस्मिन्नहनि अन्यतरेद्युः । "अन्यतरेद्युः पितरं द्रक्ष्यसि ।"

१ अत्र 'अमानुगुण्ये ....' इति पद्यमधिकं तालपत्रपुस्तकेऽस्ति ॥

अद्यात्राह्न्यथ पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात् ॥ २० ॥
तथाऽधरान्यान्यतरेतरात्पूर्वेद्युरादयः ॥
उभयद्युश्चोभयेद्युः परे त्वह्नि परेद्यवि ॥ २१ ॥
ह्यो गतेऽनागतेऽह्नि श्वः परश्वस्तु परेऽहनि ॥
तदा तदानीं युगपदेकदा सर्वदा सदा ॥ २२ ॥
एतर्हि संप्रतीदानीमधुना सांप्रतं तथा ॥
दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादयः ॥ २३ ॥
॥ इत्यव्ययवर्गः ॥ ४ ॥

---

इतरस्मिन्नहनीतरेद्युः । कष्टदिनादितरेद्युः प्रियो द्रष्टव्यः" ॥ २० ॥ उभयद्युः उभयेद्युः द्वे उभयस्मिन्नहनीत्यर्थे । द्युश्चोभयात् वक्तव्य इति वार्तिकेनोभयशब्दात् द्युः प्रत्ययः । चकारात् एद्युः प्रत्ययश्च । "उभयद्युरुपोषणम् ।" परेद्यवीत्येकं परेऽहनि । "मित्रं द्रष्टुं परेद्यवि" ॥ २१ ॥ ह्य इत्येकं गतेऽहनि । "ह्यः सर्वमभवत्कार्यम् ।" श्व इत्येकमनागते आगामिन्यहनि । ततःपरेऽहनि परश्व इत्येकम् । "श्वः परश्वश्च यथा । अद्य श्वो वा परश्वो वा सर्वं कर्म भविष्यति । परश्वस्तत्परेऽहनीति पाठांतरम् ।" तदा तदानीं द्वे तस्मिन्काल इत्यर्थे । "यथा । तदा चक्षुष्मतां प्रीतिः । यदा स्यात्प्रियया संगस्तदानीमेव मे सुखम् ।" युगपत् । एकदा एकस्मिन्काल इत्यर्थे । "यथा । शत्रुमित्रोदासीना युगपदाहूताः । गवां शतमेकदा दत्तम् ।" सर्वदा सदा द्वे सर्वस्मिन्काले इत्यर्थे । यथा । "सर्वदा सर्वदोऽसीति । याचते याचकः सदा" ॥ २२ ॥ एतर्हि संप्रति इदानीं अधुना सांप्रतं पंचकमस्मिन् काल इत्यर्थे । "यथा । एतर्हि क्रियते कार्यम् । संप्रत्यसौ गृहं याति । इदानीमस्मि संवृत्तः । बलावलेपादधुना । तत्रास्ते सांप्रतं मुनिः ।" तथेति समुच्चये । पूर्वादौ दिशि पूर्वादौ देशे पूर्वादौ काले वा प्रागादयः स्युः । "दिशि प्राग्दिगित्यादि । देशे प्राग्देश इत्यादि । काले प्राक्काल इत्यादि ॥" पूर्वादौ इत्यादिशब्देनोत्तरपश्चिमदक्षिणाधरोर्ध्वादीनां ग्रहणम् । प्रत्यगादय इत्यादिशब्देन त्ववागित्यादिग्रहः । "उत्तरात् अधरात् दक्षिणात् उत्तरेण अधरेण दक्षिणेन दक्षिणा दक्षिणाहि दक्षिणतः उत्तरतश्च संगृह्यंते ।" ऊर्ध्वे तूपरि उपरिष्टादिति ॥ २३ ॥ इत्यव्ययवर्गः ॥ ४ ॥ अथ लिंगसंग्रहवर्गमाह ॥ सलिंगशास्त्रैः

सलिंगशास्त्रैः सन्नादिकृत्तद्धितसमासजैः ॥
अनुक्तैः संग्रहे लिंगं संकीर्णवदिहोन्नयेत् ॥ १ ॥
लिंगशेषविधिर्व्यापी विशेषैर्यद्यबाधितः ॥
स्त्रियामीदूद्विरामैकाच् सयोनिप्राणिनाम च ॥ २ ॥
नाम विद्युन्निशावल्लीवीणादिग्भूनदीह्रियाम् ॥

पाणिन्याद्युक्तलिंगानुशासनसहितैः सन्नादिप्रत्ययजैश्चिकीर्षादिशब्दैः कृज्जैः श्वपाकादिभिः तद्धितप्रत्ययजैः अणाद्यंतैः समासजैरदंतोत्तरपदोद्विगुरित्यादिनोक्तैः बाहुल्येन पूर्वमनुक्तैः शब्दैरयं संग्रहः क्रियत इति शेषः । इहास्मिन्संग्रहवर्गे लिंगमुन्नयेदूहेत् । कथमित्याकांक्षायां संकीर्णवदिति । यथा संकीर्णवर्गे प्रकृत्यादिभिरुन्नेयं तथात्राप्युन्नयेत् । तत्र प्रकृत्यर्थेन यथा । अर्धर्चाः पुंसि चेति । प्रत्ययार्थेन यथा । स्त्रियां क्तिन् । प्रकृतिप्रत्ययार्थाद्यैरित्याद्यशब्दात्क्रियाविशेषणानां नपुंसकत्वं एकत्वं च यथा । शोभनं पचतीत्यादि ॥ १ ॥ सन्नादिकृत्तद्धितसमासजविषयं पूर्वोक्तशब्दलिंगादन्यलिंगं लिंगशेषः तस्य विधिः व्यापी स्वविषयस्य व्यापको भवति । प्रागुक्तैरिहोक्तैश्च विशेषविधिभिः न बाधितः स्यात् तर्ह्येव व्यापी भवेदित्यर्थः । एतेनास्य लिंगविशेषविधेरुत्सर्गभूतस्य स्वर्गादिवर्गा अपवादा वेदितव्याः । तत्र प्रागुक्तानां विशेषाणां पुनरुक्तिदोषप्रसंगाद्विस्तरभयाच्च न पुनरिह विधानम् । तथा हि । स्वर्गपर्याय इह पुंसि वक्ष्यते । तस्य द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपमिति पूर्वोक्तमपवादः । नीप्रभृतीनां तु कृतः कर्तरीत्यादिना वक्ष्येते । यद्यपि पूर्वलिंगमुक्तं तथाप्यप्राप्तप्रापणार्थतया लिंगानुशासनमिहापि प्रधानमेव । स्त्रियामित्यधिकारोऽयं मसीशब्दपर्यंतं ज्ञेयः । ईदूतौ ईकारोकारौ विरामौ अवसानस्थौ यस्य तदीदूद्विरामं तच्च तदेकाच्च ईदूद्विरामैकाच् । ईदंतमूदंतं वा यदेकस्वरं शब्दरूपं तत्स्त्रियामित्यर्थः । यथा । धीः श्रीः भूः भ्रूः । नयतीति नीरित्यादौ कृतः कर्तरीति बाधितत्वाद्वाच्यलिंगत्वम् । योनिर्भगं तत्सहितानां प्राणिनां नाम स्त्रियाम् । यथा । माता दुहिता धेनुरित्यादि । दारशब्दादौ तु दाराः पुंभूम्नीति बाधकं प्रागुक्तम् । कलत्रशब्दस्य कलत्रं श्रोणिभार्ययोरिति क्लीबपाठो बाधकः । एवमुन्नेयमन्यत्रापि ॥ २ ॥ विद्युदादिह्रीपर्यंतानां अष्टानां यन्नाम तत्स्त्रियाम् । यथा । विद्युत् तडित् रात्रिः रजनी वल्ली व्रततिः वीरुत् वीणा विपंचीत्यादि । "वीणादिग्भूनदीधियामिति पाठः क्वचित् ।" अदंतैर्मूलादिशब्दैर्य एकार्थः समाहा-

अदंतैर्द्विगुरेकार्थो न स पात्रयुगादिभिः ॥ ३ ॥
तल् वृंदे येनिकट्यत्रा वैरमैथुनिकादिवुन् ॥
स्त्रीभावादावनिक्तिण्णवुल्णच्ण्वुच्क्यब्युजिञाङ्निशाः ॥४

रार्थो द्विगुसमासः स स्त्रियां स्यात् । यथा । पंचानां मूलानां समाहारः पंचमूली । एवं त्रिलोकी षडध्यायीत्यादि । अदंतैरिति किम् । पंचानां कुमारीणां समाहारः पंचकुमारि । पंचराजमित्यादौ टचि अदंतत्वे सत्यपि पात्रादित्वान्नपुंसकत्वमित्येके । एकार्थ इति किम् । पंचसु कपालेषु संस्कृतः पुरोडाशः पंचकपालः । न स इति । पात्रयुगाद्युत्तरपदैः अदंतैः एकार्थो द्विगुः स्त्रियां न स्यात् । यथा । पंचपात्रम् । चतुर्युगम् । त्रिभुवनम् ॥ ३ ॥ तल् प्रत्ययः स्त्रियां स तु भावाद्यर्थे विहितः । तत्र भावे यथा । शुक्लता । कर्मणि ब्राह्मणता । समूहे ग्रामता । स्वार्थे देवता । वृंद इति । वृंदे समूहे य इनि कट्य त्र एते चत्वारः प्रत्ययाः स्त्रियाम् । यथा । पाशादिभ्यो यः । पाशानां समूहः पाश्या । वात्या । खलादिभ्य इनिः । खलिनी पद्मिनी । रथादिभ्यः कट्यच् । रथकट्या । एवं गोत्रा । वृंदे किम् । मुखे भवो मुख्यः । दंडोऽस्त्यस्य दंडी । वैरेति । मिथुनस्य कर्म मैथुनिका । वैरमैथुनादौ च यो वुन्प्रत्ययः स स्त्रियाम् । द्वंद्वाद्वुन्वैरमैथुनिकयोरिति पाणिनिसूत्रात् । तत्र वैरे विरोधार्थे यथा । अश्वमहिषिका । अश्वमहिषस्येदं वैरमित्यर्थः । एवं काकोलूकिका । मैथुनिकायां यथा । अत्रिभरद्वाजिका । अत्रिभरद्वाजयोरियं मैथुनिका । विवाहरूपसंबंध इत्यर्थः । एवं कुत्सश्च कुशिका च तयोर्मैथुनिका कुत्सकुशिकिका । "वुन्ग्रहणं वुञ उपलक्षणम् । यथा । काशिका गार्गिकया श्लाघते । क्वचित् वैरमैथुनिकादिवुरिति पाठः ।" आदिना वीप्सादौ वुनो ग्रहणम् । स्त्रियां भावादिः स्त्रीभावादिस्तस्मिन् । स्त्रियामित्यधिकृत्य भावादौ ये विहिताः प्रत्यया अनिक्तिन्नादयस्ते स्त्रियां स्युरित्यर्थः । अनिर्यथा । आक्रोशे नञ्यनिः । अकरणिः अजीवनिः । क्तिन् यथा । कृतिः गतिः । ण्वुल् यथा । प्रच्छर्दिका प्रवाहिका आसिका । णच् यथा । व्यावक्रोशी । ण्वुच् यथा । शायिका इक्षुभक्षिका । क्यप् यथा । व्रज्या इज्या । "स्त्रीभावादौ किम् । वदः सुपि क्यप् च । मृषोद्यं ब्रह्मभूयम् ।" युच् यथा । कारणा आसना । इञ् यथा । वापिः वासिः । कां कारिमकार्षीः । इञ उपलक्षणार्थत्वादिण् इक् च । यथा । आजिः कृषिः । अङ् यथा । पचा त्रपा भिदा । निर्यथा । ग्लानिः म्लानिः हानिः । शप्रत्ययो यथा । क्रिया इच्छा ॥ ४ ॥

उणादिषु निरूरीश्च ङ्याबूङंतं चलं स्थिरम् ॥
तत्क्रीडायां प्रहरणं चेन्मौष्टा पाल्लवा ण दिक् ॥ ५ ॥
घञो ञः सा क्रियाऽस्यां चेद्दांडपाता हि फाल्गुनी ॥
श्यैनंपाता च मृगया तैलंपाता स्वधेति दिक् ॥ ६ ॥
स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षाऽपचये यदि ॥

उणादिषु ये निः ऊः ईः एते त्रयः स्त्रियां स्युः । तत्र न्यंतो यथा । श्रेणिः "श्रोणिः द्रोणिः । उणादिष्वनिरिति पाठे अनिर्यथा । धरणिः धमनिः सरणिः ।" ऊदंतो यथा । चमूः कर्षूः । ईदंतो यथा । तंत्रीः । "तरीः ।" ङ्यंतं आबंतं ऊङंतं च यच्चलं जंगमं स्थिरं स्थावरं वा तत् स्त्रियां स्यात् । जंगमं यथा । नारी शिवा ब्रह्मवधूः । स्थावरं यथा । कदली माला कर्कंधूः । तच्छब्देनात्र मुष्ट्यादिकं निर्दिश्यते । तेनायमर्थः । तन्मुष्ट्यादिकं प्रहरणं यदि क्रीडायां वर्तते तर्हि तस्मिन्नर्थे विहितो णप्रत्ययः स्त्रियाम् । तदस्यां प्रहरणमिति क्रीडायां ण इति सूत्रात् । दिगित्यनेनोक्तोदाहरणोद्देशः । तेन दांडा मौसलेति चोदाहर्तव्यम् । मुष्टिः प्रहरणमस्यां क्रीडायां मौष्टा । पाल्लवः प्रहरणमस्यां क्रीडायां पाल्लवा ॥ ५ ॥ सा घञंतवाच्या । दंडपातादिक्रियाऽस्यां फाल्गुन्यादिकायामित्यर्थे घञंताद्विहितो यो ञप्रत्ययः स स्त्रियां स्यात् । घञः साऽस्यां क्रियेति ञ इति सूत्रात् । उदाहरति । दंडपातोऽस्यां फाल्गुन्यां दांडापाता फाल्गुनी । एवं श्येनपातोऽस्यां श्यैनंपाता मृगया । तिलपातोऽस्यां स्वधाक्रियायां तैलंपाता । श्येनतिलस्येति मुम् । पितृदाने स्वधामतमित्यमरमाला । वररुचिना तु स्वधा क्रिया प्रवेणीति स्त्रीलिंगतोक्ता । इतिशब्देन मुसलपातोऽस्यां मौसलपाता भूमिरित्यादिसिद्धिः । क्वचिद्देशे फाल्गुनपौर्णमास्यां दंडपातेन क्रीडा भवतीति । दिगित्यनेन दांडपातादिकं उदाहरणमिति सूचितम् ॥ ६ ॥ यदि अपचयेऽल्पत्वे विवक्षा वक्तुमिच्छा स्यात्तर्हि मृणाल्यादयः स्त्रीलिंगाः स्युः । यथा । अल्पं मृणालं मृणाली । आदिशब्दाद्यथा । ह्रस्वो वंशो वंशी । गौरादित्वात् ङीष् । एवं कुंभीप्रणालीछत्रीपटीतटीमठीत्यादयः । ह्रस्वार्थे कन्प्रत्ययः स्त्रियाम् । यथा पेटिका । काचिदिति किम् । अल्पो वृक्षो वृक्षक इत्यादि न स्त्रियाम् । अथ ङ्याबूङंतमित्यादिनोक्तलिंगानामपि केषां चिन्नाम्नां सुखेन लिंगज्ञानाय पृथक् पाठं कांतादिक्रमेणाह । लंकेति । लंका राक्षसपुरी । शेफालिका पुष्पभेदः वृक्षभेदश्च । "स तु

लंका शेफालिका टीका धातकी पंजिकाऽऽढकी ॥ ७ ॥
सिध्रका सारिका हिक्का प्राचिकोल्का पिपीलिका ॥
तिंदुकी कणिका भंगिः सुरंगासूचिमाढयः ॥ ८ ॥
पिच्छावितंडाकाकिण्यश्चूर्णिः शाणी द्रुणी दरत् ॥
सातिः कंथा तथाऽऽसंदी नाभी राजसभाऽपि च ॥ ९ ॥

निर्गुंडी इति प्रसिद्धः ।" टीका विषमपदव्याख्या । धातकी वृक्षभेदः "धायटी इति प्रसिद्धा ।" पंजिका निःशेषपदव्याख्या । आढकी तुवरी "तूर इति प्रसिद्धा" ॥ ७ ॥ सिध्रका वृक्षभेदः । सारिका पक्षिभेदः "साळुंकी इति प्रसिद्धा ।" हिक्का स्वरभेदः "ऊर्ध्ववातप्रवृत्तौ शब्दविशेषः उचकी इति प्रसिद्धः ।" प्राचिका वनमक्षिका । "पक्षिभेद इति स्वामी ।" उल्का तेजःपुंजः । पिपीलिका कीटभेदः मुंगी इति प्रसिद्धा । शनैर्याति पिपीलिक इति पुंस्त्वमपीति स्वामी ।" तिंदुकी वृक्षभेदः "टेंभुरणी इति प्रसिद्धा ।" कणिका परमाणुः । भंगिः कौटिल्यभेदः । "विच्छित्तिर्वा । व्याजच्छलनिभे भंगिर्वैदर्भीतनमीलिकेति रभसः ।" सुरंगा विवरभेदः "सुरंग इति ख्यातः ।" सूचिर्व्यधनी । स्त्री सूचिर्नृत्तभेदे च व्यधनीशिखयोरपीति रत्नकोशः । "माढिः पत्रशिरा ।" माढिर्दैन्यं पत्रशिरेति हैमः ॥ ८ ॥ पिच्छा । "शाल्मलिनिर्यासः भक्तादिमंडश्च । पिच्छा शाल्मलिवेष्टके । पंक्तिपूगच्छटाकोशमंडेष्वश्वपदामये । मोचायां पिच्छल इति हैमः ।" वितंडा वादभेदः । काकिणी पणचतुर्थांशः । "काकिणी पणतुर्यांशे मानदंडे च दृश्यते । कृष्णलैकवराटयोः स्यादुन्मानस्यांशकेऽपि चेति मेदिनी । रभसस्तु नांतेष्वप्याह । पणोदमानदंडानां तुर्यांशेऽपि च काकिनीति । आढकस्य पंचाशत्तमो भाग उदमानम् । उक्तं च गणितावल्याम् । कुल्या स्यादष्टभिर्द्रोणैर्द्रोणपादेन चाढकः । अतोऽर्धशतिको भाग उदमानमुदाहृतमिति । चूर्णिः चूर्णिका । शाणी शणपटविशेषः । "निकष इति स्वामी ।" द्रुणी कर्णजलौका । "द्रुणी कूर्म्यां जलद्रोण्यामिति हैमः ।" दरत् म्लेच्छजातिः । सातिर्दानावसानयोः । कंथा प्रावरणांतरम् । "कंथा मृन्मयभित्तौ च तथा प्रावरणांतर इति मेदिनी ।" आसंदी आसनभेदः "वेत्रासनमिति प्रसिद्धम् ।" अंगविशेषो नाभिः । राज्ञां सभेति तत्पुरुषः । सभाराजेत्यत्र राजपर्यायस्यैवेष्यते इत्युक्तम् । तेन राजशब्दपूर्वकसभांततत्पुरुषे क्लीबत्वस्य निषेधात स्त्रीत्वम् ॥ ९ ॥ झल्लरी वाद्यभेदः । "झलरी झल्लरी

झल्लरी चर्चरी पारी होरा लट्वा च सिध्मला ॥
लाक्षा लिक्षा च गंडूषा गृध्रसी चमसी मसी ॥१०॥

॥ इति स्त्रीलिंगसंग्रहः ॥

पुंस्त्वे सभेदानुचराः सपर्यायाः सुरासुराः ॥

च द्वे हुडुके वालचक्रक इति मेदिनी ।" चर्चरी करशब्दः हर्षक्रीडा वा । "चर्चरी गीतभेदे च केशभित्करशब्दयोरिति कोशांतरम् ।" पारी हस्तिपादरज्जुः । "पारी पूरापरागयोः । पाभ्यां कर्पूरिकायां च पादबंधे च हस्तिनामिति हैमः ।" होरा लग्नार्धम् । "होरा तु लग्ने राश्यर्द्धे शास्त्ररेखाप्रभेदयोरिति हैमः ।" लट्वा ग्रामचटकः । "लट्वा करंजभेदे स्यात्फले वाद्ये खगांतर इति मेदिनी ।" सिध्मला मत्स्यविकृताविति मेदिनी । सिध्मला शुष्कमीने स्त्री त्रिलिंग्यां तु किलासिनीति त्रिकांडशेषः ।" लाक्षा जतु । लिक्षा यूकांडम् । गंडूषा जलादिना मुखपूरणम् । "पुंस्यपि । गंडूषो मुखपूर्तौ स्याद्गजहस्तांगुलावपि । प्रसृत्या प्रमितेऽपि स्यादिति हैमः । उन्नतनाभिस्तु गंडूषा नापि मुखपूर्तिरिति बोपालितः । गृध्रसी" वातरोगभेदः । स तु ऊरुसंधौ भवति । चमसी यज्ञपात्रभेदः । "मणीतेति प्रसिद्धा ।" माषपिष्टपोलिकाविशेष इति वैद्यकग्रंथे । चमसो यज्ञपात्रस्य भेदेऽस्त्री पिष्टके स्त्रियामिति मेदिनी । मसी कज्जलम् । "मेला मसी जलं पत्रांजनं च स्यान्मसिर्द्वयोरिति त्रिकांडशेषः" ॥ १० ॥ इति स्त्रीलिंगसंग्रहः ॥ अथ पुंलिंगसंग्रहः ॥ पुंस्त्वे इति पतद्ग्रहशब्दपर्यंतमधिकारः । भेदास्तुषितसाध्यादयः । अनुचराः सुनंदादयः तैः सहिताः सुरासुराः देवदैत्याः पर्यायैः सह पुंसि । सुरपर्याया यथा । अमरा निर्जरा देवा मरुत इत्यादयः । तद्भेदा यथा । तुषिताः साध्याः । इंद्रो मरुत्वान्मघवा । सूरसूर्यार्यमा । हाहा हूहूः । तुंबुरुरित्यादिः । अनुचरा यथा । विष्णोरनुचरा जयविजयप्रभृतयः । रुद्रानुचरा नंदिकेश्वरादयः । एवं असुरपर्याया दैत्या दानवा इत्यादयः । तद्भेदा बलिनमुच्यादयः । असुरानुचराः कूश्मांडमुंडादयः । एवमुन्नेयं सर्वत्र । एतेषामपि दैवतानि पुंसि वा देवताः स्त्रियामित्यादिबाधकं स्मारयिष्यति । अबाधिता इति वक्ष्यमाणेन । स्वर्गादयश्चोनविंशतिः सभेदाः सपर्यायाश्च पुंसि स्युः । स्वर्गपर्यायो यथा । स्वर्गो नाकस्त्रिदिव इत्यादिः । द्योदिवौ द्वे स्त्रियां क्लीबे

स्वर्गयागाद्रिमेघाब्धिद्रुकालासिशरारयः ॥ ११ ॥
करगंडोष्ठदोर्दंतकंठकेशनखस्तनाः ॥
अह्नाह्वांताः क्ष्वेडभेदा रात्रांताः प्रागसंख्यकाः ॥१२॥
श्रीवेष्टाद्याश्च निर्यासा असन्नन्ता अबाधिताः ॥

त्रिविष्टपमिति बाधकं बलवत्तरं तद्विना पुंस्त्वम् । यागो यज्ञः । मखः क्रतुः । तद्भेदा अग्निष्टोमादयः । इष्टयादेर्बाधितत्वं वक्ष्यति । अद्रिः गिरिः पर्वतः । तद्भेदा मेरुसह्यादयः । एषां मध्येऽपवादः चेदुक्तः शैलवर्गे । मेघो घन इत्यादिः पर्यायः । भेदः पुष्करावर्तादिः । अभ्रस्य तु अभ्रं मेघ इति क्लीबपाठो बाधकः । अब्धिः समुद्र इत्यादयः समुद्रपर्यायाः । क्षीरोदादिर्भेदः । द्रुर्वृक्षः । शाखीत्यादिः पर्यायः । वटादिर्भेदः । अत्रापि क्वचिद्रूपभेदादिना "पाटलाशिंशपादौ" अपवादा उक्ताः। कालो दिष्टः समयः । एवं पर्यायः। मासादयो भेदाः । असिः खड्गः । नंदकादयो भेदाः । "ईल्यादौ बाधः ।" शरो बाणः । भेदो नाराचादिः । इषुर्द्वयोरिति विशेषो दर्शितः । अरिः शत्रुः । भेद आततायादिः ॥ ११ ॥ करो राजग्राह्यभागो रश्मिः पाणिश्च । दीधित्यादीनां तु पुंस्त्वं बाधितम् । गंडः कपोलः । ओष्ठो दंतच्छदः । दशनवसनादि तु रूपभेदात् बाधितम् । दोः प्रवेष्टः । भुजबाहोस्तु द्वयोरिति विशेषः । दंतो रदः । दंतस्थाने दंड इत्यपि पाठः । कंठो गलः ।"समीपगलभेदेषु कंठं त्रिषु विदुर्बुधा इति शाश्वतः ।" केशः कचः । नखः कररुहः । नखोऽस्त्रीत्यादिना बाधितम् । स्तनः कुचः । एते यथासंभवं सभेदपर्यायाः पुंसि । अह्नः अह्वश्च एतदंताः पुंसि स्युः । यथा । अह्नः पूर्वं पूर्वाह्णः । "अह्नः अपरं अपराह्णः ।" द्वे अहनी समाहृते द्व्यहः । क्ष्वेडभेदा विषविशेषाः पुंस्त्वे स्युः । यथा । सौराष्ट्रिकः । अत्र गरलं विषं पुंसि क्लीबे च । काकोलं इत्यादि बाधितम् । रात्रांता इति समासांतस्यैकदेशानुकरणम् । एवमुत्तरत्रापि । रात्रशब्दोंऽते येषां ते यदि प्राक् असंख्यावाचकशब्दरहितास्तर्हि पुंसि । यथा । अहश्च रात्रिश्चाहोरात्रः सर्वरात्रः पूर्वरात्रः अपररात्रः । प्रागसंख्यका इति किम् । पंचरात्रम् । गणरात्रम् । पुण्यरात्रस्यार्धर्चादिपाठात् क्लीबत्वं च ॥ १२ ॥ श्रीवेष्टादयो ये निर्यासाः द्रवसारवाचकास्ते पुंसि स्युः । श्रीवेष्टः सरलः । "श्रीपिष्टः इति क्वचित्पाठः ।" आद्येन श्रीवासवृकधूपादयः । चकाराद्गुग्गुलुसिह्लकादयः । अस् च अन् तावंतौ येषां ते असन्नंताः

कशेरुजतुवस्तूनि हित्वा तुरुविरामकाः ॥ १३ ॥
कषणभमरोपांता यद्यदंता अमी अथ ॥
पथनयसटोपांता गोत्राख्याश्चरणाह्वयाः ॥ १४ ॥

अच्कमसिसुसन्नंतामित्यादिना वक्ष्यमाणेन अप्सरआदीनां पूर्वोक्तेन च बाधकेनाबाधिताश्चेत्पुंसि स्युस्तत्र असंता यथा । अंगिराः वेधाः चंद्रमाः । अन्नंता यथा । कृष्णवर्त्मा मघवा । अबाधिता इति किम् । इदं वयः । इदं लोम । तुश्च रुश्च तुरू तौ विरामे येषां ते तुरुविरामकाः । कशेरुजतुवस्तूनि हित्वा तुशब्दांताश्च रुशब्दांताश्च पुंसि स्युरित्यर्थः । यथा । हेतुः सेतुः धातुः मंतुस्तंतुरित्यादि । कुरुः मेरुः किशारुरित्यादि । कसेरुर्वाद्युपलक्षणं दारुश्मश्रुप्रभृतीनाम् । तत्र कसेरु अस्थिविशेषः । तृणविशेषो वा । जतु लाक्षा ॥ १३ ॥ कषणादयः षड्वर्णा उपांते अंत्यसमीपे येषां ते तथा । यदीति । यदि एते कादिवर्णषट्कोपांता अदंताः स्युस्तर्हि पुंसि भवंति । यथा । अंकः लोकः स्फटिकः । शुल्कवल्कादि तु बाधितं पूर्वम् । ओषप्लोषमाषप्लक्षादयः षोपांताः । वर्षादयस्तु पूर्वं बाधिताः । पाषाणगुणकिरणादयो णोपांताः । विषाणादि बाधितम् । कौस्तुभदर्भशलभादिर्भोपांतः । कुसुंभादि बाधितम् । होमग्रामगुल्मव्यामादयो मोपांताः । पद्मादेर्वा पुंसीत्यादिना बाधितत्वम् । क्षीरसीकरसीरप्रभृतिः रोपांतः । अजिरादेर्बाधः । पकारादिवर्णषट्कोपांता अबाधिताश्चेत्पुंसि स्युः । अत्र यद्यदंता इति पूर्वोक्तं न संबध्यते । अथादित्वात् । पकारोपांता यथा । यूपबाष्पकलापादयः । कुतपादिर्बाधितः । थकारोपांता वेपथुरोमंथादयः । नोपांता इनधनभान्वादयः । वनादिस्तु बाधितः । योपांता आयव्ययजायुतंतुवायादयः । मृगयादिस्तु बाधितः । सोपांता रसहासादयः । बिसादिर्बाधितः । टोपांताः पटादयः । किरीटादेर्बाधकमुक्तम् । गोत्रेति । गोत्रं वंशः तस्मिन्नाख्या संज्ञा येषां ते गोत्राख्या ऋषिसंज्ञकाः गोत्रस्यादिपुरुषाः ये प्रवराध्यायपठिताः येऽप्यन्ये अपत्यप्रत्ययं विना गोत्रवाचित्वेन लोके प्रसिद्धास्ते पुंसि स्युः । यथा । भरद्वाजः गोत्रमस्माकम् । एवं कश्यपवत्सप्रभृतयः । चरणस्य वेदशाखाया आह्वयाः संज्ञाः पुंसि स्युः । यथा । कठः बह्वृच इत्यादि ॥ १४ ॥ नाम्नि संज्ञायां अकर्तरि च कारके भावमात्रे च विहितास्ते घञादयः सप्त प्रत्ययाः पुंसि स्युः । भावे चेति चकारादसंज्ञायां च घञ् गृहीतः । घञंता यथा । प्रास्यत इति प्रासः । विदंति अनेन वेदः । प्रपतत्यस्मात्प्रपातः । भावः माघः पाकः सागः । अच् यथा । जयः चयः नयः ।

नाम्न्यकर्तरि भावे च घञजबूनङ्णघाथुचः ॥
ल्युः कर्तरीमनिज्भावे को घोः किः प्रादितोऽन्यतः॥१५॥
द्वंद्वेऽश्ववडवावश्ववडवा न समाहृते ॥
कांतः सूर्येंदुपर्यायपूर्वोऽयःपूर्वकोऽपि च ॥ १६ ॥
वटकश्चानुवाकश्च रल्लकश्च कुडंगकः ॥

अप् यथा । करः गरः लवः प्लवः । नङ् यथा । यज्ञः प्रश्नः । "याच्ञेत्यत्र तु पुंस्त्वं बाधितम् । नङ उपलक्षणार्थत्वात् । स्वपो नन् । स्वप्नः । स्वप्नः संवेश इत्यपीति वा पुंस्त्वसिद्धिर्बोध्या ।" णप्रत्ययो यथा । न्यादः । घप्रत्ययो यथा । उरश्छदः । अथुच् यथा । वेपथुः । ल्युरिति । कर्तरि नंद्यादिल्युः पुंसि स्यात् । यथा । नंदनः रमणः मधुसूदनः । भावे पृथ्वादिभ्यो य इमनिच् स पुंसि स्यात् । यथा । पृथोर्भावः प्रथिमा महिमा । भाव इति किम् । वृणोतीति वरिमा पृथ्वी । अत्र भावे इति शब्दो देहलीदीपन्यायेन पूर्वत्र परत्र च संबध्यते । "भावे को यथा । आखूत्थः प्रस्थः ।" प्रादितः अन्यतश्च परो यो घुसंज्ञो धातुस्तस्माद्विहितः किप्रत्ययः पुंसि स्यात् । दापूदैपौ विना दारूपो धारूपश्च धातुर्घुसंज्ञकः । प्रादितो यथा । प्रधिः निधिः आदिः । अन्यतो यथा । जलधिः इषुधेस्तु द्वयोरिति बाधितत्वम् ॥ १५ ॥ द्वंद्वे समाहारादन्यत्र द्वंद्वसमासेऽश्ववडवौ पुंसि । स्वयमेवोदाहरति । अश्वाश्च वडवाश्चाश्ववडवाः । एवमश्ववडवान् । अश्ववडवैरित्यादिप्रयोगः । समाहारे त्वश्ववडवमिति क्लीबम् । सूर्यचंद्रपर्यायपूर्वकः कांतशब्दः पुंसि । यथा । सूर्यकांतः अर्ककांतः चंद्रकांतः इंदुकांतः सोमकांतः । अयोवाचकपूर्वकोऽपि कांतः पुंसि । यथा । अयस्कांतः लोहकांतः ॥ १६ ॥ इदानीं पुंलिंगविशेषपर्यंतमनुक्तानां कांतादिक्रममनतिक्रम्याह । वटकः पिष्टकभेदः । अनुवाको वेदावयवः । रल्लकः कंबलः । कुडंगको वृक्षलतागहनम् । "कुटंगक इत्यपि ।" पुंखो बाणावयवः । न्यूंखः सामवेदे निपातित ओंकारः । "न्युंख इति ह्रस्वोकारोऽपि । न्यूंखः सम्यक्मनोज्ञे च साम्नः षट्प्रवणेऽपि चेति मेदिनी ।" समुद्गः संपुटकः । विटो धूर्तः । "विटो द्वौ लवणे षिङ्गे मूषिके खदिरेऽपि चेति मेदिनी ।" पट्टः काष्ठादिरचित आसनविशेषः । "पट्टश्चतुष्पथे पीठे राजादेः शासनांतरे । व्रणादिबंधने पेषाश्मनीति हैमः ।" घटस्तुला । "घटो दिव्ये तुलायां स्याद्धटी चीरे च वासस इति मेदिनी ।" अंधकूपादयः स्पष्टाः ।

पुंखो न्यूंखः समुद्गश्च विटपट्टधटाः खटाः ॥ १७ ॥
कोट्टारघट्टहट्टाश्च पिंडगोंडपिचंडवत् ॥
गडुः करंडो लगुडो वरंडश्च किणो घुणः ॥ १८ ॥
दृतिसीमंतहरितो रोमंथोद्गीथबुद्बुदाः ॥
कासमर्दोऽर्बुदः कुंदः फेनस्तूपौ सयूपकौ ॥ १९ ॥

"खटस्तृणे कफे । टंकेऽधकूपे प्रहार इति हैमः"॥ १७ ॥ कोट्टो दुर्गपुरम् । अरघट्टः कूपभेदः । "अरैश्चक्रावयवसदृशैः काष्ठविशेषैर्घट्यते रच्यते सोऽरघट्टः । राहाट इति प्रसिद्ध इत्यन्ये ।" कस्यचिन्मते टकारांतेष्वपि भट्टग्राम इति न्यायेन रेफांतोऽपि कोट्टार इति व्यक्षरो निबद्धः । "कोट्टारो नगरे कूपे पुष्करिण्याश्च पाटक इति मेदिनी । घट्टः घाट इति प्रसिद्धः । हट्टः क्रयविक्रयस्थानम् । पिंडो मृदादिसंघातः । गोंडो नाभिः । गोंडः पामरजातौ च वृद्धनाभौ च संमत इति रुद्रः ।" पिचंड उदरम् । "पिचिंड इत्यपि । ह्रस्वे पिचिंड उदरे पशोरवयवे पुमानिति मेदिनी ।" पिचंडवत् गड्वादयोऽपि पुंसि स्युरिति वता निर्दिश्यते । गडुर्गलगंडः । "गडुः पृष्ठगुडे कुब्ज इति विश्वः ।" करंडो वंशादिकृतभांडभेदः । "करंडो मधुकोशासिकारंडेषु दलाढक इति हैमः ।" लगुडो वंशादिदंडः । वरंडो मुखरोगः । "वरंडो वदनव्यथा । अंतरावेदिसंघौ चेति हैमः ।" किणो मांसग्रंथिभेदः । स तु खनित्रदंडादिसंघर्षणात्करतलादौ स्पष्टः । "व्रणजं चिह्नं च किणः ।" घुणः काष्ठकृमिः । "घुणः स्यात्काष्ठवेधक इति रत्नकोशः ।" ॥ १८ ॥ दृतिः चर्मपुटकः । "दृतिश्चर्मपुटे मत्स्ये नेति मेदिनी ।" सीमंतः केशवेशः । हरित्पालाशवर्णः । "हरिद्दिशि स्त्रियां पुंसि हयवर्णविशेषयोः । अस्त्रियां स्यात्तृणे चेति मेदिनी ।" रोमंथः पशूनां चर्वितचर्वणम् । उद्गीथः सामभेदः । "उद्गीथः प्रवणः सामवेदध्वनिरित्यरुणः ।" बुद्बुदो जलविकारः । कासमर्दो गुल्मभेदः ।" अर्बुदो दशकोट्यः । अर्बुदो मांसकीले स्यात्पुरुषे दशकोटिष्विति मेदिनी ।" अर्दमिरिति पाठे अर्दनिरग्निः । कुंदः शिल्पभांडम् । "कुंदोऽच्युते निधौ । चक्रभ्रमौ च माघ्ये चेति हैमः ।" फेनो जलविकारः । स्तूपो वटकादिः । एतौ यूपश्च । "पूप इत्यपि" ॥ १९ ॥ आतपः सूर्यालोकः । क्षत्रिये नाभिः ।

आतपः क्षत्रिये नाभिः कुणपक्षुरकेदराः ॥
पूरक्षुरप्रचुक्राश्च गोलहिंगुलपुद्गलाः ॥ २० ॥
वेतालभल्लमल्लाश्च पुरोडाशोऽपि पट्टिशः ॥
कुल्माषो रभसश्चैव सकटाहः पतद्ग्रहः॥ २१ ॥

॥ इति पुंलिंगशेषः ॥

द्विहीनेऽन्यच्च खारण्यपर्णश्वभ्रहिमोदकम् ॥

क्षत्रियवाची नाभिशब्दः पुंसीत्यर्थः । कुणपः शवभेदः । "कुणपः पूतिगंधौ शवेऽपि चेति मेदिनी ।" क्षुरो वपनशस्त्रम् । क्षुरः स्याच्छेदनद्रव्ये कोकिलाक्षे च गोक्षुर इति मेदिनी । "केदरो व्यवहारपदार्थः । पूरो जलप्रवाहः पूरः स्यादंभसां वृद्धौ व्रणसंशुद्धिखाद्ययोरिति हैमः ।" क्षुरप्रो बाणभेदः । "खुरप्र इति कवर्गद्वितीयादिरपि ।" चुक्रः शाकभेदः । "चुक्रस्त्वम्लेऽम्लवेतस इति हैमः ।" गोलो वर्तुलपिंडः । हिंगुलो रागद्रव्यभेदः । क्लीबे चोक्तो वैश्यवर्गे । "हिंगुलो वर्णकद्रव्ये ना भंटाक्यां तु हिंगुलीति मेदिनी । हिंगुलुः स्यात्तु हिंगुलमिति मुकुटः" पुद्गलः आत्मा । पुद्गलः सुंदराकारे त्रिषु पुंस्यात्मदेहयोरिति मेदिनी" ॥ २० ॥ वेतालो भूताधिष्ठितशवः । भल्लः स्यात्पुंसि भल्लूक इति मेदिनी । मल्लो बाहुयुद्धकुशलः । पुरोडाशो हविर्भेदः । "पुरोडाशो हविर्भेदे चमस्यां पिष्टकस्य च । रसे सोमलतायाश्च हुतशेषे च कीर्तित इति विश्वः ।" पट्टिशोऽस्त्रभेदः "पट्टिस इति दंत्यसांत इति मुकुटः ।" कुल्माषोऽर्धस्विन्नो यवः कुत्सितमाषो वा । कुल्माषं कांजिके यावके पुमानिति मेदिनी । रभसः हर्षः । "रभसो हर्षवेगयोरिति विश्वः ।" सकटाहः कटाहसहितः कटाहशब्दश्च पुंसीत्यर्थः । कटाहो वटकादिपाकपात्रम् । "कटाहो घृततैलादिपाकपात्रेऽपि कर्परे । कटाहः कूर्मपृष्ठे च सूपे च महिषीशिशाविति विश्वः । कटाहः कूर्मकर्परे । द्वीपस्य च प्रभेदे चेति मेदिनी च ।" सनिष्ठीवतांबूलादिचर्वणनिक्षेपपात्रं पतद्ग्रहः ॥ २१ ॥ इति पुंलिंगशेषः ॥ द्विहीने द्वाभ्यां स्त्रीपुंसाभ्यां हीने नपुंसके । अधिकारोऽयमाबाहिकात् । श्लोकद्वये प्राधान्येन निर्दिष्टा खादिशब्दषड्विंशतिः पर्यायैः सह क्लीबे । अत्रान्यदिति बाधितात् यदन्यत्तदेव क्लीबमिति सावधानार्थमुक्तम् । चकाराद्वस्त्राभरणादि-

शीतोष्णमांसरुधिरमुखाक्षिद्रविणं बलम् ॥ २२ ॥
फलहेमशुल्बलोहसुखदुःखशुभाशुभम् ॥
जलपुष्पाणि लवणं व्यंजनान्यनुलेपनम् ॥ २३ ॥
कोट्याः शतादिसंख्याऽन्या वा लक्षा नियुतं च तत् ॥

संग्रहः । खमिंद्रियं व्योम च । तद्यथा । छिद्रं नभः वियत् इत्यादि । अरण्यं विपिनं काननमित्यादि । पर्णं पत्रं दलम् । "पर्णं पत्रे किंशुके चेति मेदिनी ।" श्वभ्रं तु पातालमित्यादि । हिमं तु प्रालेयमित्यादि । हिमं तुषारमलयोद्भवयोः स्यान्नपुंसकमिति मेदिनी ।" उदकं तु जलं नीरम् । शीतं शीतलमित्यादि । उष्णं तिग्ममित्यादि । शीतोष्णं गुणे क्लीबं तद्वति त्रिषु । "शीतं हिमगुणे क्लीबं शीतलालसयोस्त्रिष्विति मेदिनी । उष्णो ग्रीष्मे पुमान्दक्षाशीतयोरन्यलिंगक इति मेदिनी ।" मांसं पिशितं तरसमित्यादि । रुधिरं शोणितं रक्तम् । "रुधिरोऽगारके पुंसि क्लीबं तु कुंकुमासृजोरिति मेदिनी ।" मुखं तु वदनं वक्त्रम् । "मुखं निःसरणे वक्त्रे प्रारंभोपाययोरपि । संध्यंतरे नाटकादेः शब्देऽपि च नपुंसकमिति मेदिनी ।" अक्षि तु नयनं नेत्रम् । द्रविणं धनमित्यादि । "द्रविणं कांचने धने । पराक्रमे बलेऽपि स्यादिति हैमः ।" बलशब्देन शक्तिसैन्यग्रहणम् । शक्तौ यथा । बलं शुष्मामेत्यादि । सैन्यं चक्रमित्यादि ॥ २२ ॥ फलं फलमात्रं कपित्थमित्यादि । "हलमित्यपि क्वचित्पाठः ।" हेम सुवर्णं कनकमित्यादि । शुल्बं ताम्रमित्यादि । "शुल्बं ताम्रे यज्ञकर्मण्याचारे जलसन्निधाविति मेदिनी ।" लोहं कालायसमित्यादि । सुखं शर्म शातमित्यादि । दुःखं तु कृच्छ्रं कष्टम् । शुभं कल्याणं कुशलमित्यादि । अशुभमकल्याणमित्यादि । जलपुष्पाणि । कुमुदकमलकह्लारोत्पलादीनि । लवणं सैंधवमित्यादि । व्यंजनं तेमनं निष्ठानमित्यादि । व्यंजनं श्मश्रुचिह्नयोः । तेमनेऽवयवेऽकादाविति हैमः ।" व्यंजनविशेषाणामपि दधितक्रादीनां ग्रहणम् । अनुलेपनं कुंकुमादि । अत्र बाधितादन्यत् इति किम् । आकाशो विहाया द्यौः । अटवी अरण्यानीत्यादिकम् । एवमन्यदप्यूह्यम् ॥ २३ ॥ कोट्या अन्या कोटिशब्दं विना या शतादिसंख्या सा क्लीबे स्यात् । लक्षशब्दो वा क्लीबे । पक्षे स्त्रियाम् । "लक्षा न पुंसि संख्यायां क्लीबं व्याजशरव्ययोरिति मेदिनी ।" तदिति लक्षस्य पर्याया नियुतमित्यर्थः । उदाहरणं च । नियुतं शतं सहस्रमयुतमित्यादि । "शतं सहस्रमयुतं नियुतं प्रयुतं मतम् । स्त्री कोटिरर्बुदमिति

ह्व्यच्कमसिसुसन्नंतं यदनांतमकर्तरि ॥ २४ ॥
त्रांतं सलोपधं शिष्टं रात्रं प्राक्संख्ययान्वितम् ॥
पात्राद्यदंतैरेकार्थो द्विगुर्लक्ष्यानुसारतः ॥ २५ ॥
द्वंद्वैकत्वाव्ययीभावौ पथः संख्याव्ययात्परः ॥

क्रमाद्दशगुणोत्तरमिति रत्नकोशः । ” असंतमिसंतमुसंतमन्नंतं च यत् ह्यच्कं द्विस्वरं तत् क्लीबे । असंतं यथा । पयः मनः । इसंतं यथा । सर्पिः ज्योतिः । उसंतं यथा । वपुः यजुरित्यादि । अन्नंतं यथा । चर्म शर्म सामेत्यादि । अनेनैव क्लीबत्वे सिद्धे परतो यन्मर्मशब्दोपादानं तदस्यानित्यत्वज्ञापनार्थम् । तेन गुणांधकारशोकेषु तमो राहौ पुमानयमित्याद्यपि सिद्धम् । अकर्तरि कर्तुरन्यत्र यदनांतं अनेत्यंते यस्य तत्क्लीबे । यथा । गमनम् । मरणम् । दानम् । करणम् । चरणम् । अकर्तरीति किम् । इध्मव्रश्चनः कुठारः । नंदयतीति नंदनः रमणः ॥ २४ ॥ त्रांतं क्लीबे यथा । पात्रं वहित्रं वस्त्रं गात्रमित्यादि । सकारो लकारो वा उपधा अंत्यात्पूर्वो यस्य तत् सलोपधम् । सोपधं यथा । विसम् । अंधतमसम । लोपधं यथा । कुलं मूलमित्यादि । शिष्टमिति । यदवशिष्टं प्रागुक्तादन्यत् तच्च प्रागुक्तम् । यदबाधितं तदपि त्रांतादिकं क्लीबे इत्यर्थः । शिष्टमिति किम् । पुत्रः वृत्रः हंसः कंसः पनसः शिला कालः गलः । संख्यापूर्वो रात्रशब्दः क्लीबे । रात्राह्नाहाः पुंसीति पुंस्त्वप्राप्तेरपवादोऽयम् । संख्यापूर्वं रात्रं क्लीबमिति वार्तिकं रात्राह्नाहा इत्यस्य बाधकम् । त्रिरात्रम् । पंचरात्रम् । संख्ययेति किम् । अर्धरात्रः मध्यरात्रः । पात्रादिभिरदंतैरेकार्थो यो द्विगुः स क्लीबे । पंचरात्रम् । आदिना चतुर्युगम् । लक्ष्यानुसारतः शिष्टप्रयोगानुगमेनेत्यर्थः । अनेन पंचमूली त्रिलोकीत्यादिरपवादः । एकार्थः किम् । पंचकपालः पुरोडाशः । द्विगुरयं तद्धितार्थः ॥ २५ ॥ द्वंद्वसमासस्यैकत्वं अव्ययीभावश्च क्लीबे । द्वंद्वैक्यं यथा । पाणिपादम् । शिरोग्रीवम् । मार्दंगिकपाणविकम् । अव्ययीभावो यथा । अधिस्त्रि । उपगंगम् । संख्याया अव्ययाच्च परः पथः क्लीबे । यथा । द्विपथम् । त्रयाणां पथां समाहारस्त्रिपथम् । चतुष्पथम् । अव्ययाद्यथा । विपथम् । कापथम् । संख्याव्ययादिति किम् । धर्मपथः । योगपथः । पथ इति समासांतानुकरणम् । समासे षष्ठीविभक्त्यंतात्परा छाया क्लीबे । छाया बाहुल्ये इति पाणिनिसूत्रम् । सा चेद्बहूनां संबंधिनी तर्ह्येव तदुदाहरति ।

षष्ठ्याश्छाया बहूनां चेद्विच्छायं संहतौ सभा ॥ २६ ॥
शालार्थापि परा राजामनुष्यार्थादराजकात् ॥
दासीसभं नृपसभं रक्षःसभमिमा दिशः ॥ २७ ॥
उपज्ञोपक्रमांतश्च तदादित्वप्रकाशने ॥
कोपज्ञकोपक्रमादि कंथोशीनरनामसु ॥ २८ ॥

वीनां पक्षिणां छाया विच्छायमिति । इक्षुच्छायम् । बहूनामिति किम् । कुड्यच्छाया कुड्यच्छायमिति वा । स्त्रियां तु वक्ष्यते । संहतौ समूहविषये सभाशब्दः क्लीबे । अत्रापि षष्ठ्या इत्यनुवर्तते । यथा । दासीनां सभा दासीसभम् । स्त्रीसभमित्यादि । संहताविति किम् । दासीनां सभा दासीसभा दासीगृहमित्यर्थः ॥ २६ ॥ शालार्था गृहार्था अपिशब्दात्संहत्यर्था च या सभा सा अराजकात् राजशब्दवर्जितात् राजामनुष्यार्थात् राजार्थात् राजपर्यायात् अमनुष्यार्थात् रक्षआदिशब्दात्षष्ठ्यंतात्परा चेत् क्लीबे । शाला गृहं अर्थोऽभिधेयो यस्याः सा शालार्था । अराजकराजपर्यायात् यथा । इनसभम् । प्रभुसभम् । अमनुष्यार्थाद्यथा । रक्षःसभम् । पिशाचसभम् । अराजकात्किम् । राजसभा । "राजपर्यायग्रहणान्नेह चंद्रगुप्तसभा । राजविशेषोऽयम् ।" षष्ठ्या इति किम् । नृपतिविषये सभा । नृपतिसभा । नृणां पतिर्यस्यां सा चासौ सभा चेति वा नृपतिसभा । अमनुष्यार्थादिति किम् । दासीसभा । दासीनां शालेत्यर्थः । इमा दिश इति दासीसभमित्यादीनि क्रमेण त्रीण्युदाहरणानीत्यर्थः । तत्र दासीसभमित्यादि तु संहतावित्यस्यैव । इतरे तु शालासंहतिसाधारणे ॥ २७ ॥ तयोरुपज्ञोपक्रमयोरादित्वं प्राथम्यं तस्य प्रकाशने द्योतने उपज्ञांत उपक्रमांतश्च समासः क्लीबे स्यात् । उदाहरणमाह । उपज्ञायत इत्युपज्ञा । को ब्रह्मा तस्योपज्ञा कोपज्ञं प्रजा । कस्योपक्रमः कोपक्रमं लोकः । प्रजापतिना प्रथमं सृष्टत्वात्तेनादावुपज्ञाता प्रजेत्यर्थः । तदादित्वेति किम् । देवदत्तोपज्ञा । मृन्मयः प्रकारः । मृत्प्रकारस्यानेककारणत्वात् । देवदत्तेति सामान्यशब्देन च तदादित्वप्रतिपादनाभावे क्लीबत्वाभावः । एवं देवदत्तोपक्रमो रथः । अत्रापि षष्ठ्या इत्यनुवर्तते । उशीनराणां नामसु मध्ये षष्ठ्यंतात्परा कंथा क्लीबे । सौशमीनां कंथा सौशमिकंथम् । उशीनरादन्यत्र दाक्षिकंथा । नामसु इति किम् । वीरणकंथा ॥ २८ ॥ चकार इत् अनुबंधो यस्य स चित् । नश्च णश्च कश्च चिच्च

भावे नणकचिड्भ्योऽन्ये समूहे भावकर्मणोः ॥
अदंतप्रत्ययाः पुण्यसुदिनाभ्यां त्वहः परः ॥ २९ ॥
क्रियाऽव्ययानां भेदकान्येकत्वेऽप्युक्थतोटके ॥
चोचं पिच्छं गृहस्थूणं तिरीटं मर्म योजनम् ॥ ३० ॥
राजसूयं वाजपेयं गद्यपद्ये कृतौ कवेः ॥

नणकचितः। तेभ्योऽन्ये ये तव्यदादयोऽदंता धातुप्रत्ययाः भावे विहितास्ते क्लीबे । तत्र धातुप्रत्यया यथा । भवितव्यम् । भाव्यम् । सहितम् । भुक्तम् । नणकचिड्भ्योऽन्य इति किम् । प्रश्नः न्यादः आखूत्थः । वेपथुः । नणकेति घञ उपलक्षणम् । पाकः । भावे किम् । कर्तव्यो धर्मसंग्रहः । मृतो वैरी । समूहार्थे यथा । भिक्षाणां समूहो भैक्षम् । गार्भिणम् । औपगवकम् । काकमित्यादि । भावे अदंता यथा । गोर्भावः गोत्वम् । शुचेर्भावः शौचम् । कर्मणि यथा । श्लौक्ष्यम् । राज्ञः कर्म राज्यम् । चौर्यम् । तलूप्रत्ययस्य तु स्त्रीत्वमुक्तम् । पुण्यसुदिनाभ्यां परो विहितसमासांतोऽह्नूशब्दः क्लीबे । पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टेति वार्तिकेनेत्यर्थः । अह्नाह्नांता इति पुंस्त्वस्यापवादोऽयम् । पुण्याहम् । सुदिनाहम् । सुदिनशब्दः प्रशस्तार्थः ॥ २९ ॥ क्रियाणामव्ययानां च भेदकानि विशेषणानि क्लीबे एकवचने च स्युः । क्रियाविशेषणं यथा । मंदं पचति । सुखं तिष्ठंति योगिनः । सलीलं नृत्यति बाला । अव्ययविशेषणं यथा । रम्यं स्वः । सुखदं प्रातः । अथ कानिचित्कंठरवेणाह । उक्थं सामभेदः । तोटकं वृत्तभेदः रूपकभेदश्च । चोचमुपभुक्तफलावशिष्टं तालफलं वा । कदल्याः फलमिति कश्चित् । पिच्छं बर्हम् । गृहस्थूणं गेहस्तंभः । तिरीटं वेष्टनम् । "शिरोभूषणमिति केचित् । मर्म संधिस्थानम् । योजनं क्रोशचतुष्टयम । योजनं परमात्मनि । चतुष्क्रोश्यां च योगे चेति मेदिनी" ॥ ३० ॥ राजसूयवाजपेये यागभेदौ । "राज्ञा लतात्मकः सोमः सूयतेऽत्र राजसूयम् । वाजं पैष्टी सुरा पेयमत्र वाजपेयम् ।" कवेः कृतौ वर्तमानं गद्यं पदसमूहः । पद्यं श्लोकः । "पद्यं श्लोके पुमान् शूद्रे पद्या वर्त्मनि कीर्तितेति मेदिनी ।" कवेः कृताविति किम् । गद्या वाक् । पद्या पद्धतिः । माणिक्यं रत्नभेदः । "मणिके मणिपुराख्ये नगरे भवं माणिक्यम् ।" भाष्यं पदार्थविवृतिः । "सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुकारिभिः । स्वपदानि च वर्ण्यंते भाष्यं भाष्यविदो विदुरिति ।" सिंदूरं रक्तचूर्णभेदः । "सिंदूरस्तरुभेदे स्यात्सिंदूरं रक्तचूर्णके ।

47

माणिक्यभाष्यसिंदूरचीरचीवरपिंजरम् ॥ ३१ ॥
लोकायतं हरितालं विदलस्थालबाह्लिकम् ॥
इति नपुंसकसंग्रहः ॥
पुन्नपुंसकयोः शेषोऽर्धर्चपिण्याककंटकाः ॥ ३२ ॥
मोदकस्तंडकष्टंकः शाटकः कर्पटोऽर्बुदः ॥

सिंदूरी रोचना रक्तवेल्लिका धातकीषु चेति विश्वप्रकाशः ।" चीरं वस्त्रभेदः । "चीरी झिल्ल्यां नपुंसकम् । गोस्तने वस्त्रभेदे च रेखालेखनभेदयोरिति मेदिनी ।" चीवरं मुनिवासः । "शाक्यभिक्षुप्रावरणमिति सुभूतिः ।" पिंजरं पक्ष्यादिबंधनागारम् । "पिंजरोऽश्वांतरे पीते क्लीबं स्वर्णे च पीतक इति कोशांतरम् । पंजरमित्यपि पाठः " ॥ ३१ ॥ लोकायतं चार्वाकशास्त्रम् । हरितालं धातुभेदः । " हरितालं धातुभेदे स्त्री दूर्वाकाशरेखयोरिति मेदिनी ।" विदलं वंशदलकृतपात्रभेदः । स्थालं भांडभेदः । बाल्हिकं कुंकुमादि । " बाह्लकमिति च बाह्लवमित्यपि । बह्लदेशे भवं बाह्लवम् " ॥ इति नपुंसकसंग्रहः ॥ अथ चिक्कसपर्यंताः पुंसि क्लीबे च स्युः । उक्तादन्यः शेषः । यथा शंखपद्मौ निधिवाचकौ पुंसि । कंबुनलिनवाचिनौ तु पुन्नपुंसकयोः । तथाऽन्यत्रशब्दोऽपि यत्पर्याये बाधितस्तत्पर्यायाद्भिन्नश्चेत् पुन्नपुंसकयोरित्यर्थः । ऋचोऽर्धमर्धर्चः । पिण्याकं तिलकल्कम् । "पिण्याकोऽस्त्री तिलकल्के हिंगुबाह्लीकसिह्लक इति मेदिनी ।" कंटकं रोमहर्षादि । "कंटकः क्षुद्रशत्रौ च कर्मस्थानिकदोषयोः । रोमांचे च द्रुमांगे च कंटको मस्करेऽपि चेति विश्वप्रकाशः । कंटको न स्त्रियां क्षुद्रशत्रौ मत्स्यादिकीकसे । नैयोगिकादिदोषोक्तौ स्याद्रोमांचद्रुमांगयोरिति मेदिनी " ॥ ३२ ॥ मोदकं भक्ष्यभेदः । "मोदकाः खाद्यभेदेऽस्त्री हर्षके पुनरन्यवदिति मेदिनी । मोदको हर्षुले खाद्य इति हैमः ।" तंडकः उपतापविशेषः । "तंडकः खंजने फेने समासप्रायवाचि च । गृहदारुतरुस्कंधमायाबहुलकेष्वपीति मेदिनी । दंडक इत्यपि ।" टंकोऽश्मदारणः । "टंको नीलकपित्थे च खनित्रे टंकनेऽस्त्रियाम् । जंघायां स्त्री पुमान्कोपे कोशासिग्रावदारण इति मेदिनी ।" शाटकः पटभेदः कर्पटं स्थानभेदः वस्त्रभेदो वा । "खर्वटमित्यपि । यत्रैकतो भवेद्ग्रामो नगरं चैकतः स्मृतम् ॥ मिश्रं तु खर्वटं नाम नदीगिरिसमाश्रयमिति ।" अर्बुदं संख्याभेदः । पातकं ब्रह्महत्यादि । उद्योग उत्साहः । चरकं वैद्यशास्त्रभेदः । "वरकमित्यपि पाठस्तत्र स्यूत-

पातकोद्योगचरकतमालामलका नडः ॥ ३३ ॥
कुष्ठं मुंडं शीधु बुस्तं क्ष्वेडितं क्षेमकुट्टिमम् ॥
संगमं शतमानार्मशंबलाव्ययतांडवम् ॥ ३४ ॥
कवियं कंदकार्पासं पारावारं युगंधरम् ॥
यूपं प्रग्रीवपात्रीवे यूषं चमसचिक्कसौ ॥ ३५ ॥
अर्धर्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवम् ॥
तन्नोक्तमिह लोकेऽपि तच्चेदस्त्यस्तु शेषवत् ॥ ३६ ॥
॥ इति पुन्नपुंसकसंग्रहवर्गः ॥

वस्त्रम् ।" तमालो वृक्षभेदः । "तमालस्तिलके खड्गे तापिच्छे वरुणद्रुम इति मेदिनी ।" आमलको धात्रीफलम् । नडोऽर्तविवरं "तृणभेदश्च" ॥ ३३ ॥ कुष्ठं रोगभेदः । कुष्ठं रोगे पुष्करेऽस्त्रीति मेदिनी । कुष्ठं भेषजरोगयोरिति हैमः । मुंडं शिरः । शीधु मद्यम् । बुस्तं भृष्टं मांसं पनसादिफलासारभागश्च । क्वचित्पुस्तमिति पाठः । क्वचित् भस्तमपि । क्ष्वेडितं वीरकृतसिंहनादः ।" क्षेमं कुशलम् । "क्षेमोऽस्त्री लब्धरक्षणे । चंडायां ना शुभे न स्त्री कात्यायन्यां तु योषितीति मेदिनी ।" मोक्षेऽपि क्षेमः । कुट्टिमं भित्तिभेदः । "कुट्टिमोऽस्त्री निबद्धा भूरिति कोशांतरम् । फरसबंदीति ख्यातायाः ।" संगमं संयोगः । शतमानं मानभेदः । अर्म अक्षिरोगभेदः । शंबलं वर्णभेदः । "पाथेयं च । शबलोऽस्त्री संबलवत्कूलपाथेयमत्सर इति मेदिनी ।" अव्ययं स्वरादिनिपातवाचकम् । अव्ययोऽस्त्री शब्दभेदे ना विष्णौ निर्व्यये त्रिष्विति मेदिनी ।" तांडवं नृत्तभेदः ॥ ३४ ॥ कवियं महाराष्ट्रभाषया कडियाळीति प्रसिद्धम् । लगाम इत्यपि । "नार्यां कवी खलीनं कवियं वा ना तुरंगमुखभांडमिति बोपालितः ।" कंदं पद्मिनीमूलादि । "कंदोऽस्त्री सूरणे सस्यमूले जलधरे पुमानिति मेदिनी । क्वचित्कर्मेति पाठः ।" कार्पासं वस्त्रयोनिभेदः । पारावारः पयोराशौ पारावारं तटद्वयमिति हैमः । युगंधरं कूबरम् ।" यूपं यज्ञांगभेदः । प्रग्रीवं द्रुमशीर्षकं "वातायनं मुखशाला वा ।" पात्रीवं यज्ञपात्रभेदः । यूषं मंड इति प्रसिद्धम् । मुद्गामलकयूषस्तु ग्राही पित्तकफे हित इत्युक्तं वैद्यके ।" चमसचिक्कसौ पात्रभेदौ ॥ ३५ ॥ अर्धर्चादौ अस्मिन्वर्गे पुन्नपुंसकाधिकारे इति यावत् । घृतादीनां पुंस्त्वाद्यं पाणिन्यादिभिरुक्तं तत्तु वैदिकम् । वेदे प्रसिद्धमित्यर्थः । अत-

स्त्रीपुंसयोरपत्यांता द्विचतुःषट्पदोरगाः ॥
जातिभेदाः पुमाख्याश्च स्त्रीयोगैः सह मल्लकः ॥ ३७ ॥
ऊर्मिर्वराटकः स्वातिर्वर्णको झाटलिर्मनुः ॥
मूषा सृपाटी कर्कंधूर्यष्टिः शाटी कटी कुटी ॥ ३८ ॥

॥ इति स्त्रीपुंसशेषसंग्रहवर्गः ॥

स्त्रीनपुंसकयोर्भावक्रिययोः ष्यञ् क्वचिच्च वुञ् ॥

स्त्वादिह नोक्तम् । तल्लोकेऽप्यस्ति चेत् शेषवत् उक्तादन्यः शेषस्तद्वदस्तु शिष्टप्रयोगतो ग्राह्यमित्यर्थः ॥ ३६ ॥ इति पुन्नपुंसकसंग्रहवर्गः ॥ अपत्यांता अपत्यप्रत्ययांताः स्त्रीपुंसयोः स्युः । यथा । उपगोः अपत्यं पुमान् औपगवः । उपगोरपत्यं स्त्री औपगवी । वैदेहः । वैदेही । गार्ग्यः गार्गी । द्विचतुःषट्पदोरगाः द्विपदचतुष्पदषट्पदवाचिनो भुजगवाचिनश्च जातिभेदाः स्त्रीपुंसयोः । तत्र द्विपदजातिभेदो यथा । मानुषः पुमान् । मानुषी स्त्री । ब्राह्मणः ब्राह्मणी । " शूद्रः शूद्रा अजादित्वाट्टाप् । " चतुष्पदभेदो यथा । मृगः मृगी । हयः हयी । षट्पदभेदो यथा । भृंगः भृंगी । उरगभेदो यथा । उरगः उरगी । नागः नागी । स्त्रीयोगैः सह पुमाख्याः पुन्नामानि स्त्रीपुंसयोः । यथा । इंद्रः । इंद्राणी । मातुर्भ्राता मातुलः । तस्य स्त्री मातुली । पुंसि वर्तमानो मातुलः । स्त्रीयोगात्स्त्रीत्वेऽपि वर्तते । शूद्रस्य स्त्री शूद्री । मल्लकादयश्च स्त्रीपुंसयोः । मल्लकः पुष्पवल्लीभेदः । स्त्रियां तु मल्लिका ॥ ३७ ॥ ऊर्मिस्तरंगः " मुनिरिति पाठः । मुनिर्यतींगुदीबुद्धपिलाधागस्तिकिंशुक इति विश्वप्रकाशः । " वराटकः कपर्दकः । स्त्रियां तु वराटिका । स्वातिर्नक्षत्रम् । " वर्णकश्चंदनम् । विलेपने चंदने च वर्णकं पुन्नपुंसकमिति रभसः । वर्णकश्चारणे स्त्री तु चंदने च विलेपने । द्वयोर्नील्यादिषु स्त्री स्यादुत्कर्षे कांचनस्य चेति मेदिनी । झाटलिः किंशुकवृक्षसदृशः मोखा इति प्रसिद्धः । मनुः स्वायंभुवादिः मंत्रो वा । मूषा तैजसावर्तनी । सृपाटी परिमाणभेदः । " कर्कंधूर्बदरी । यष्टिः लगुडः । काठीति महाराष्ट्रभाषायाम् । शाटी पटभेदः । कटी देहावयवः । कुटी ग्रहकोष्टकः । अत्र मूषा नाकारांतः ॥ ३८ ॥ इति स्त्रीपुंससंग्रहवर्गः ॥ भावक्रिययोः भावे कर्मणि च वर्तमानः ष्यञ्प्रत्ययो वुञ्प्रत्ययश्च क्वचित्स्त्रीनपुंसकयोर्वर्तते । तत्र ष्यञ्प्रत्ययमुदाहरति । उचितस्य भावः औचित्यं औचिती च । मित्रस्य कर्म मैत्र्यं मैत्री वा । " एवं सामग्र्यं सामग्री वा । आर्हत्यं

औचित्यमौचिती मैत्री मैत्र्यं वुञ् प्रागुदाहृतः ॥ ३९ ॥
षष्ठ्यंतप्राक्पदाः सेनाछायाशालासुरानिशाः ॥
स्याद्वा नृसेनं श्वनिशं गोशालमितरे च दिक् ॥ ४० ॥
आबन्नंतोत्तरपदो द्विगुश्चापुंसि नश्च लुप् ॥
त्रिखट्वं च त्रिखट्वी च त्रितक्षं च त्रितक्ष्यपि ॥ ४१ ॥

॥ इति स्त्रीनपुंसकशेषः ॥

त्रिषु पात्री पुटी वाटी पेटी कुवलदाडिमौ ॥
इति त्रिलिंगशेषसंग्रहः ॥

आर्हती ।" वुञ्प्रत्ययस्तु वैरमैथुनिकादिवुन् । इत्थं प्रागुदाहृतः । तथा मिथुनस्य भावः कर्म वा मैथुनिका मैथुनकं च । मनोज्ञादित्वाद्वुञ् ॥ ३९ ॥ तत्पुरुषे षष्ठ्यंतं षष्ठीविभक्त्यंतं प्राक्पदं यासां ताः षष्ठ्यंतप्राक्पदाः सेनाद्याः स्त्रियां क्लीबे च स्युः । उदाहरति । नृणां सेना नृसेनम् । वेति विकल्पान्नृसेनापि । इतर इति । एवमन्यत्राप्युदाहर्तव्यमित्यर्थः । यवसुरं यवसुरा । कुड्यस्य छाया कुड्यच्छायं कुड्यच्छाया वा । षष्ठीबहुवचनांतप्राक्पदा चेच्छाया क्लीब एवेति प्राग्दर्शितम् ॥ ४० ॥ आबंतोत्तरपदोऽन्नंतोत्तरपदश्च द्विगुसमासः पुंसि न स्यात् । किंतु स्त्रीनपुंसकयोः । अन्नंतोत्तरपदस्य योऽत्यनकारस्तस्य लुप् लोपश्च स्यात् । आबंतांत्यपदमुदाहरति । त्रिखट्वमिति । तिस्रः खट्वाः समाहृताः त्रिखट्वम् । त्रिखट्वी च । अन्नंतोत्तरपदो यथा । त्रयस्तक्षाणः समाहृतास्त्रितक्षम् । त्रितक्षी च । तक्षन्शब्दस्यांत्यनकारो लुप्तः ॥ ४१ ॥ इति स्त्रीनपुंसकसंग्रहः ॥ पात्रादयो दाडिमांतास्त्रिषु त्रिलिंगाः । पात्रं पात्रः इत्यादि । पाश्यमत्रे त्रिष्विति मेदिनी । पात्रं तु कूलयोर्मध्ये पर्णे नृपतिमंत्रिणि । योग्यभाजनयोर्यज्ञभांडे नाट्यानुकर्तरीति हैमः । वाटः पथि वृतौ वाटं वरंडे गात्रभेदयोः । वाटी वास्तौ गृहोद्यानकट्योरिति हैमः ।" कुवलं बदरीफलम् । "कुवलं चोत्पले मुक्ताफलेऽपि बदरीफले । कुड्मले मुकुरे पुंसि न द्वयोर्नरकांतर इति मेदिनी ॥" इति त्रिलिंगशेषः ॥ द्वंद्वैकत्वस्याव्ययीभावस्य च लिंगं प्रागुक्तम् । स्वप्रधाने उभयपदप्रधाने इतरेतराख्ये द्वंद्वसमासे च तत्पुरुषे च यत्परमग्रिमपदस्थं लिंगं तदेव लिंगं स्यात् । तत्र परवल्लिंगं द्वंद्वतत्पुरुषयोरिति पाणिनिसूत्रम् । तत्र द्वंद्वे यथा ।

परं लिंगं स्वप्रधाने द्वंद्वे तत्पुरुषेऽपि तत् ॥ ४२ ॥
अर्थांताः प्राद्यलंप्राप्तापन्नपूर्वाः परोपगाः ॥
तद्धितार्थो द्विगुः संख्यासर्वनामतदंतकाः ॥ ४३ ॥
बहुव्रीहिरदिङ्नाम्नामुन्नेयं तदुदाहृतम् ॥
गुणद्रव्यक्रियायोगोपाधिभिः परगामिनः ॥ ४४ ॥

कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । तत्पुरुषे यथा । धान्येनार्थो धान्यार्थः । सर्पाद्भीतिः सर्पभीतिः । सर्पभयम् । वाप्यश्वः ॥ ४२ ॥ उक्तस्य तत्पुरुषलिंगस्यापवादमाह । अर्थेति । अर्थांतशब्दाः परोपगाः परगामिनः वाच्यलिंगा इत्यर्थः । यथा । द्विजायायं द्विजार्थः सूपः । द्विजार्था यवागूः । द्विजार्थं पयः । अर्थेन नित्यसमासो विशेष्यलिंगता चेति वक्तव्यमिति वार्तिकम् । प्रेति । प्राद्यलंप्राप्तापन्नपूर्वाः परोपगाः । "परं विशेष्यमुपगच्छंतीत्यर्थः ।" तत्र प्रादिपूर्वो यथा । अतिक्रांतो मालामतिमालो हरः । अतिक्रांता मालामतिमालेयम् । अतिमालमिदम् । अवकुष्टः कोकिलया अवकोकिलः । अलंपूर्वो यथा । अलंकुमार्यै इत्यलंकुमारिरयम् । अलंकुमारिरियम् । अलंकुमारि इदम् । प्राप्तजीविको द्विजः । प्राप्तजीविका स्त्री । प्राप्तजीविकमिदम् । एवमापन्नजीविकः । तद्धितार्थो द्विगुर्वाच्यलिंगः । पंचकपालः पुरोडाशः । पंचकपालं हविः । संख्याशब्दाः सर्वनामसंज्ञकास्तदंतकाश्च परलिंगभाजः । संख्या यथा । एकः पुमान् । एकं कुलम् । द्वौ पुमांसौ । द्वे स्त्रियौ कुले च । "त्रयः पुरुषाः । तिस्रः स्त्रियः । त्रीणि कुलानि । एवं चत्वारः चतस्रः चत्वारि ।" षट्संज्ञकान्वक्ष्यति । विंशत्यादीनां लिंगं द्वितीयकांडे उक्तम् । शतादिकानां तु नपुंसकसंग्रहे । सर्वनाम यथा । सर्वो देशः । सर्वा नदी । सर्वं जलम् । एवं परः पुमान् । "संख्यांतको यथा । ऊनत्रयः । ऊनतिस्रः । ऊनत्रीणि ।" सर्वनामांतको यथा । परमसर्वः । परमसर्वा । परमसर्वम् ॥ ४३ ॥ अदिङ्नाम्नां बहुव्रीहिरन्यलिंगभाक् । तदुदाहरणं स्वयमुन्नेयम् । यथा । वृद्धा भार्या यस्य स वृद्धभार्यः । बहुधनः । बहुधना । "बहुधनमित्यादि ।" अदिङ्नाम्नामिति किम् । दक्षिणस्याः पूर्वस्याश्च दिशोरंतरालं दिक् दक्षिणपूर्वा । दिङ्नामान्यंतराले इत्यनेनात्र बहुव्रीहिः । गुणयोगेन द्रव्ययोगेन क्रियायोगेन च य उपाधिर्विशेषणं तेन धर्मिणि प्रवृत्तास्ते धर्मिलिंगभाजः । गुणयोगेन यथा । गंधवती पृथ्वी ।

कृतः कर्तर्यसंज्ञायां कृत्याः कर्तरि कर्मणि ॥
अणाद्यंतास्तेन रक्ताद्यर्थे नानार्थभेदकाः ॥ ४५ ॥
षट्संज्ञकास्त्रिषु समा युष्मदस्मत्तिङव्ययम् ॥
परं विरोधे शेषं तु ज्ञेयं शिष्टप्रयोगतः ॥ ४६ ॥
॥ इति लिंगादिसंग्रहवर्गः ॥ ५ ॥

गंधवानश्मा । गंधवत्कुसुमम् । द्रव्ययोगेन यथा । दंडिनी स्त्री । क्रियायोगेन यथा । पाचिका स्त्री । गुणद्रव्यक्रियायोगोपाधयः परगामिन इति पाठांतरम् ॥ ४४ ॥ असंज्ञायां कर्तरि कृत्प्रत्ययाः परोपगाः । यथा । करोतीति कर्त्री । कर्ता पुमान् । कर्तृ कलत्रम् । असंज्ञायां किम् । प्रजा । हरिः । कर्तरि किम् । कृतिः । कर्मणि कर्तरि च वर्तमानाः कृत्प्रत्ययाः परगामिनः । कर्मणि यथा । कर्तव्या भक्तिः । कर्तव्यो धर्मस्त्वया । कर्तरि यथा । वसतीति वास्तव्योऽयम् । वास्तव्या सा । वास्तव्यं तत् । कर्तरि कर्मणीति किम् । भावे तु एधितव्यं त्वया । तेन रक्तमित्याद्यर्थे अणादितद्धितप्रत्ययांता नानार्थभेदका अनेकार्थविशेषणभूताः विशिष्टत्वाद्वाच्यलिंगा इत्यर्थः । यथा कुसुंभेन रक्ता शाटी कौसुंभी । कौसुंभः पटः । कौसुंभं वासः । तेन रक्तं रागादित्यण् । रक्ताद्यर्थ इत्यादिशब्दान्मथुराया आगतो माथुरोऽयम् । इयं माथुरी । अणाद्यंता इत्यादिशब्दाद्ग्रामे भवा ग्राम्या स्त्री । ग्राम्यः पुमान् । अत्र यत्प्रत्ययः ॥ ४५ ॥ षट्संज्ञकाः षांतनांतसंख्या कतिशब्दश्च त्रिलिंग्यां समाः सरूपा नित्यं बहुषु वर्तमाना अतो बहुवचनांताश्चेत्यर्थः । यथा । षडिमे । षडिमाः । षडिमानि । पंचभिरेताभिः । कति पुमांसः । कति स्त्रियः । कति कुलानि । युष्मदस्मच्छब्दौ तिङंतपदान्यव्ययानि च त्रिषु समानि लिंगकृतविशेषरहितानीत्यर्थः । युष्मच्छब्दो यथा । त्वं स्त्री । त्वं पुमान् । त्वं कलत्रम् । अस्मच्छब्दो यथा । आवां पुमांसौ । आवां स्त्रियौ । आवां कलत्रे । तिङ् यथा । स्थाली भवति । घटो भवति । पात्रं भवति । एवं दारा भवंतीत्यादि । अव्ययं यथा । उच्चैः दाराः । उच्चैः स्त्री । उच्चैः कलत्रम् । उच्चैः प्रासाद इत्यादि । परमिति । विरोधे विप्रतिषेधे सति परं लिंगानुशासनं प्रवर्तते । यथा । मानुषशब्दस्य कषणभमरोपांता इति प्रागुक्तविधिना पुंस्त्वे एव प्राप्ते सति द्विचतुःषट्पदेत्यनेनोत्तरत्रोक्तेन स्त्रीपुंसविधिर्निश्चेयः । यथा । मानुषीयम् । मानुषोऽयमिति । शेषमिति । शेषमत्रानुक्तम् अभिधा-

## इत्यमरसिंहकृतौ नामलिंगानुशासने ॥
## सामान्यकांडस्तृतीयः सांग एव समर्थितः ॥ ४७ ॥

नादिकं शिष्टानां महाकवीनां भाष्यकारादीनां प्रयोगतो ज्ञेयम् । यद्वा अनुक्तं शब्दलिंगं शिष्टप्रयोगतो बोद्धव्यम् । लिंगमशिष्यं लोकाश्रयत्वाल्लिंगस्येति भाष्योक्तेरित्यर्थः । तदशिष्यं संज्ञाप्रमाणत्वादित्यादिसूत्रप्रत्याख्यानावसरे भाष्यकारेणोक्तम् ॥ ४६ ॥ उक्तमुपसंहरति । इतीति । इत्येवंप्रकारेणामरसिंहस्य कृतौ नामलिंगशास्त्रे सामान्यनामा तृतीयः कांडः प्रस्तावो वर्गसमूहो वा अंगैः सहितः समर्थितो निरूपित इत्यर्थः ॥ ४७ ॥ इंद्रश्चंद्रः काशकृत्स्नापिशलीशाकटायनः । पाणिन्यमरजैनेंद्रा जयंत्यष्टौ च शाब्दिकाः ॥ ॥ श्रीमत्यमरविवेके महेश्वरेण विरचित इत्थं सामान्यकांड एषोऽतिमः समाप्तः ॥ ॥ अमरकोशः समाप्तः ॥

---

### अमरकोशतृतीयकांडस्य वर्गानुक्रमेण श्लोकसंख्या.

| वर्गांकाः | वर्गनामानि. | मूलश्लोकाः | क्षेपकश्लोकाः | |
|---|---|---|---|---|
| १ | विशेष्यनिघ्नवर्गः ............. | ११२॥ | ० | मूलश्लोकाः क्षेपक श्लोकाः |
| २ | संकीर्णवर्गः ............... | ४३ | ० | ४८० ७॥. एवं |
| ३ | नानार्थवर्गः ............... | २५५॥ | ७॥ | ४८७॥ |
| ४ | अव्ययवर्गः ............... | २३ | ० | |
| ५ | लिंगादिसंग्रहवर्गः............ | ४६ | ० | |

# सटीकामरकोशस्य
# अकारादिवर्णानुक्रमेण
## शब्दानुक्रमणिका.

## ख

## न

## र.

## ल

# क्षेपकश्लोकशब्दानुक्रमणिका.

---

१ इदमेवोदाहरणं क्षीरस्वामिकृतामरोद्घाटने, रायमुकुटकृतपदचन्द्रिकायाम्, दीक्षितरामकृष्णकृतपीयूषाख्यव्याख्यायाम्, भानुदीक्षितकृतव्याख्यासुधाख्यायाम्, (रामाश्रम्याम्) च दत्तम्। परं त्वेतन्न संगच्छते, "नभोऽन्तरिक्षं गगनम्" "नभाः श्रावणिकश्च सः"—इति स्वपर्याये लिङ्गभेदस्य ज्ञापितत्वेन "मातापितरौ पितरौ"—इत्यतो वैलक्षण्याभावादेकशेषेऽपि दोषाभावात्। तस्मात् "ओकः सद्माश्रयश्चौकाः"—इत्युदाहर्तव्यमिति भानुदीक्षितकृतव्याख्यासुधाख्यायाः टिप्पणे शिवदत्तपण्डितेन स्पष्टीकृतम्—(इदं हि टिप्पणं २ पृष्ठस्थमिति मन्तव्यम्)॥

# अमरकोशस्य शुद्धिपत्रम्.

| अशुद्धम्. | शुद्धम्. | पृष्ठम्. | पंक्तिः. |
|---|---|---|---|
| षड्विंशति नामानि | षड्विंशतिर्नामानि | ३ | १९ |
| हाहान् हाहाभ्याम् | हाहान् हाहा हाहाभ्याम् | ११ | २४ |
| वीति भक्ष्यं | वीतिर्भक्ष्यं | १२ | ११ |
| वसुः | वसु | १२ | २० |
| विंशति नामानि | विंशतिर्नामानि | १८ | २२ |
| सप्तविंशतिनक्षत्राणि | सप्तविंशतिर्नक्षत्राणि | १९ | २५ |
| पुस्तकेऽप्यस्ति | पुस्तकेऽस्ति | २६ | २६ |
| हायनांता | हायनः | २७ | १८ |
| वित्यर्थ | वित्यर्थः | २७ | २६ |
| पिशङ्गस्त्वासिता | पिशंगस्त्वसिता | ३३ | २५ |
| पिंशो | पिंगो | ३३ | २६ |
| पुरुष | परुष | ३७ | २२ |
| चासुः | चासूः | ४४ | २७ |
| भयङ्करं | भयंकरं | ४६ | १ |
| लेहिहानो | लेलिहानो | ५२ | ५ |
| श्यामाल | श्यालमा | ५३ | १ |
| तपवना | तपना | ५३ | ४ |
| स्यास्कृष्टं | स्यात्कष्टं | ५४ | ३ |
| रपापतिः | रपांपतिः | ५४ | ७ |
| क्षुद्राड | क्षुद्रांड | ५९ | १ |
| पल्पलं | पल्वलं | ६१ | ५ |
| विदुर | विदुल | ८६ | ९ |
| विदुरः | विदुलः | ८६ | २७ |
| संतानं | संतानः | १२९ | १४ |
| आन्वो | जानुनो | १४२ | २२ |
| क्षत्रियवर्गः | क्षत्रियवर्गः | १८० हेडिंगे (एवं सर्वत्र) | |
| क्षत्रियो | क्षत्रियो | १८० | ४ |
| क्षत्रियः | क्षत्रियः | १८० | १७ |
| क्षत्रियस्य | क्षत्रियस्य | १८० | १७ |
| अद्यते | अंद्यते | १९० | ८ |
| तत्रयेण दशानीकिनी सत्रयेण | दशानीकिन्यः | १९९ | २४ |
| दशानीकिन्य | दशानीकिन्योऽ | २०० | २ |
| भ्रष्ट | भृष्ट | २२२ | २ |
| भ्रष्ट | भृष्ट | २२२ | १६ |
| भ्रष्ट | भृष्ट | २२२ | १६ |
| चिरप्रसूता | चिरसूता | २२७ | २७ |
| चिरप्रसूता | चिरसूता | २२८ | १ |
| रैरस्न | रैरस्ने | ३४० | ९ |

# BOMBAY SANSKRIT SERIES.

*Edited under the superintendence of Dr. P. Peterson and Dr. R. G. Bhândârkar.*

| | Rs. | a. | p. |
|---|---|---|---|
| No. I.—Pañchatantra, Books IV. and V. Edited, with Notes, by Dr. G. Bühler ... ... ... ... ... ... ... ... ... | 0 | 4 | 0 |
| No. II.—Nâgojibhaṭṭa's Paribhâshendusekhara. Edited and explained by Dr. F. Kielhorn. The Sanskrit Text and various Readings, Part I. | 0 | 8 | 0 |
| No. III.—Pañchatantra, Books II. and III. Edited, with Notes, by Dr. G. Bühler ... ... ... ... ... ... ... | 0 | 4 | 0 |
| No. IV.—Pañchatantra, Book I. Edited, with Notes, by Dr. F. Kielhorn. (In the press.) | | | |
| No. V.—The Raghuvaṁśa of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S. P. Pandit, M.A., Part I., Cantos I.—VI. (In the press.) | | | |
| No. VI.—Mâlavikâgnimitra: a Sanskrit Play by Kâlidâsa. Edited, with Notes, by Shankar P. Pandit, M.A. ... ... ... ... | 2 | 2 | 0 |
| No. VII.—Nâgojibhaṭṭa's Paribhâshendusekhara, Edited and explained by Dr. F. Kielhorn. Part II. (Translation and Notes), Paribhâshâs I.—XXXVII. ... ... ... ... ... ... ... ... | 0 | 8 | 0 |
| No. VIII.—The Raghuvaṁśa of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S. P. Pandit, M.A. Part II., Cantos VII.—XIII. ... ... ... ... ... ... ... ... | 0 | 12 | 0 |
| No. IX.—Nâgojibhaṭṭa's Paribhâshendusekhara. Edited and explained by Dr. F. Kielhorn. Part II. (Translation and Notes), Paribhâshâs XXXVIII.—LXIX. ... ... ... ... ... ... ... ... | 0 | 8 | 0 |
| No. X.—The Daśakumâracharita of Daṇḍin, Part I. Edited, with Critical and explanatory Notes, by Dr. G. Bühler ... ... ... | 0 | 8 | 0 |
| No. XI.—The Nîtiśataka and Vairâgyaśataka of Bhartṛihari, with extracts from two Sanskrit Commentaries. Edited, with Notes, by Kâshinâth Trimbak Telang, M.A. (copies not availabl.) | | | |
| No. XII.—Nâgojibhaṭṭa's Paribhâshendusekhara. Edited and explained by Dr. F. Kielhorn. Part II. (Translation and Notes), Paribhâshâs LXX.—CXXII. ... ... ... ... ... ... ... ... | 0 | 8 | 0 |
| No. XIII.—The Raghuvaṁśa of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S. P. Pandit, M. A. Part III., Cantos XIV.—XIX. ... ... ... ... ... ... ... ... | 0 | 8 | 0 |
| No. XIV.—Vikramâṅkadeva-Charita. Life of king Vikramâditya Tribhuvanamalla of Kalyâṇa, composed by his Vidyâpati Bilhaṇa. Edited, with an Introduction, by Dr. G. Bühler (copies not available.) | | | |
| No. XV.—Mâlatî-Mâdhava: a Drama by Bhavabhûti. Edited, with Critical and Explanatory Notes, by Dr. R. G. Bhandarkar, M. A. (Second edition in the press.) | | | |
| No. XVI.—Vikramorvaśî: a Drama by Kâlidâsa. Edited with Notes, by Shankar P. Pandit, M. A. (under revision.) | | | |

| | Rs. | a. | p. |
|---|---|---|---|
| No. XVII.—Hemachandra's Deśînâmamâlâ. Edited, with Critical Notes, a Glossary and a Historical Introduction, by Professor R. Pischel and Dr. G. Bühler, Part I. Text and Critical Notes by Professor Pischel ... ... ... ... ... ... ... | 1 | 0 | 0 |
| No. XVIII.—Vyâkaraṇa-Mahâbhâshya of Patañjali. Edited by Dr. F. Kielhorn. Vol. I. complete, Parts I. II. and III. | 9 | 0 | 0 |
| No. XIX. Ditto ditto by ditto. Vol. I. Part II. ... ... ... | 1 | 0 | 0 |
| No. XX. Ditto ditto by ditto. Vol. I. Part III. ... ... ... | 1 | 0 | 0 |
| No. XXI. Ditto ditto by ditto. Vol. II. Part I. ... ... ... | 1 | 0 | 0 |
| No. XXII. Ditto ditto by ditto. Vol. II. Part II. ... ... ... | 1 | 0 | 0 |
| No. XXIII. Vâsishṭhadharmaśâstram. Edited, with Notes, by Dr. A. A. Führer ... ... ... ... ... ... ... ... ... | 0 | 8 | 0 |
| No. XXIV.—Kâdambarî by Bâṇa and his son. Vol. I. Sanskrit Text, complete. Edited by Dr. P. Peterson ( copies not available. ) | | | |
| Ditto Vol. II. Introduction and Notes, by do. ... ... ... | 2 | 0 | 0 |
| No. XXV.—Kîrti-Kaumudî. Edited, with Notes, by Prof. A. V. Kathavaté. ( copies not available. ) | | | |
| No. XXVI.—Vyâkaraṇa-Mahâbhâshya of Patañjali. Edited by Dr. F. Kielhorn. Vol. II. Part III. ... ... ... ... ... | 1 | 0 | 0 |
| No. XXVII.—Mudrârâkshasa, by Viśâkhadatta, with the Commentary of Dhuṇḍhirâja. Edited, with Notes, by K. T. Telang ( copies not available. ) | | | |
| No. XXVIII.—Vyâkaraṇa-Mahâbhâshya of Patañjali. Edited by Dr. F. Kielhorn. Vol. III. Part I. ... ... ... ... ... | 1 | 0 | 0 |
| No. XXIX.—Ditto do. of do. by do. Vol. III. Part II. ... ... | 1 | 0 | 0 |
| No. XXX.—Ditto do. of do. by do. Vol. III. Part III. ... ... | 1 | 0 | 0 |
| No. XXXI.—Subhâshitâvali of Vallabhadeva. Edited by Dr. P. Peterson and Pandit Durgâprasâd ... ... ... ... ... ... | 2 | 8 | 0 |
| No. XXXII.—Tarka-Kaumudî of Laugâkshi Bhâskara. Edited by Professor M. N. Dvivedi ... ... ... ... ... ... | 0 | 12 | 0 |
| No. XXXIII.—Hitopadeśa of Nârâyaṇa. Edited by Dr. P. Peterson ... | 0 | 14 | 0 |
| No. XXXIV.—The Gaudavaho, by Vâkpati. Edited by Shankar P. Pandit. | 8 | 0 | 0 |
| No. XXXV.—Mahânârâyaṇa Upanishad. Edited by Colonel G. A. Jacob. | 0 | 7 | 0 |
| No. XXXVI.—University Selections of Hymns from the Rigveda. Edited by Dr. P. Peterson ... ... ... ... ... ... ... | 4 | 0 | 0 |
| No. XXXVII.—Śâriṅgadhara paddhati. Edited by Dr. P. Peterson. Vol. I. | 8 | 0 | 0 |
| No. XXXVIII.—Naishakarmyasiddhi. Edited by Col. G. A. Jacob... | 2 | 0 | 0 |
| No. XXXIX.—A Concordance to the principal Upanishads and Bhagvadgîtâ, by the same author... ... ... ... ... ... | 8 | 0 | 0 |
| No. XL.—Eleven Atharvaṇa Upanishads, with Dîpikâs, by the same author ... ... ... ... ... ... ... ... ... | 2 | 8 | 0 |

| | Rs. | a. | p. |
|---|---|---|---|
| No. XLI.—Handbook to the Study of the Ṛigveda, by Dr. P. Peterson. Part I ... ... ... ... ... ... ... ... ... | 8 | 0 | |
| No. XLII.—The Daśakumaracharita of Daṇḍin, Part II. ( completing Dr. Bühler's Edition ). Edited with Critical and Explanatory Notes by Dr. P. Peterson ... ... ... ... ... ... ... ... | 0 | 8 | 0 |
| No. XLIII.—Handbook to the Study of the Ṛigveda. by Dr. P. Peterson. Part II. comprising the Seventh Maṇḍala with the Commentary of Sâyana ... ... ... ... ... ... | 5 | 0 | 0 |
| No. XLIV.—Aphorisms of the Sacred Law of the Hindus, an Index of the Sutras and the various Readings of the Hiraṇyakeshî-Dharmasûtra. by Dr. G. Bühler. Part I. ... ... ... ... ... | 2 | 12 | 0 |
| No. XLV.—Râjataraṅgiṇî. Edited by Pandit Durgâprasâd, Part I. containing the first 7 (seven) Taraṅgas ... ... ... ... | 8 | 0 | 0 |
| No. XLVI.—Patañjali's Yogasûtras. Edited with the Scholium of Vyâsa and the Commentary of Vâchâspati, by Mahâmahopâdhyâya Râjârâm Shâstrî Bodas ... ... ... ... ... ... ... ... | 3 | 4 | 0 |
| No. XLVII.—Pârâśara Dharma Samhitâ with the Commentary of Sâyana Mâdhavâcharya, Vol I. Part I. Edited by Pandit Vâman Shâstrî Islâmpurkar ... ... ... ... ... ... ... | 4 | 4 | 0 |
| No. XLVIII.—Ditto do. of do. by do. Vol. I. Part II... ... ... | 4 | 0 | 0 |
| No. XLIX.—Nyâyakośa. 2nd Edition. Edited by Mahâmahopâdhyâya Bhîmâchârya Zalkikar ... ... ... ... ... ... | 12 | 0 | 0 |
| No. L.—Âpastamba Dharmasûtra, Part II. Edited by Dr. G. Bühler ... | 1 | 8 | 0 |
| No. LI.—Râjataraṅgiṇî. Edited by Pandit Durgâprasâd, Vol. II. Taraṅgas VIII... ... ... ... ... ... ... ... | 2 | 8 | 0 |
| No. LII.—Mrichchakatika. Edited with two commentaries & various readings, by Mr. N. B. Godbole ... ... ... ... ... | 8 | 8 | 0 |
| No. LIII.—Navasâhasânkacharita. Part I. Edited by Pandit Vâman Shâstri Islâmpurkar ... ... ... ... ... ... ... | 8 | 4 | 0 |

# WORKS IN THE PRESS.

---

Harshacharita, edited by Dr. A. A. Führer.

Atharva-Veda, edited by Mr. S. P. Pandit. Vols. III. & IV.

Pârâśara Smṛiti, with the Commentary of Sâyana-Mâdhavâchârya, Vols. I & III., by Messrs. Vâman Shâstri Islâmpurkar and Shâmrao Viṭhal.

Kumârapâlacharita, by Mr. S. P. Pandit.

Rekhâ Gaṇita, by Mr. H. H. Dhruva.

Tarkasaṅgraha, by Mr. Y. V. Âthalye.

Padmagupta's Navasâhasânkacharita, Part II., by Messrs. Vâman Shâstri Islâmpurkar and S. R. Bhândârkar.

---

# WORKS UNDERTAKEN.

---

An additional Part of the Vyâkaraṇa-Mahâbhâshya of Patañjali, containing an introduction and indices, by Dr. F. Kielhorn.

Kâvya-prakâśa, by Professor A. V. Kâthavate.

Shatprâbhṛitâdi-âṭikâ, by Mr. K. B. Pâṭhak.

Uttararâmacharita, by Dr. R. G. Bhândârkar and Mr. S. R. Bhândârkar.

Keśava Miśra's Tarkabhashya, with the Commentary of Chinnabhaṭṭa, edited with Notes, Critical and Explanatory, by Dr. R. G. Bhândârkar.

Varadarâja's Târkikarakshâ, with the Perpetual Commentary, edited with Notes, Critical and Explanatory, by Dr. R. G. Bhândârkar.

Kṛishṇamiśra's Prabodhachandrodaya, with a Commentary and Notes, edited by Mr. Shrîdhar Ganesh Joshi.

Syâdvâdamañjarî of Hemachandra, by Mr. Manilal N. Dvivedi.

Bhaṭṭi Kâvya, by Mr. Kamalâśankar P. Trivedi.

An Index to the Taittirîya Saṁhitâ, by Mr. M. M. Kunte.

Hemchandra's Dvyâśraya Kośa, by Mr. K. H. Dhruva.

Govt. C. Book Depôt,

*Bombay, 30th November* 1895.

